त्तरपदप्रकृतिस्वरेणांतोदात्तः । विभक्तिस्वरः पूर्ववत् । होतृशब्दस्तृन्प्रत्ययांतो नित्स्वरेणाद्युदात्तः । स्वरितप्रचयौ पूर्ववत् । रत्नशब्दो नव्विषयस्यानिसंतस्येत्याद्युदात्तः । तथा चाम्नायते । रत्नं धातेति । रत्नानि दधातीति विग्रहः । समासत्वादंतोदात्तो रत्नधाशब्दः । यद्वा कृदुत्तरपदप्रकृतिस्वरः । तमप्प्रत्ययस्य पित्स्वरेणानुदात्ते सति स्वरितप्रचितौ । संहितायामाद्याक्षरस्य प्रचयो द्वितीयाक्षरस्य सन्नतरत्वमिति ।

वेदावतार आद्याया ऋचो ऽर्थश्च प्रपंचितः ।
विज्ञातं वेदगांभीर्यमथ संक्षिप्य वर्ण्यते ॥

आग्नेयसूक्तस्य द्वितीयामृचमाह ।

अ॒ग्निः पूर्वे॑भि॒र्ऋषि॑भि॒रीड्यो॒ नूत॑नैरु॒त ।
स दे॒वाँ एह व॑क्षति ॥ २ ॥

अ॒ग्निः पूर्वे॑भिः ऋषि॑ऽभिः ईड्यः॑ नूत॑नैः उ॒त ।
सः दे॒वान् आ इ॒ह व॒क्ष॒ति॒ ॥ २ ॥

अयमग्निः पूर्वेभिः पुरातनैः भृग्वंगिरःप्रभृतिभिः ऋषिभिरीड्यः स्तुत्यः नूतनैरुत इदानींतनैरस्माभिरपि स्तुत्यः । सो ऽग्निः स्तुतः सन्निह यज्ञे देवान्हविर्भुज आ वक्षति । वह प्रापण इति धातुः । आवहत्वित्यर्थः ।

पूर्वेभिरित्यत्र बहुलं छंदसीति भिस ऐसादेशाभावः । पूर्व पर्व मर्व पूरण इति धातुः । पुर्वतिधातोरन्प्रत्यय औणादिकः । इन्प्रत्ययांत ऋषिशब्द ऋष्यंधकेति निपातनाल्लघूपधगुणाभावः । क्विप्प्रत्ययो वात्र ज्ञेयः । तौ शब्दौ नित्स्वरेणाद्युदात्तौ । ईड्यशब्दस्य ण्यत्प्रत्ययांतत्वात्तित्स्वरितमिति स्वरिते शेषानुदात्तत्वे च प्राप्ते तदपवादत्वेनेडवंदेत्यादिनाद्युदात्तत्वम् । नवशब्दस्य नू इत्यादेशस्तनन्प्रत्ययश्च महावार्तिके विहितः । ततो नित्स्वरेणाद्युदात्तः । अवशिष्टस्वरा अग्न्यादिषु नूतनांतेषु पूर्ववदुन्नेयाः । उतशब्दो यद्यपि विकल्पार्थे प्रसिद्धस्तथापि निपातत्वेनानेकार्थत्वादौचित्येनात्र समुच्चयार्थो द्रष्टव्यः । उच्चावचेष्वर्थेषु निपतंतीति निपातत्वम् । तर्हि निपाता आद्युदात्ता इत्युकारस्योदात्तः प्राप्त इति चेत् । न । प्रातःशब्दवदंतोदात्तत्वात् । यथा प्रातःशब्दो ऽंतोदात्तत्वेनैव स्वरादिषु पठित एवमुतशब्दस्यापि पाठो द्रष्टव्यः स्वरादेराकृतिगणत्वात् । यद्वा । एवादीनामंत इत्यंतोदात्तः । स

इत्यत्र फिट्स्वरः। देवशब्दः पूर्ववत्। देवानित्यस्य नकारस्य संहितायां दीर्घादटीति रुत्वम्। अत्रानुनासिक इत्यनुवृत्तावातोऽटि नित्यमित्याकारः सानुनासिकः। भोभगो इति रोर्यकारः। स च लोपः शाकल्यस्येति लुप्यते। तस्यासिद्धत्वान्न पुनः संधिकार्यम्। आङो निपातत्वादाद्युदात्तत्वम्। इदमो ह्प्रत्यये सति निष्पन्नत्वादिहशब्दे प्रत्ययस्वरः। वहतिधातोर्लोडर्थे छांदसो लृट्। स्यप्रत्ययगतस्य यकारस्य लोपोऽपि छांदसः। यद्वा लेटि सिब्बहुलमिति सिप्प्रत्ययः। लेटोऽडाटावित्यडागमश्च। ततो वक्षतीति संपद्यते। तस्य तिङंतत्वान्निघातः। संहितास्वराः पूर्ववत्॥

आधाने तृतीयेष्टौ प्रथमाज्यभागस्यानुवाक्या सूक्तगता तृतीया। तां तृतीयामृचमाह।

अ॒ग्निना॑ र॒यिम॑श्नव॒त्पोष॑मे॒व दि॒वेदि॑वे।
य॒शसं॑ वी॒रव॑त्तमम्॥ ३॥

अ॒ग्निना॑ र॒यिं अ॒श्न॒व॒त् पोषं॑ ए॒व दि॒वेऽदि॑वे।
य॒शसं॑ वी॒रव॑त्ऽतमम्॥ ३॥

योऽयं होत्रा स्तुत्योऽग्निस्तेनाग्निना निमित्तभूतेन यजमानो रयिं धनमश्नवत्प्राप्नोति। कीदृशं रयिम्। दिवेदिवे पोषमेव प्रतिदिनं पुष्यमाणतया वर्धमानमेव। न तु कदाचिदपि क्षीयमाणम्। यशसं दानादिना यशोयुक्तम्। वीरवत्तममतिशयेन पुत्रभृत्यादिवीरपुरुषोपेतम्। सति हि धने पुरुषाः संपद्यंते।

रयिशब्दो मघमित्यादिधननामसु पठितः । तत्र फिट्स्वरः । अश्नोतेर्धातोर्लेटि व्यत्ययेन सिप् । इतश्च लोप इतीकारलोपः । लेटो ऽडाटावित्यडागमः । ततो ऽश्नवदिति भवति । तस्य निघातः । यशंतत्वात्पोषशब्द आद्युदात्तः । एवशब्दस्य निपातत्वे ऽप्येवादीनामंत इत्यंतोदात्तत्वम् । वकारांतादिवशब्दात्परस्याः सप्तम्याः सुपां सुलुगित्यादिना शेभावे सति सावेकाच इत्यादिना ऊडिदंपदादीत्यादिना वा तस्योदात्तत्वम् । नित्यवीप्सयोरिति द्विर्भावे सत्युत्तरभागस्यानुदात्तं चेत्यनुदात्तत्वम् । यशो ऽस्यास्तीति विग्रहे सत्यर्शआदिभ्यो ऽजित्यच्प्रत्ययः । चित्स्वरं व्यत्ययेन बाधित्वा मध्योदात्तत्वम् । फिट्स्वरेणांतोदात्ताद्वीरशब्दादुत्तरयोर्मतुमपोः पित्वादनुदात्तत्वम् ॥

अभिप्लवषडहस्य मध्यवर्तिषूक्थ्येषु तृतीयसवने मैत्रावरुणस्याग्ने यं यज्ञमित्यादिको वैकल्पिको ऽनुरूपस्तृचः । एतच्च सप्तमाध्याय एह्यूष्वित्यादिखंडे सूत्रितम् । अग्निं वो वृधंतमग्ने यं यज्ञमध्वरमिति । तस्मिंस्तृचे या प्रथमा सा सूक्ते चतुर्थी । तामेतां चतुर्थीमृचमाह ।

अग्ने॒ यं य॒ज्ञम॑ध्व॒रं वि॒श्वतः॑ परि॒भूरसि॑ ।
स इद्दे॒वेषु॑ गच्छति ॥ ४ ॥

अग्ने॑ यं य॒ज्ञं अ॒ध्व॒रं वि॒श्वतः॑ प॒रि॒ऽभूः असि॑ ।
सः इत् दे॒वेषु॑ ग॒च्छ॒ति॒ ॥ ४ ॥

हे अग्ने यं यज्ञं विश्वतः सर्वासु दिक्षु परिभूः परितः प्राप्तवानसि स इत् स एव यज्ञो देवेषु तृप्तिं जनयितुं स्वर्गं

गच्छति । प्राच्यादिचतुर्दिगंतेष्वाहवनीयमार्जालीयगार्हपत्याग्नीध्रीयस्थानेष्वग्निरस्ति । परिशब्देन होत्रियादिधिष्ण्यव्याप्तिर्विवक्षिता । कीदृशं यज्ञम् । अध्वरं हिंसारहितम् । न ह्यग्निना सर्वतः पालितं यज्ञं राक्षसादयो हिंसितुं प्रभवंति ।

अग्निशब्दस्य षाष्ठिकमामंत्रिताद्युदात्तत्वम् । न विद्यते ध्वरो ऽस्येति बहुव्रीहौ नञ्सुभ्यामित्यंतोदात्तत्वम् । विश्वत इत्यत्र तसिलः प्रत्ययस्वरत्वं बाधित्वा पूर्ववर्णस्य लितीत्युदात्तत्वम् । परिभूरित्यत्राव्ययपूर्वपदप्रकृतिस्वरत्वे प्राप्ते तदपवादत्वेन कृदुत्तरपदप्रकृतिस्वरत्वम् । असीति तिङंतस्य यद्वृत्तान्नित्यमिति निघाताभावः ॥

अथ पंचमीमृचमाह ।

अ॒ग्निर्होता॑ क॒विक्र॑तुः स॒त्यश्चि॒त्रश्र॑वस्तमः ।
दे॒वो दे॒वेभि॒रा ग॑मत् ॥ ५ ॥

अ॒ग्निः होता॑ क॒वि॒ऽक्र॑तुः स॒त्यः चि॒त्रश्र॑वःऽतमः ।
दे॒वः दे॒वेभिः॑ आ ग॒म॒त् ॥ ५ ॥

अयमग्निर्देवो ऽन्यैर्देवैर्हविर्भोजिभिः सहा गमदस्मिन्यज्ञे समागच्छतु । कीदृशो ऽग्निः । होता होमनिष्पादकः । कविक्रतुः । कविशब्दो ऽत्र क्रांतवचनो न तु मेधाविनाम । क्रतुः प्रज्ञानस्य कर्मणो वा नाम । ततः क्रांतप्रज्ञः क्रांतकर्मा वा । सत्यः अनृतरहितः । फलमवश्यं प्रयच्छतीत्यर्थः । चित्रश्रवस्तमः । श्रूयत इति श्रवः कीर्तिः । अतिशयेन चित्रकीर्तियुक्तः ।

कविक्रतुश्चित्रश्रवस्तम इत्यत्रोभयत्र बहुव्रीहित्वात्पूर्वपदप्र-

कृतिस्वरत्वम् । लोडंतस्य गच्छत्विति शब्दस्य छत्वाभाव उकारलोपश्च छांदसः । ततो रूपं गमदिति भवति । स्पष्टमन्यत ।

इत्यृक्संहितायां वेदार्थप्रकाशे प्रथमकांडस्य प्रथमाध्याये प्रथमो वर्गः ॥

आग्नेये सूक्ते षष्ठीमृचमाह ।

यदंग दाशुषे त्वमग्ने भद्रं करिष्यसि ।
तवेत्तत्सत्यमंगिरः ॥ ६ ॥

यत् अंग दाशुषे त्वं अग्ने भद्रं करिष्यसि ।
तव इत् तत् सत्यं अंगिरः ॥ ६ ॥

अंगेत्यभिमुखीकरणार्थो निपातः । अंगाग्ने हे अग्ने त्वं दाशुषे हविर्दत्तवते यजमानाय तत्प्रीत्यर्थं यद्भद्रं वित्तगृहप्रजापशुरूपं कल्याणं करिष्यसि तद्भद्रं तवेत्तवैव । सुखहेतुरिति शेषः । हे अंगिरो ऽग्ने । एतच्च सत्यं न त्वत्र विसंवादो ऽस्ति । यजमानस्य वित्तादिसंपत्तौ सत्यामुत्तरक्रत्वनुष्ठानेनाग्नेरेव सुखं भवति । भद्रशब्दार्थं शाट्यायनिनः समामनंति । यद्वै पुरुषस्य वित्तं तद्भद्रं गृहा भद्रं प्रजा भद्रं पशवो भद्रमिति ।

अंगशब्दस्य निपातत्वे ऽव्ययभ्यादित्वादंतोदात्तत्वम् । दाश्वान्साह्वानिति सूत्रेण दाशृ दान इति धातोः क्वसुप्रत्ययो निपातितः । तत्र प्रत्ययस्वरः । आमंत्रितस्याग्निशब्दस्य पदात्परत्वेनाष्टमिकानुदात्तत्वं न शंकनीयम् । अपादादाविति पर्युदस्तत्वात् । ततः षाष्ठिकमाद्युदात्तत्वमेव । भद्रशब्दस्य नब्विषयत्वेनाद्युदात्तत्वप्रसक्तावपि भदि कल्याण इति धातोरुपरि

रकप्रत्ययेन निपातनादंतोदात्तत्वम् । अस्मिन्वाक्ये यच्छब्द-प्रयोगान्निपातैर्यद्यदिहंतेति निघाते प्रतिषिद्धे स्यप्रत्ययस्वरेण सति शिष्टेन करिष्यसिशब्द उपांत्योदात्तः । तवेत्यत्र युष्मदस्मदोर्ङसीत्याद्युदात्तत्वम् । अंगिरा अंगारा इति यास्कः । ऐतरेयिणोऽपि प्रजापतिदुहितृध्यानोपाख्याने समामनंति । येऽंगारा आसंस्ते ऽंगिरसोऽभवन्निति । तस्मादंगिरोनामकमुनिकारणत्वादंगाररूपस्याग्नेरंगिरस्त्वम् । अत्र पदात्परत्वेनाष्टमिकानुदात्तत्वम् ॥

अग्नीषोमप्रणयन उप त्वाग्न इत्यादिकोऽनुवचनीयस्तृचः । एतच्च ब्राह्मणे समाम्नातम् । उप त्वाग्ने दिवेदिव उप प्रियं पनिप्नतमिति तिस्रश्चैकां चान्वाहेति । तस्मिंस्तृचे या प्रथमा सा सूक्ते सप्तमी । तामेतां सप्तमीमृचमाह ।

उप॑ त्वाग्ने दि॒वेदि॑वे॒ दोषा॑वस्तर्धि॒या व॒यम् ।
नमो॒ भर॑न्त॒ एम॑सि ॥ ७ ॥

उप॑ त्वा अ॒ग्ने॒ दि॒वेऽदि॑वे दोषा॑ऽवस्तः धि॒या व॒यम् ।
नम॑ः भर॑न्तः आ इ॒म॒सि ॥ ७ ॥

हे अग्ने वयमनुष्ठातारो दिवेदिवे प्रतिदिनं दोषावस्ता रात्रावहनि च धिया बुद्ध्या नमो भरंतो नमस्कारं संपादयंत उप समीपे त्वा एमसि त्वामागच्छामः ।

उपशब्दस्य निपातस्वरः । त्वामौ द्वितीयाया इति युष्मच्छब्दस्यानुदात्तस्त्वादेशः । दोषाशब्दो रात्रिवाची । वस्तरि-

त्यहर्वाची । द्वंद्वसमासे कार्तकौजपादित्वादाद्युदात्तः । सावे-
काच इति धियो विभक्तिरुदात्ता । नम इति निपातः । भरंत
इत्यत्र शपः पित्त्वाच्छतुर्लसार्वधातुकत्वाच्चानुदात्तत्वे सति धा-
तुस्वरः शिष्यते । इमसीत्यत्रेदंतो मसिरित्यादेशो निपातश्च ॥

अष्टमीमृचमाह ।

राजंतमध्वराणां गोपामृतस्य दीदिविम् ।
वर्धमानं स्वे दमे ॥ ८ ॥

राजंतं अध्वराणां गोपां ऋतस्य दीदिविम् ।
वर्धमानं स्वे दमे ॥ ८ ॥

पूर्वमंत्रे त्वामुपैम इत्यग्निमुद्दिश्योक्तम् । कीदृशं त्वाम् ।
राजंतं दीप्यमानम् । अध्वराणां राक्षसकृतहिंसारहितानां
यज्ञानां गोपां रक्षकम् । ऋतस्य सत्यस्यावश्यंभाविनः कर्म-
फलस्य दीदिविं पौनःपुन्येन भृशं वा द्योतकम् । आहुत्याधा-
रमग्निं दृष्ट्वा शास्त्रप्रसिद्धं कर्मफलं स्मर्यते । स्वे दमे स्वकी-
यगृहे यज्ञशालायां हविर्भिर्वर्धमानम् ।

राजंतं वर्धमानमित्यत्रोभयत्र पूर्ववद्धातुस्वरः शिष्यते ।
दीदिविशब्दस्याभ्यस्तानामादिरित्याद्युदात्तत्वम् । दमशब्दो
वृषादित्वादाद्युदात्तः ॥

नवमीमृचमाह ।

स नः पितेव सूनवे ऽग्ने सूपायनो भव ।
सचस्वा नः स्वस्तये ॥९॥

सः नः पिताऽइव सूनवे अग्ने सुऽउपायनः भव ।
सचस्व नः स्वस्तये ॥९॥

हे अग्ने स त्वं नो ऽस्मदर्थं सूपायनः शोभनप्राप्तियुक्तो भव । तथा नो ऽस्माकं स्वस्तये विनाशराहित्यार्थं सचस्व समवेतो भव । तत्रोभयत्र दृष्टांतः । यथा सूनवे पुत्रार्थं पिता सुप्रापः प्रायेण समवेतो भवति तद्वत् ।

अस्मच्छब्दादेशस्य न इत्येतस्यानुदात्तं सर्वमित्यनुदात्तत्वम् । चादयो ऽनुदात्ता इतीवशब्दो ऽनुदात्तः । इवेन नित्यसमासः पूर्वपदप्रकृतिस्वरत्वं वक्तव्यमिति समस्तः पितेवेति शब्दो मध्योदात्तः । शोभनमुपायनं यस्येति बहुव्रीहौ नञ्सुभ्यामित्यंतोदात्तत्वम् । सचस्वेत्यत्र पदात्परत्वं नास्तीति न निघातः । लसार्वधातुकानुदात्तत्वे सति धातुस्वरावशेषः ।

इति प्रथमस्य प्रथमे द्वितीयो वर्गः ॥

अग्निमीळ इत्यादिसूक्तमग्निष्टोमस्य प्रातरनुवाके यथा विनियुक्तं तथा वायवा याहीत्यादयस्तृचाः प्रउगशस्त्रे विनियुक्ताः । तत्रेदं चिंत्यते । शस्त्रं किं देवतास्मरणरूपं संस्कारकर्म किं वा प्रधानकर्मेति । अत्र पूर्वपक्षं जैमिनिः सूत्रयामास ।

स्तुतशस्त्रयोस्तु संस्कारो याज्यावद्देवताभिधानत्वात् ।

आज्यैः स्तुवते पृष्ठैः स्तुवते प्रउगं शंसति निष्केवल्यं शंस-

नीति श्रूयते। तत्र स्तुतिः शंसनं च गुणिनिष्ठगुणाभिधानम्। इंद्रस्य नु वीर्याणि प्र वोचमित्यत्र दृष्टत्वात्। एवं सति याज्यान्यायेन गुणिन्या देवताया अभिधायकत्वेन स्तुतशस्त्रयोः संस्काररूपत्वमभ्युपेयम्। याज्यायास्तद्रूपत्वं दशमाध्यायस्य चतुर्थपादे दृष्टार्थलाभेन निर्णीतम्। तद्वदत्रापि। तुशब्दः प्रधानकर्मत्वं व्यावर्तयति।

सिद्धांती तं पक्षं दूषयति।

अर्थेन त्वपकृष्येत देवतानामचोदनार्थस्य गुणभूतत्वात्।

तुशब्देन संस्कारत्वं वारयति। संस्कारपक्षे प्रयोजनवशेन मंत्रः स्वस्थानादपकृष्येत। कुतः। मंत्रगतं देवतावाचकं यदिंद्रादि नामास्ति तच्चोदनया मंत्ररूपया प्रतिपाद्यस्य देवतारूपस्यार्थस्य गुणभूतम्। तस्माद्यत्र प्रधानभूतदेवतास्ति तत्र गुणभूतो मंत्रो नेतव्यः। तद्यथा। माहेंद्रग्रहसंनिधावभि त्वा शूरेत्ययं प्रगाथ आम्नातः। स चेंद्रं प्रकाशयति न तु महेंद्रम्। ततो यत्रैंद्रं कर्म तत्रायं प्रगाथोऽपकर्षणीयः। तथा सति क्रमसंनिधी बाध्येयाताम्।

तदेतत्सिद्धांतिनाभिहितं दूषणं पूर्वपक्षी समाधत्ते।

वशावद्वा गुणार्थं स्यात्।

वाशब्दः प्रगाथस्यान्यत्र नयनं वारयति। मंत्रे यदेतदिंद्रशब्दाभिधानं तदेतन्महत्त्वगुणोपलक्षणार्थं स्यात्। यथा सा वा एषा सर्वदेवत्या यदजा वशा वायव्यामा लभेतेत्यत्राजावशाशब्देन चोदिते कर्मणि छागशब्देन केवलेन युक्ता निगमा वशात्वगुणमप्युपलक्षयंति तद्वत्। तस्मान्महत्त्वगुणयुक्ते चोदिते कर्मणि निर्गुणेनेंद्रशब्देनाभिधानमविरुद्धम्। लोके पि

महाराजे केवलराजशब्दप्रयोगमपि पश्यामः ।

तदेतत्समाधानं सिद्धांती दूषयति ।

न श्रुतिसमवायित्वात् ।

यदुक्तं वशान्यायेन राजन्यायेन वास्य ग्रहस्येंद्रो देवता युज्यत इति तन्न । देवतात्वस्य तद्धितश्रुतिसमवायित्वात् । माहेंद्रग्रह इत्यत्र सास्य देवतेत्यस्मिन्नर्थे महेंद्राद्धाणौ चेति महेंद्रशब्दादण्प्रत्ययो विहितः । तस्मान्महेंद्र एव देवता न त्विंद्रः ।

विपक्षे बाधमाह ।

गुणश्चानर्थकः ।

यदींद्रो देवता स्यात्तदानीमैंद्रग्रह इत्येतावतैवार्थावगतौ माहेंद्र इति महत्त्वगुणो ऽनर्थकः स्यात् । चकारः पूर्वहेतुना समुच्चयार्थः ।

हेत्वंतरमाह ।

तथा याज्यापुरोरुचोः ।

इंद्रमहेंद्रयोर्देवतयोर्भेदे यथा महत्त्वगुणः सार्थकस्तथा याज्यापुरोनुवाक्ययोर्भेदो ऽप्यस्मिन्नेव पक्ष उपपद्यते । ऐंद्र सानसिमित्यादिके इंद्रस्य याज्यापुरोनुवाक्ये । महाँ इंद्रो य ओजसेत्यादिके महेंद्रस्य ।

पूर्वपक्षिणोक्ते वशादृष्टांते वैषम्यमाह ।

वशायामर्थसमवायात् ।

या वशा विधिवाक्ये श्रुता तस्या एव निगमेषु छागशब्देन व्यवहारो न विरुद्धः । छागत्वलक्षणस्यार्थस्य वशायां समवेतत्वात् । तच्च प्रत्यक्षेणोपलभ्यते । इंद्रमहेंद्रयोस्तु भेद उपपादितः । तस्माद्विषमो दृष्टांतः ।

एवं संस्कारपक्षे प्रगाथस्यैंद्रकर्मण्यपकर्षप्रसंगान्नाशयितुं स्तोत्रशस्त्रयोः प्रधानकर्मत्वमिति सिद्धांतिनो मतम् ।

पुनरपि पूर्वपक्षी तदेतन्मतं निराचष्टे ।

यत्रेति वार्थवत्त्वात्स्यात् ।

वाशब्दः सिद्धांतिमतव्यावृत्त्यर्थः । यत्रैंद्रं कर्म तत्र प्रगाथो नेतव्य इत्ययमेव पक्षः स्यात् । कुतः । अर्थवत्त्वात् । ऐंद्रो मंत्र इंद्रं प्रकाशयितुं समर्थ इत्यर्थवान्स्यात् । महेंद्रं तु प्रकाशयितुमसमर्थत्वादानर्थक्यं प्रगाथस्य प्रसज्येत । तस्माद्देवताप्रकाशनरूपसंस्कारकर्मत्वमेव स्तोत्रशस्त्रयोर्युक्तमिति स्थितः पूर्वपक्षः ।

अथ सिद्धांतमाह ।

अपि वा श्रुतिसंयोगात्प्रकरणे स्तौतिशंसती क्रियोत्पत्तिं विदध्याताम् ।

अपि वेत्यनेन संस्कारकर्मत्वं व्यावर्त्यते । स्तौतिधातुः शंसतिधातुश्चेत्येतावुभावपि स्वप्रकरण एव कस्याश्चित्प्रधानक्रियाया उत्पत्तिं विदध्याताम् । कुतः । श्रुतिसंयोगात् । तयोर्धात्वोर्वाच्यो ऽर्थः श्रुतिरित्युच्यते । तत्संयोगः प्रधानकर्मत्वे सिध्यति । तथा हि । गुणिनमुपसर्जनीकृत्य तन्निष्ठानां गुणानां प्राधान्येन कथनं स्तुतिः । यो देवदत्तः स चतुर्वेदाभिज्ञ इत्युक्ते सर्वे जनाः स्तुतिमवगच्छंति । गुणस्योपसर्जनत्वे तु न स्तुतिः प्रतीयते । यश्चतुर्वेदाभिज्ञस्तमाकारयेत्युक्ते स्तुतिं न मन्यंते किं त्वाह्वानप्राधान्यमेव बुध्यंते । एवं मंत्रेष्वपि या देवता सेयमीदृशैर्गुणैरुपेतेति गुणप्राधान्यविवक्षायां मुख्यः

स्तौतिधात्वर्थो विधीयते । त्वत्पक्षे तु येयमीदृग्गुणयुक्ता सेयं देवतेति देवतास्मरणस्य प्राधान्यादियं स्तुतिर्न स्यात् । ततः श्रुतिवशादेते प्रधानकर्मणी । तथा सति देवताप्रकाशने तात्पर्याभावादैंद्रो ऽपि प्रगाथः स्वप्रकरणगते माहेंद्रकर्मण्येवावतिष्ठते । यदि देवतास्मरणरूपं दृष्टं प्रयोजनं न लभ्येत तर्ह्यदृष्टमस्तु ।

प्रधानकर्मत्वे हेत्वंतरमाह ।

शब्दपृथक्त्वाच्च ।

द्वादशाग्निष्टोमस्य स्तोत्राणि द्वादश शस्त्राणीत्यत्र द्वादशशब्देन स्तोत्राणां पृथक्त्वमवगम्यते । देवताप्रकाशनपक्षे सर्वैरपि मंत्रसंघैः कृतस्य प्रकाशनस्यैकत्वेन द्वादशसंख्या न स्यात् । प्रधानकर्मणां त्वाज्यस्तोत्रपृष्ठस्तोत्रादिनामकानां भिन्नत्वाद्द्वादशत्वसंख्योपपद्यते । एवं शस्त्रवाक्ये ऽपि योज्यम् ।

विपक्षे बाधमाह ।

अनर्थकं च तद्वचनम् ।

अग्निष्टुतिः श्रूयते । आग्नेया ग्रहा भवंतीति । तत्रैव पुनरप्यन्यदुच्यते । आग्नेयीषु स्तुवते । आग्नेयीः शंसतीति । त्वत्पक्षे तद्वचनमनर्थकं स्यात् । चोदकप्राप्तेषु स्तोत्रशस्त्रमंत्रेष्वाग्नेयग्रहानुसारेण देवतापदस्योहे सत्याग्नेयत्वसिद्धेः । प्रधानकर्मपक्षे तु देवताप्रकाशनरूपत्वाभावेनोहाभावादाग्नेयमंत्रांतरविधिवचनमर्थवद्भवति ।

पुनरपि हेत्वंतरमाह ।

अन्यश्चार्थः प्रतीयते ।

संबद्धे वै स्तोत्रशस्त्रे इति ह्याम्नातम् । संबंधश्च द्वयोर्भवति

न त्वेकस्य । तस्मात्स्तोत्रशस्त्रयोरर्थभेदः प्रतीयते । स च संस्कारपक्षे न संभवति । देवताप्रकाशनरूपस्यार्थस्यैकत्वात् । प्रधानकर्मपक्षे तु स्तोत्रकर्म शस्त्रकर्म चेत्यर्थभेद उपपद्यते । यद्यपि ष्टुञ् स्तुतौ शंसु स्तुताविल्येकार्थौ तथापि प्रतिगीतमंत्रसाध्यं स्तोत्रमप्रतिगीतमंत्रसाध्यं शस्त्रमिति तयोर्विवेकः ।

हेत्वंतरमाह ।

अभिधानं च कर्मवत् ।

यथा प्रधानकर्माग्निहोत्रं जुहोतीति द्वितीयासंयोगेनाभिहितं तथा प्रउगं शंसतीत्यभिधीयते । अतस्तत्साद्दृश्यात्प्रधानकर्मत्वम् ।

हेत्वंतरमाह ।

फलनिर्वृत्तिश्च ।

स्तुतस्य स्तुतमसीति स्तोत्रानुमंत्रणमाम्नायवाक्यशेषे स्तोत्रफलमेवाम्नातम् । इंद्रियावंतो वनेमहि भुक्षीमहि प्रजामिषामिति । न तु देवताप्रयुक्तं फलमाम्नातम् । अतो न देवतासंस्कारः किं तु प्रधानकर्मेति स्थितम् ।

अनेन तु निर्णयेन प्रयोजनं विकृतिषूहाभावः । संस्कारपक्षे तु यस्यां विकृतौ देवतांतरं तत्र तद्वाचकं पदमूहनीयं स्यात् । तन्मा भूदिति प्रधानकर्मत्वमुक्तम् ।

एतच्च दशमाध्याये सूत्रितम् ।

ग्रहाणां देवतान्यत्वे स्तुतशस्त्रयोः कर्मत्वादविकारः स्यात् ।

अत्र संग्रहश्लोकौ ।

प्रउगं शंसतीत्यादौ गुणतो न प्रधानता ।
दृष्टा देवस्मृतिस्तेन गुणता स्तोत्रशस्त्रयोः ॥

स्मृत्यर्थत्वे स्तौतिशंस्योर्धात्वोः श्रौतार्थबाधनम् ।
तेनादृष्टमुपेत्यापि प्राधान्यं श्रुतये मतम् ॥

अग्निष्टोमे स्तुत्यादिने सूर्योदयात्पूर्वं प्रेषितो होता प्रातरनुवाकमनुब्रूयात् । एतच्चैतरेयब्राह्मणे प्रपंचितम् । देवेभ्यः प्रातर्यावभ्यो होतरनुब्रूहीत्याहाध्वर्युरित्यादि ब्राह्मणम् । तस्मिंश्च प्रातरनुवाकेऽग्निमीळ इत्यादिसूक्तमंतर्भूतम् । तच्च व्याख्यातम् ।

प्रातःसवने वैश्वदेवग्रहणादूर्ध्वं प्रउगशस्त्रं होत्रा शंसनीयम् । तच्च शस्त्रं वायवा याहीत्यादिसप्ततृचात्मकम् । एतच्च ब्राह्मणे ग्रहोक्थमित्यादिखंडे प्रपंचितम् । तथा पंचमाध्याये स्तोत्रमग्रे शस्त्रादित्यादिखंडे सूत्रितं च ।

अत्रेयमनुक्रमणिका । वायो वायव्यैंद्रवायवमैत्रावरुणास्तृचा अश्विना द्वादशाश्विनैंद्रवैश्वदेवसारस्वतास्तृचाः सप्तैताः प्रउगदेवता इति । अस्यायमर्थः । वायवा याहीत्यादिकं नवर्चं सूक्तम् । अग्निं नवेत्यतो नवशब्दस्यानुवृत्तेः । तत्राद्यस्तृचो वायुदेवताकः । द्वितीय इंद्रवायुदेवताकः । तृतीयो मित्रावरुणदेवताकः । अश्विनेत्यादिकं द्वादशर्चं सूक्तम् । तत्राद्यस्तृच आश्विनः । द्वितीय ऐंद्रः । तृतीयो वैश्वदेवः । चतुर्थः सारस्वतः । तेषु तृचेषु प्रतिपाद्या वाय्वादयः सरस्वत्यंताः सप्तसंख्याकाः प्रउगशस्त्रस्य देवता इति । मधुच्छंदसोऽनुवर्तनात्स एवर्षिः । तथैवानुवृत्त्या गायत्रं छंदः ।

वायव्ये तृचे प्रथमा ग्रहस्यैंद्रवायवस्यैका पुरोनुवाक्या । एतच्च ब्राह्मणे समाम्नातम् । वायव्या पूर्वा पुरोनुवाक्यैंद्रवायव्युत्तरेति । तथा सूत्रितं च । वायवा याहि दर्शतेंद्रवायू इमे सुता इत्यनुवाक्ये इति ।

वायव्यतृचे प्रथमामृचमाह ।

वाय॒वा या॑हि दर्शते॒मे सोमा॒ अरंकृताः ।
तेषां॑ पाहि श्रु॒धी हवं॑म् ॥ १ ॥

वायो॒ इति॑ आ या॒हि॒ द॒र्श॒त॒ इ॒मे सोमाः॑ अरं॑ऽकृताः ।
तेषां॑ पा॒हि॒ श्रु॒धि हवं॑म् ॥ १ ॥

दर्शत हे दर्शनीय वायो कर्मण्येतस्मिन्ना याहि आगच्छ । त्वदर्थमिमे सोमा अरंकृताः । अभिषवादिसंस्कारो ऽलंकारः । तेषां तान्सोमान् । यद्वा तेषामेकदेशमित्यध्याहारः । पाहि स्वकीयं भागं पिबेत्यर्थः । तत्पानार्थं हवमस्मदीयमाह्वानं श्रुधि शृणु ।

अत्र यास्कः। वायवा याहि दर्शनीयेमे सोमा अरंकृता अलंकृतास्तेषां पिब शृणु नो ह्वानमिति ।

दर्शतेत्यत्र भृमृदृशीत्यादिसूत्रेणातच्प्रत्यय औणादिकः । चित्त्वादंतोदात्तस्यामंत्रितानुदात्तत्वम् । अर्तिस्तुस्वित्यादिना मन्प्रत्ययांतस्य सोमशब्दस्य नित्स्वरः । अलमित्यत्र छांदसो रेफादेशः । अरंकृतशब्दे समासांतोदात्तत्वं बाधित्वाव्ययपूर्वपदप्रकृतिस्वरप्राप्तौ भूषणे ऽलमित्यलंशब्दस्य गतिसंज्ञायां गतिकारकेत्यादिना कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते तदपवादत्वेन गतिरनंतर इति पूर्वपदप्रकृतिस्वरत्वम् । निपातत्वादलंशब्द आद्युदात्तः । पाहीत्यत्र पिबादेशाभावश्छांदसः । श्रुधीत्यत्र श्रुशृण्वित्यादिना हेर्धिभावः । तिङ्ङ्तादुत्तरस्य निघातो नास्ति। सेर्ह्यपिच्चेति पित्त्वनिषेधादनुदात्ते निघा-

रिति प्रत्ययस्वरः । हवमित्यत्र ह्वयतिधातोर्बहुलं छंदसीति संप्रसारणे सत्युकारांतत्वादृदोरबित्यप्प्रत्ययः । तस्य पित्त्वादनुदात्ते सति धातुस्वरः शिष्यते । संहितायां श्रुधीत्यस्यान्येषामपि दृश्यत इति दीर्घः ॥

द्वितीयामृचमाह ।

वाय॑ उ॒क्थेभि॑र्जरन्ते॒ त्वाम॒च्छा॑ जरि॒तारः॑ ।
सु॒तसो॑मा अह॒र्विदः॑ ॥ २ ॥

वायो॒ इति॑ उ॒क्थेभिः॑ ज॒र॒न्ते॒ त्वां॑ अच्छ॑ ज॒रि॒तारः॑ ।
सु॒त॑ऽसो॑माः अ॒ह॒ः वि॒दः॑ ॥ २ ॥

हे वायो जरितारः स्तोतार ऋत्विग्यजमानास्त्वामच्छ त्वामभिलक्ष्य उक्थेभिराज्यप्रउगादिशस्त्रैर्जरंते स्तुवंति । कीदृशाः । सुतसोमाः । अभिषुतेन सोमेनोपेताः । अहर्विदः । अहःशब्द एकेनाह्ना निष्पाद्ये ऽग्निष्टोमादिक्रतौ वैदिकव्यवहारेण प्रसिद्धः । क्रत्वभिज्ञा इत्यर्थः ।

अर्चतिगायतीत्यादिषु चतुश्चत्वारिंशत्स्वर्चतिकर्मसु धातुषु जरते ह्वयतीति पठितम् । स्तुतेरप्यर्चनाविशेषत्वादौचित्येनात्र स्तुत्यर्थो जरतिधातुः । अच्छशब्दस्य संहितायां निपातस्य चेति दीर्घः । सुतसोमा इत्यत्र बहुव्रीहित्वात्पूर्वपदप्रकृतिस्वरः । अहर्विद इत्यत्र समासस्वरं बाधित्वा तत्पुरुषे तुल्यार्थेत्यादिना द्वितीयापूर्वपदप्रकृतिस्वरे प्राप्ते तदपवादत्वेन गतिकारकोपपदात्कृदिति कृदुत्तरपदप्रकृतिस्वरः ।

तृतीयामृचमाह ।

वायो तवं प्रपृंचती धेना जिगाति दाशुषे ।
उरूची सोमंपीतये ॥ ३ ॥

वायो इति तवं प्रऽपृंचती धेनां जिगाति दाशुषे ।
उरूची सोमंऽपीतये ॥ ३ ॥

हे वायो तव धेना वाक् सोमपीतये सोमपानार्थं दाशुषे दाश्वांसं दत्तवंतं यजमानं जिगाति गच्छति । हे यजमान त्वया दत्तं सोमं पास्यामीत्येवं वायुर्ब्रूत इत्यर्थः । कीदृशी धेना । प्रपृंचती प्रकर्षेण सोमसंपर्कं कुर्वती । सोमगुणं वर्णयंतीत्यर्थः । उरूची उरून्बहून्यजमानान् गच्छंती । ये ये सोमयाजिनस्तान्सर्वान्वर्णयंतीत्यर्थः ।

प्रपृंचतीत्यत्र शतुरनुम इति ङीबुदात्तः । श्लोको धारेत्यादिषु सप्तपंचाशत्सु वाङ्नामसु गणो धेना ग्नेति पठितम् । वर्तते ऽयत इत्यादिषु द्वाविंशाधिकशतसंख्येषु गतिकर्मसु गाति जिगातीति पठितम् । दाशुष इत्यत्र गत्यर्थकर्मणीति चतुर्थी । उरूचीत्यत्र गौरादित्वेन ङीषि कृते प्रत्ययस्वरः । सोमपीतय इत्यत्र बहुव्रीहित्वाभावे ऽपि व्यत्ययेन पूर्वपदप्रकृतिस्वरः ॥

ऐंद्रवायवे तृचे प्रथमामृचमाह ।

इंद्रवायू इमे सुता उप प्रयोभिरा गतम् ।
इंदवो वामुशंति हि ॥ ४ ॥

इंद्रवायू इति इमे सुताः उप प्रयःऽभिः आ गतम् ।
इंदवः वां उशंति हि ॥ ४ ॥

एतस्या ऋच ऐंद्रवायवग्रहे द्वितीयपुरोनुवाक्यारूपेण विशेषविनियोगः पूर्वमेवोक्तः ।

हे इंद्रवायू भवदर्थमिमे सोमाः सुताः अभिषुताः । तस्माद्युवां प्रयोभिरन्नैरस्मभ्यं दातव्यैः सह उपा गतमस्मत्समीपं प्रत्यागच्छतम् । हि यस्मादिंदवः सोमा वां युवामुशंति कामयंते तस्मादागमनमुचितम् ।

इंद्रवायूशब्दस्यामंत्रिताद्युदात्तत्वम् । प्रीणयंति भोक्तृनिति प्रयांस्यन्नानि । प्रीञ्धातोरंतर्भावितण्यर्थादसुन्प्रत्यये सति नित्स्वरः । गमिधातोर्लोण्मध्यमपुरुषद्विवचने बहुलं छंदसीति शपो लुकि सत्यनुदात्तोपदेशेत्यादिना मकारलोपः। ततो गतमिति भवति । उंदी क्लेदन इति धातोरुंदेरिच्चादेरित्युन्प्रत्ययः । आद्यक्षरस्येकारादेशः । तत इंदुशब्दस्य नित्स्वरः । सोमरसस्य द्रवत्वात्क्लेदनं संभवति । युष्मच्छब्दादेशस्य वामित्येतस्यानुदात्तं सर्वमपादादावित्यनुदात्तः । उशंतीत्यस्य निघाते हि चेति सूत्रेण प्रतिषिद्धे सति प्रत्ययस्वरः । हिशब्दस्य निपातस्वरः ॥

द्वितीयामृचमाह ।

वायविंद्रश्च चेतथः सुतानां वाजिनीवसू ।
तावा यातमुप द्रवत् ॥ ५ ॥

वायो इति इंद्रः च चेतथः सुतानां वाजिनीवसू इति वाजिनीऽवसू ।

तौ आ यातं उप द्रवत् ॥ ५ ॥

अत्र चकारेणान्यः समुच्चीयते। संनिहितत्वाद्वायुरेव। हे वायो त्वमिंद्रश्च युवामुभौ सुतानामभिषुतान्सोमान् चेतथः जानीथः। यद्वा। अभिषुतानां सोमानां विशेषमित्यध्याहारः। कीदृशौ युवाम्। वाजिनीवसू। वाजिनीशब्दो यद्यप्युषोनामसु पठितस्तथाप्यत्रासंभवान्न गृह्यते। वाजो ऽन्नम्। तद्यस्यां हविः-संततावस्ति सा वाजिनी। तस्यां वसत इति तौ वाजिनीवसू। आमंत्रितत्वादनुदात्तः। तौ तथाविधौ युवां द्रवत्क्षिप्रमुप समीप आ यातमागच्छतम्।

षड्विंशसंख्याकेषु क्षिप्रनामसु नु क्षिप्रं मक्षु द्रवदिति पठि-तम्। तत्र फिट्स्वरः॥

इति प्रथमस्य प्रथमे तृतीयो वर्गः॥

ऐंद्रवायवे तृचे तृतीयामृचमाह।

वायविंद्रश्च सुन्वत आ यातमुप निष्कृतम्।
मक्षि १ त्था धिया नरा ॥ ६ ॥

वायो इति इंद्रः च सुन्वतः आ यातं उप निःऽकृतम्।
मक्षु इत्था धिया नरा ॥ ६ ॥

हे वायो त्वमिंद्रश्च सुन्वतः सोमाभिषवं कुर्वतो यजमा-नस्य निष्कृतं संस्कर्तारं सोममुपा यातमागच्छतम्। नरा हे नरौ पुरुषौ पौरुषेण सामर्थ्येनोपेतौ युवयोरागतयोश्च सतोर्धि-यामुना कर्मणा मक्षु त्वरया संस्कारः संपत्स्यते। इत्था सत्यम्।

वायो इत्यस्यामंत्रितस्येति षाष्ठिकमाद्युदात्तत्वम् । इंद्रशब्द ऋज्रेंद्रेत्यादिना रन्प्रत्ययांतत्वेन निपातितो ञ्नित्यादिर्नित्यमित्याद्युदात्तः । चशब्दश्चादयो ऽनुदात्ता इत्यनुदात्तः । सुन्वत इत्यत्र शतुरनुमो नद्यजादीति विभक्तेरुदात्तत्वम् । निरित्येष समित्येतस्य स्थान इति यास्कः । कृतशब्द आदिकर्मणि कर्तरि क्तः । संस्कर्तुं प्रवृत्त इत्यर्थः । कुगतिप्रादय इति समासे ऽव्ययपूर्वपदप्रकृतिस्वरत्वे प्राप्ते थाथघञ्क्ताजबित्रकाणामित्यंतोदात्तः। गतिरनंतर इति तु निस उदात्तत्वं न भवति। तद्धि कर्मणि क्ते विहितं निष्करोतीति निष्कृदिति क्विबंतव्याख्याने तु गतिकारकोपपदात्कृदित्यृकार उदात्तः स्यात् । धिया । सावेकाचस्तृतीयादिरिति विभक्तिरुदात्ता । नरा । सुपां सुलुगित्यादिना संबोधनद्विवचनस्य डादेशः पदात्परत्वादामंत्रितस्येत्याष्टमिको निघातः ॥

मित्रं हुव इति मैत्रावरुणस्तृचो गवामयन आरंभणीये चतुर्विंशे ऽहनि प्रातःसवने मैत्रावरुणस्य स्तोत्रियः । तत्रैवाभिप्लवषडहे ऽपि विनियुक्तः । तथा चाश्वलायनेन चतुर्विंशे होताजनिष्टेत्यादिखंडे मित्रं वयं हवामहे मित्रं हुवे पूतदक्षमित्यादि सूत्रितम् । तथाह्याभिप्लवपृष्ठ्याहानीति खंडे परिशिष्टानावापानुद्धृत्य मित्रं वयं हवामहे मित्रं हुवे पूतदक्षमिति च । तस्य मैत्रावरुणतृचस्य प्रथमामृचमाह ।

मित्रं हुवे पूतदक्षं वरुणं च रिशादसम् ।
धियं घृताचीं साधंता ॥ ७ ॥

मि॒त्रं हु॑वे पू॒तद॑क्षं॒ वरु॑णं च रि॒शाद॑सम् ।
धियं॑ घृ॒ताचीं॒ साध॑न्ता ॥ ७ ॥

अहमस्मिन्कर्मणि हविःप्रदानाय पूतदक्षं पवित्रबलं मित्रं हुवे । तथा रिशादसं रिशानां हिंसकानामदसमत्तारं वरुणं च हुवे आह्वयामि । कीदृशौ मित्रावरुणौ । घृतमुदकमंचति भूमिं प्रापयति या धीर्वर्षणकर्म तां घृताचीं धियं साधंता साधयंतौ कुर्वंतौ ।

मित्रशब्दः पुल्लिंगः प्रातिपदिकस्वरेणांतोदात्तः । हुव इति ह्वयतेर्बहुलं छंदसीति शपो लुकि सति ह्वः संप्रसारणमित्यनुवृत्तौ बहुलं छंदसीति संप्रसारण उवङादेशः । तिङ्ङतिङ इति निघातः । पूतशब्दः प्रत्ययस्वरेणांतोदात्तः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । वरुणशब्दः कृवृदारिभ्य उनन्नित्युनन्प्रत्ययांतो नित्त्वादाद्युदात्तः । रिशंति हिंसंतीति रिशाः शत्रवः । इगुपधज्ञाप्रीकिरः क इति कः । प्रत्ययस्वरेणोदात्तः । तानत्तीति रिशादास्तम् । सर्वधातुभ्यो ऽसुन्नित्यसुन्प्रत्ययः । नित्स्वरेणोत्तरपदमाद्युदात्तम् । कृदुत्तरपदप्रकृतिस्वरेण स एवावशिष्यते । शेषनिघाते सत्येकादेश उदात्तेनोदात्त इति सवर्णदीर्घो ऽप्युदात्त एव । धीरित्यप इत्यादिषड्विंशतिकर्मनामसु पठितः । प्रातिपदिकस्वरेणांतोदात्तः । घृतमंचतीति घृताची । ऋत्विग्दधृगित्यादिना क्विन्यनिदितामिति नकारलोपः । अंचतेश्चोपसंख्यानमिति ङीप् । अच इत्यकारलोपे चाविति दीर्घत्वम् । घृतशब्दो नब्विषयस्यानिसंतस्येत्याद्युदात्तत्वं बाधित्वा घृतादीनां चेत्यंतोदात्तः । समासस्येत्यंतोदात्तस्यापवादकं तत्पुरुषे तुल्यार्थेति पूर्वपदप्रकृतिस्वरं बाधित्वा गतिकारकोपपदादित्युत्तरपद-

प्रकृतिस्वरेणांतोदात्तस्य धात्वकारस्य लोपे सत्यनुदात्तस्य च यत्रोदात्तलोप इति ङीप उदात्तत्वे प्राप्ते चाविति पूर्वपदांतोदात्तत्वम् । साधंता । राध साध संसिद्धावित्यस्मादंतर्भावितण्यर्थाल्लटः शत्रादेशे श्नुं बाधित्वा व्यत्ययेन शप् । अदुपदेशत्वादुपरि शतृप्रत्ययस्य लसार्वधातुकानुदात्तत्वम् । द्वितीयाद्विवचनस्य शपश्चानुदात्तौ सुप्पितावित्यनुदात्तत्वे धातोरिति धातुस्वर एव शिष्यते । सुपां सुलुगित्यादिना विभक्तेराकारादेशः ॥

द्वितीयामृचमाह ।

ऋतेन॑ मित्रावरुणावृतावृधावृतस्पृशा ।
क्रतुं॑ बृहंत॑माशाथे ॥ ८ ॥

ऋतेन॑ मि॒त्रा॒व॒रु॒णौ॒ ऋ॒त॒ऽवृ॒धौ॒ ऋ॒त॒ऽस्पृ॒शा॒ ।
क्रतुं॑ बृहंतं॑ आ॒शा॒थे॒ इति॑ ॥ ८ ॥

हे मित्रावरुणौ युवां क्रतुं प्रवर्तमानमिमं सोमयागमाशाथे आनशाथे व्याप्तवंतौ । केन निमित्तेन । ऋतेन अवश्यंभावितया सत्येन फलेन । अस्मभ्यं फलं दातुमित्यर्थः । कीदृशौ युवाम् । ऋतावृधौ । ऋतमित्युदकनाम सत्यं वा यज्ञं वेति यास्कः । उदकादीनामन्यतमस्य वर्धयितारौ । अत एव ऋतस्पृशा उदकादीन्स्पृशंतौ । कीदृशं क्रतुम् । बृहंतमंगैरुपांगैश्चातिप्रौढम् ।

ऋतशब्दो घृतादित्वादंतोदात्तः । मित्रावरुणावित्यत्र मित्रश्च वरुणश्चेति मित्रावरुणौ । देवताद्वंद्वे चेति पूर्वपदस्यानङादेशः । ऋतस्य वर्धयितारावित्यर्थे ऽंतर्भावितण्य-

र्थाद्वृधेः क्विप् । नहिवृतीत्यादिना पूर्वपदस्य दीर्घः । ऋतस्पृशा । सुपां सुलुगिति डादेशः । मित्रावरुणावित्याद्यामंत्रितत्रयस्य स्वस्वपूर्वपदात्परत्वादामंत्रितस्येत्याष्टमिको निघातः । ननु ऋतेनेत्येतस्य सुबामंत्रिते परांगवत्स्वर इति परांगवद्भावेनामंत्रितानुप्रवेशात्पादादित्वेन पदादपरत्वेन चाष्टमिकनिघाताभावादामंत्रितस्य चेत्याद्युदात्तेन भवितव्यमिति चेत् । न । परांगवद्भावस्य सुबामंत्रिताश्रयत्वेन पदविधित्वात्समर्थः पदविधिरिति नियमात् । इह च ऋतेन मित्रावरुणावित्येतयोराशाथे इत्याख्यातेनैवान्वयेन परस्परमसामर्थ्यात् । यत्र पुनः परस्परान्वयेन सामर्थ्यं तत्र परांगवद्भावात्पादादेराद्युदात्तत्वं भवत्येव । यथा मरुतां पितस्तदहं गृणामीति । मृग्रोरुतिरित्युतिप्रत्ययांतत्वेन पृश्नियै वै पयसो मरुतो जाता इत्यादावंतोदात्तो ऽपि हि मरुच्छब्दो मरुतां पितरित्यत्र सामर्थ्यात्परांगवद्भावादेवाद्युदात्तो जातः । प्रकृते त्वृतेनेत्यस्यासामर्थ्यादेव न परांगवद्भाव इति । ऋतावृधावित्यत्र द्वितीयामंत्रितस्य निघाते कर्तव्य आमंत्रितं पूर्वमविद्यमानवदिति प्रथमामंत्रितेनाविद्यमानवद्भवितव्यमिति चेत् । भवतु । अत एव तस्याव्यवधायकत्वादृतेनेति प्रथमपदात्परत्वेनैव द्वितीयामंत्रितं निहनिष्यते । यथा । इमं मे गंगे यमुन इत्यादौ गंगेशब्दस्याविद्यमानवद्भावे ऽपि तस्याव्यवधायकत्वादेव म इत्येतदेव पदमुपजीव्य यमुनेशब्दस्य निघातः। किं च । प्रकृते मित्रावरुणावित्यामंत्रितं सामान्यवचनम् । तस्य विशेषणतया विशेषवचनमृतावृधाविति । अतो नामंत्रिते समानाधिकरणे सामान्यवचनमिति पूर्वस्याविद्यमानवद्भावप्रतिषे-

धादपि निरंतरायो द्वितीयस्य निघातः। नन्वेवमप्यपादादावित्यनुवृत्तेर्ऋतावृधेत्यस्य द्वितीयपादादित्वान्न भवितव्यं निघातेन। अत एव हीमं मे गंग इत्यत्र शुतुद्रिपदस्य पदात्परस्यामंत्रितस्यापि पादादित्वादेवानिघातादाद्युदात्तत्वं जातम्। तद्वदत्रापि भवितव्यं वक्तव्यो वा विशेष इति। उच्यते। मित्रावरुणपदस्य सुबामंत्रित इति परांगवद्भावेन परानुप्रवेशादेव ऋतावृधेत्यस्य न पादादित्वम्। शुतुद्रिपदमपि तर्ह्येवमेव पूर्वस्य सरस्वतिपदस्य परांगवद्भावेन न पादादिरिति निहन्येतेति चेत्। न। परांगवद्भावस्तावत्सुबंतमामंत्रितं चाश्रित्य प्रवृत्तेः पदविधिः। अतस्तयोः सत्येव परस्परान्वये परांगवद्भावेन भवितव्यम्। समर्थः पदविधिरिति नियमात्। शुतुद्रिसरस्वतिपदयोश्च न परस्परेणान्वयः। किं तु सचतेत्यनेनेत्यसामर्थ्यान्न परांगवद्भावः। प्रकृते तु मित्रावरुणावृतावृधाविति द्वयोरपि सामानाधिकरण्येन परस्परान्वयादस्ति सामर्थ्यमिति भवितव्यं परांगवद्भावेन। यथा मरुतां पितरित्यत्रेति विशेषः। नन्वत एव तर्हि मित्रावरुणपदस्य परांगवद्भावेन पादादित्वादपादादाविति पर्युदासादामंत्रितनिघातो न स्यादिति चेत्। न। पूर्वं सुबंतं परं चामंत्रितमाश्रित्य यः स्वरः प्रवर्तते तत्र सुबामंत्रित इति परांगवद्भावः। भवति चैवंविध ऋतावृधपदनिघात इति। तत्र पूर्वस्य परांगवद्भावेनापादादित्वात्स प्रवर्तते। मित्रावरुणपदनिघातस्तु पूर्वमेव पदमुपजीवति। न परमामंत्रितमिति न परांगवद्भावः। ननु परांगवद्भाववन्निघातो ऽपि पदविधिरिति। ऋतेनेत्यनेनासामर्थ्यात्ततः पदात्परस्य मित्रावरुणपदस्य न स्यादिति चेत्। न। समानवाक्ये नि-

धातयुष्मदस्मदादिशा वक्तव्या इति नियाते पदविधावपि समा-
नवाक्यत्वमेव पर्याप्तं न पराङ्गवद्भाववत्परस्परान्वयो ऽपीत्यलम् ।
क्रतुम् । कृञः क्रतुः । प्रत्ययस्वरेणादिरुदात्तः । आशाथे
आनशाथे । छंदसि लुङ्लङ्लिट इति वर्तमाने लिट् । नुड-
भावश्छांदसः ॥

तृतीयामृचमाह ।

कवी नो मित्रावरुणा तुविजाता उरुक्षया ।
दक्षं दधाते अपसम् ॥ ९ ॥
कवी इति नः मित्रावरुणा तुविऽजातौ उरुऽक्षया ।
दक्षं दधाते इति अपसम् ॥ ९ ॥

मित्रावरुणावेतौ देवौ नो ऽस्माकं दक्षं बलमपसं कर्म च
दधाते पोषयतः । कीदृशौ । कवी मेधाविनौ । तुविजातौ बहू-
नामुपकारकतया समुत्पन्नौ । उरुक्षया बहुनिवासौ ।

विप्रो धीर इत्यादिषु चतुर्विंशतिसंख्याकेषु मेधाविनामसु
कविर्मनीषीति पठितम् । उरुतुविरित्येतौ शब्दौ द्वादशसु बहु-
नामसु पठितौ । ओजः पाज इत्यादिष्वष्टाविंशतिसंख्याकेषु
बलनामसु दक्षो विल्विति पठितम् । अपःशब्दः षड्विंशति-
संख्याकेषु कर्मनामसु पठितः ।

मित्रावरुणा । मित्रशब्दः प्रातिपदिकस्वरेणांतोदात्तः । व-
रुणशब्दो नित्स्वरेणाद्युदात्तः । द्वंद्वे देवताद्वंद्वे चेत्युभावव-
शिष्येते । तुविजातौ । बहूनामुपकारकतया तत्संबंधित्वेन
जाताविति षष्ठीसमासे समासांतोदात्तत्वम् । चतुर्थीसमासे ति

क्त चेति पूर्वपदप्रकृतिस्वरः स्यात् । उरूणां बहूनां क्षया-
वुरुक्षयौ । क्षि निवासगत्योरिति धातोः क्षियंत्यस्मिन्निति
क्षयः । अधिकरण एरजित्यच्प्रत्ययांतस्य चित इत्यंतो-
दात्तत्वे प्राप्ते क्षयो निवास इत्याद्युदात्तत्वं विहितम् । समासे
तु समासस्येत्यंतोदात्तत्वं बाधित्वा कृदुत्तरपदप्रकृतिस्वरेण
प्राप्तमुत्तरपदाद्युदात्तत्वम् । यद्यपि थाथादिस्वरेणांतोदात्तेन बा-
ध्यते तथापि परादिश्छंदसि बहुलमित्युत्तरपदाद्युदात्तत्वं
द्रष्टव्यम् । दक्षो दक्षतेरुत्साहकर्मणो घञ् । ञित्त्वादाद्युदात्तः ।
आप्यते फलमनेनेत्यपः कर्म । आपः कर्माख्यायां ह्रस्वो नुट्च-
त्यमन्नंतस्यापसस्पार इत्यादौ नित्त्वादाद्युदात्तस्याप्यपःश-
ब्दस्यात्र व्यत्ययेन प्रत्ययाद्युदात्तत्वम् ॥

इति प्रथमस्य प्रथमे चतुर्थो वर्गः ।

आश्विनस्तृचः प्रातरनुवाकस्याश्विने क्रतौ विनियुक्तः ।
तथा च सूत्रितम् । अथाश्विन एषो उषाः प्रातर्युजेति चतस्रो
ऽश्विना यज्वरीरिष इति । तत्र प्रथमामृचमाह ।

अश्विना यज्वरीरिषो द्रवत्पाणी शुभस्पती ।
पुरुभुजा चनस्यतम् ॥ १ ॥

अश्विना यज्वरीः इषः द्रवत्पाणी इति द्रवत्ऽपाणी
शुभःपती इति ।
पुरुऽभुजा चनस्यतम् ॥ १ ॥

हे अश्विनौ युवामिषो हविर्लक्षणान्यन्नानि चनस्यत-
मिच्छतम् । भुंजाथामित्यर्थः । यद्यपि चनःशब्दो ऽन्नवाची

तथापीष इत्यनेन सह नास्ति पुनरुक्तिदोषः । इच्छामुपल-क्षयितुं प्रयुक्तत्वात् । वक्तव्यमुवाच समूलकाषं कषतीत्यादौ यथा पुनरुक्त्यभावस्तद्वत् । कीदृशीरिषः । यज्वरीः याग-निष्पादिकाः । कीदृशावश्विनौ । द्रवत्पाणी हविर्ग्रहणाय द्रवद्भ्यां धावद्भ्यां पाणिभ्यामुपेतौ । शुभस्पती शोभनस्य कर्मणः पालकौ । पुरुभुजा विस्तीर्णभुजौ बहुभोजिनौ वा ।

अश्विना । आमंत्रितस्येति षाष्ठिकमाद्युदात्तत्वम् । य-ज्वरीः । यागकरणानामप्यन्नानामसिश्छिनत्तीतिवत्स्वव्यापारं कर्तृत्वविवक्षया सुयजोर्ङ्वनिबिति ङ्वनिप्प्रत्ययः । वनो र चेति ङीप् । तत्संनियोगेन रेफादेशः । प्रत्ययत्रयस्यानु-दात्तौ सुप्पिताविन्यनुदात्तत्वाद्धातुस्वर एवावशिष्यते । इषःश-ब्दे शसो ऽनुदात्तत्वात्प्रातिपदिकस्वर एव शिष्यते । द्रवंतौ धावंतौ पाणी ययोस्तयोः संबोधनं द्रवत्पाणी इति । तस्यामंत्रि-ताद्युदात्तत्वम् । न पुनराष्टमिको निघातः । अपादादाविति प्र-तिषेधात् । इष इति पूर्वपदस्य सुबामंत्रित इति परांगवद्भावेन मित्रावरुणावृतावृधावितिवदपादादित्वमिति चेत् । न । तत्र सामानाधिकरण्येन परस्परान्वयात् । इह त्विषो द्रवत्पाणी इत्य-नयोः सरस्वतिशुतुद्रिपदवदसामर्थ्येन प्रयुक्तत्वात् । शुभ इति शुभ शुंभ दीप्ताविन्यस्य संपदादित्वाद्भावे क्विबंतस्य षष्ठ्येकव-चनम् । षष्ठ्याः पतिपुत्रेति विसर्जनीयस्य सत्वम् । तस्य पती इत्यामंत्रिते परतः परांगवद्भावादामंत्रिताद्युदात्तत्वम् । न पुन-राष्टमिको निघातः । तस्मिन्कर्तव्ये द्रवत्पाणी इति पूर्व-स्यामंत्रितस्यामंत्रितं पूर्वमविद्यमानवदित्यविद्यमानवद्भावेन पादादित्वादपादादाविति प्रतिषेधात् । ननु मित्राव-

रुणावृतावृधावितिवन्नामंत्रिते समानाधिकरण इहाविद्यमानवद्भावप्रतिषेधेन भवितव्यमिति चेत् । न । मित्रावरुणपदं हि सामान्यवचनमिति युक्तस्तस्याविद्यमानवत्त्वप्रतिषेधः । द्रवत्पाणीपदं तु न तथेति वैषम्यात् । पुरुभुजौ । पुरू विस्तीर्णौ भुजौ ययोस्तौ । आमंत्रिताद्युदात्तत्वम् । सुपां सुलुगिति डादेशः । पुरु बहु भुंजाते इति वा । चनस्यतमित्यत्र चायतेरन्ने ह्रस्वश्चेति चायृ पूजानिशामनयोरित्यस्यासुन्प्रत्यय आकारस्य ह्रस्वे चालुकृष्टे नुडागमे च लोपो व्योर्वलीति यकारलोपे चनःशब्दो ऽन्ननामसु पठितः । तदात्मन इच्छतीति सुप आत्मनः क्यच् । सनाद्यंता इति धातुत्वाल्लोण्मध्यमद्विवचनम् । क्यचः प्रत्ययस्वरेणोदात्तत्वम् । शपैकादेशे कृत एकादेश उदात्तेनोदात्त इत्युदात्तः । उपर्याख्यातस्य लसार्वधातुकानुदात्तत्वे स्वरितत्वम् । न च तिङ्ङतिङ इति निघातः । पूर्वस्यामंत्रितस्याविद्यमानवद्भावेन पदादपरत्वात्पादादित्वाद्वा तदप्राप्तिः ॥

द्वितीयामृचमाह ।

अश्विना पुरुदंससा नरा शवीरया धिया ।
धिष्ण्या वनतं गिरः ॥ २ ॥

अश्विना पुरुऽदंससा नरा शवीरया धिया ।
धिष्ण्या वनतं गिरः ॥ २ ॥

अश्विना हे अश्विनौ युवां गिरो ऽस्मदीयाः स्तुतीर्धिया आदरयुक्तया बुद्ध्या वनतं संभजतं स्वीकुरुतम् । कीदृशाव-

श्विनौ पुरुदंससा बहुकर्माणौ षड्विंशतिसंख्याकेषु कर्मनामसु दंस इति पठितम् । नरा नेतारौ । धिष्ण्या धार्ष्ट्ययुक्तौ बुद्धिमंतौ वा । कीदृश्या धिया । शवीरया गतियुक्तया । अप्रतिहतप्रसरयेत्यर्थः ।

अश्विनेत्याद्यामंत्रितचतुष्टयस्य षाष्ठिकमामंत्रिताद्युदात्तत्वम् । पादादित्वान्नाष्टमिको निघातः । पुरुदंससेत्यपि हि पादादिरेव । आमंत्रितं पूर्वमविद्यमानवदिति पूर्वस्याविद्यमानवत्त्वात् । नामंत्रिते समानाधिकरण इति पूर्वस्य सामान्यवचनत्वेनास्य विशेषवचनत्वेन नाविद्यमानवत्त्वमिति चेत् । न । अश्विशब्दवत्पुरुदंसःशब्दस्याप्यश्विनोरेव रूढ्या प्रयुज्यमानतया सामान्यशब्दत्वात् । सामान्यवचनं नाविद्यमानवदित्युक्ते ऽर्थात्परस्य विशेषवचनत्वावगमात् । उभयोः सामान्यवचनत्वे पर्यायत्वेन पौनरुक्त्यात्सहाप्रयोग इति चेत् । न । गुणविशेषसंकीर्तनवत्प्रसिद्धानेकनामविशेषसंबंधसंकीर्तनस्यापि स्तुत्युपयोगेन सप्रयोजनत्वान्निष्प्रयोजनपुनर्वचनस्यैव पुनरुक्तत्वात् । अश्विपुरुदंसःशब्दयोरेकार्थवृत्तित्वे ऽपि पर्यायत्वादेव प्रवृत्तिनिमित्तभेदाभावेनासामानाधिकरण्यादपि नाविद्यमानवत्त्वप्रतिषेधः । भिन्नप्रवृत्तिनिमित्तानामेव ह्येकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम् । अश्विशब्दस्याश्विसंबंधो निमित्तं पुरुदंसःशब्दस्य तु बहुकर्मसंबंध इति प्रवृत्तिनिमित्तभेद इति चेत् । न । तद्धि द्वयं व्युत्पत्तिमात्रनिमित्तं न प्रवृत्तिनिमित्तम् । व्युत्पत्तिनिमित्तभेदमात्रेणापि सामानाधिकरण्याभिधाने वृक्षमहीरुहशब्दयोरपि तथात्वप्रसंगः । अत एव ईळे रंते ऽदिते सरस्वति प्रिये प्रेयसि महि विश्रुति । एतानि ते

अन्ये नामानीत्यत्र सहस्रतमीप्रशंसोपयोगित्वेनेडादिशब्दाना- मेतानि ते अन्ये नामानीति वचनेन पर्यायाणामप्यनेकविशि- ष्टनामसंबंधनिबंधस्तुत्यर्थत्वेनैव सहप्रयोगः । स्तुत्युपयोगेनैव व्युत्पत्तिनिमित्तभेदविवक्षायामपि पर्यायत्वेनासामानाधिकरण्या- देव नामंत्रित इति निषेधाभावादामंत्रितं पूर्वमविद्यमानवदिति पूर्वपूर्वस्याविद्यमानवत्त्वात्सर्वेषां पाष्ठिकमाद्युदात्तत्वम् । तद्व- त्प्रकृते ऽपि । कृशॄपृकटिपटिशौटिभ्य ईरन्नित्यत ईरन्नित्यनु- वृत्तौ बहुलवचनादन्यत्रापीत्यनेन शु श्रु गताविति धातोरीर- न्प्रत्यये कृते सति नित्त्वाच्छवीरयाशब्द आद्युदात्तः । धियेत्यत्र सावेकाच इति विभक्तिरुदात्ता । वनतमित्यत्र शपः पित्त्वाल्लो- ण्मध्यमद्विवचनस्य लसार्वधातुकत्वाच्च वन षण संभक्ताविति धातूदात्तत्वमेव शिष्यते । न च तिङ्ङतिङ इति निघातः पूर्वामंत्रितस्याविद्यमानत्वेन पादादित्वात् । गिरः । सुपो ऽनुदा- त्तत्वे प्रातिपदिकस्वरः शिष्यते ॥

तृतीयामृचमाह ।

दस्रा॑ यु॒वाक॑वः सु॒ता नास॑त्या वृ॒क्तब॑र्हिषः ।
आ या॑तं रुद्रवर्तनी ॥ ३ ॥

दस्रा॑ यु॒वाक॑वः सु॒ताः नास॑त्या वृ॒क्तऽब॑र्हिषः ।
आ या॒तं॒ रु॒द्र॒व॒र्त॒नी॒ इति॑ रुद्रऽवर्तनी ॥ ३ ॥

अत्राश्विनेत्यनुवर्तते । हे अश्विनावा यातमस्मिन्कर्मण्या- गच्छतम् । किमर्थमिति तदुच्यते । सुता युष्मदर्थं सोमा

अभिषुताः । तान्स्वीकर्तुमिति शेषः । कीदृशावश्विनौ । दस्रा शत्रूणामुपक्षयितारौ । यद्वा देववैद्यत्वेन रोगाणामुपक्षयितारौ । अश्विनौ वै देवानां भिषजाविति श्रुतेः । नासत्या । असत्यमनृतभाषणं तद्रहितौ । अत्र यास्कः । सत्यावेव नासत्याविन्यौर्णवाभः । सत्यस्य प्रणेतारावित्याग्रायण इति । रुद्रवर्तनी । रुद्रशब्दस्य रोदनं प्रवृत्तिनिमित्तम् । यदरोदीत्तद्रुद्रस्य रुद्रत्वमिति तैत्तिरीयाः । तद्यद्रोदयंति तस्माद्रुद्रा इति वाजसनेयिनः । रुद्राणां शत्रुरोदनकारिणां शूरभटानां वर्तनिर्मार्गो धाटीरूपो ययोस्तौ रुद्रवर्तनी । यथा शूरा धाटीमुखेन शत्रून्रोदयंति तद्वदेतावित्यर्थः । युवाकव इत्यभिषुतसोमानां विशेषणम् । वसतीवरीभिरेकधनाभिश्चाद्भिर्मिश्रिता इत्यर्थः । वृक्तबर्हिषः । वृक्तानि मूलैर्वर्जितानि बर्हींष्यास्तरणरूपाणि येषां सोमानां ते वृक्तबर्हिषः । यद्वा भरता इत्यादिष्वष्टस्वृत्विङ्नामसु वृक्तबर्हिष इति । तदानीं तृतीयार्थे प्रथमा । ऋत्विग्भिरभिषुता इत्यन्वयः ।

दस्रा । आमंत्रितस्येत्याद्युदात्तः । युवाकवः । यु मिश्रणे । युवंति मिश्रीभवंति वसतीवरीप्रभृतिभिः श्रयणद्रव्यैरिति युवाकवः । कठकषादिष्वगणितस्यापि यौतेर्बहुलग्रहणात्काकुप्रत्ययः । तस्य क्त्विवेन गुणाभावादुवङादेशः । प्रत्ययस्वरेणाकार उदात्तः । न विद्यते ऽसत्यमनयोरिति नासत्यौ । नभ्राण्नपान्नवेदानासत्येत्यादिना प्रकृतिवद्भावान्नञो नलोपाभावः । पादादित्वेन निघाताभावादामंत्रिताद्युदात्तत्वम् । वृक्तबर्हिषः । वृक्तं मूलैर्वर्जितं बर्हिरास्तीर्णं येषां सोमानां ते वृक्तबर्हिषः । पूर्वपदप्रकृतिस्वरेण क्तप्रत्ययस्वर एव शिष्यते । आ इत्यत्रो-

पसर्गश्चाभिवर्जमित्युदात्तः । रुद्रवर्तनी । आमंत्रितस्य चेत्यामंत्रितनिघातः ॥

ऐंद्रे तृचे प्रथमामृचमाह ।

इंद्रा याहि चित्रभानो सुता इमे त्वायवः ।
अण्वीभिस्तना पूतासः ॥ ४ ॥

इंद्र आ याहि चित्रभानो इति चित्रऽभानो
सुताः इमे त्वाऽयवः ।
अण्वीभिः तना पूतासः ॥ ४ ॥

चित्रभानो चित्रदीप्ते हे इंद्रास्मिन्कर्मण्या याहि आगच्छ । सुता अभिषुता इमे सोमास्त्वायवस्त्वां कामयमाना वर्तंते । अण्वीभिः । अग्रुव इत्यादिषु द्वाविंशतिसंख्याकेष्वंगुलिनामस्वण्व्य इति पठितम् । ऋत्विजामंगुलिभिः सुता इत्यन्वयः । किं च । एते सोमास्तना नित्यं पूतासः पूताः शुद्धाः । दशापवित्रेण शोधितत्वात् ।

इंद्रशब्दं यास्को बहुधा निर्वक्ति । इंद्र इरां दृणातीति वा इरां ददातीति वा इरां दधातीति वा इरां दारयति इति वा इरां धारयति इति वा इंदवे द्रवतीति वा इंदौ रमत इति वा इंधे भूतानीति वा तद्यदेनं प्राणैः समैंधंस्तदिंद्रस्येंद्रत्वमिति विज्ञायत इदंकरणादित्याग्रायण इदंदर्शनादित्यौपमन्यव इंदतेर्वैश्वर्यकर्मण इन्शत्रूणां दारयिता वा द्रावयिता वा दारयिता च यज्वनामिति । अस्यायमर्थः । दृ विदारण इति धातुः । इरामन्नमुद्दिश्य तन्निष्पादकजलसिद्ध्यर्थं दृणाति मेघं विदीर्णं करोतीतींद्रः ।

इदात् दान इति धातुः । इरामन्नं वृष्टिनिष्पादनेन ददा-तीतींद्रः । धाञ् पोषणार्थः । इरामन्नं तृप्तिकारणं सस्यं दधाति जलप्रदानेन पुष्णातीतींद्रः । इरामुत्पादयितुं कर्षकमुखेन भूमिं विदारयतीतींद्रः । पूर्वोक्तपोषणमुखेनेरां धारयति विना-शराहित्येन स्थापयतीतींद्रः । इंदुः सोमो वल्लीरसः । तदर्थं यागभूमौ द्रवति धावतीतींद्रः । इंदौ यथोक्ते सोमे रमते क्रीड-तीतींद्रः । ञि इंधी दीप्ताविति धातुः । भूतानि प्राणिदेहानिंधे जीवचैतन्यरूपेणांतः प्रविश्य दीपयतीतींद्रः । एतदेवाभिप्रेत्य वाजसनेयिन आमनंति । इंधो ह वै नामैष यो ऽयं दक्षिणेक्ष-न्पुरुषः । तं वा एतमिंधं संतमिंद्र इत्याचक्षते । परोक्षेण परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विष इति । तद्यदित्यादिकं ब्राह्मणांतरवाक्यम् । तत्तत्रेंद्रविषये निर्वचनमुच्यत इति शेषः । यद्यस्मात्कारणादेनं परमात्मरूपमिंद्रं देवं प्राणैर्वाक्चक्षुरा-दींद्रियैः प्राणापानादिवायुभिश्च सहितं समैंधन् । उपासका ध्यानेन सम्यक्प्रकाशितवंतः । तत्तस्मात्कारणादिंद्रनाम संपन्नम् । अस्मिन्पक्ष इध्यते दीप्यत इति कर्मणि व्युत्पत्तिः । आग्रायणनामको मुनिरिदंकरणादिंद्र इति निर्वचनं मन्यते । इंद्रो हि परमात्मरूपेणेदं जगत्करोति । औपमन्यवनामको मुनिरिदंदर्शनादिंद्र इति निर्वचनमाह । इदमित्यापरोक्ष्यमु-च्यते । विवेकेन हि परमात्मानमापरोक्ष्येण पश्यति । एत-देवाभिप्रेत्यारण्यकांडे समाम्नायते । स एतमेव पुरुषं ब्रह्म ततममपश्यदिदमदर्शमिती । तस्मादिदंद्रो नामेदंद्रो ह वै नाम तमिदंद्रं संतमिंद्र इत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवा इति । इदि परमैश्वर्य इति धातुः । स्वमायया जग-

द्रूपत्वं परमैश्वर्यम् । तद्योगादिंद्रः । अनेनाभिप्रायेण श्रूयते । इंद्रो मायाभिः पुरुरूप इति । इनशब्दस्येश्वरवाचकस्याकारलोपे सति नकारांतमिन्निति पदं भवति । दृ भय इति धातुः । स च परमेश्वरः शत्रूणां दारयिता भीषयितेतींद्रः । द्रु गताविति धातुः । शत्रूणां द्रावयिता पलायनं प्रापयितेतींद्रः । यज्वनां यागानुष्ठायिनामादरयिता भयस्य परिहर्ता । एवमेतानि निर्वचनानि द्रष्टव्यानीति ।

इंद्रेत्यत्राद्युदात्तत्वम् । आ इत्यत्र निपातत्वेनाद्युदात्तः । चित्रभानो । पदात्परत्वादामंत्रितनिघातः । त्वामिच्छंतीत्यर्थे युष्मच्छब्दात्सुप आत्मनः क्यच्प्रत्ययोत्तरपदयोश्चेति मपर्यंतस्य त्वादेशः । क्याच्छंदसि क्यजंतादुप्रत्ययः । त्वत्यव इति प्राप्तौ युष्मदस्मदोरनादेश इत्यविभक्तावपि हलादौ व्यत्ययेनात्वम् । उकारः प्रत्ययस्वरेणाद्युदात्तः । अणुशब्दः सौक्ष्म्यवाचकस्तद्योगात्प्रकृते ऽंगुलीषु वर्तते । वोतो गुणवचनादिति ङीषि प्राप्ते व्यत्ययेन ङीन् । नित्त्वादाद्युदात्तः । तना इत्ययं निपातो नित्यमित्यर्थे निपातत्वादाद्युदात्तः । पूतासः । आज्जसेरसुगित्यसुक् ॥

द्वितीयामृचमाह ।

इंद्रा याहि धियेषितो विप्रजूतः सुतावतः ।
उप ब्रह्माणि वाघतः ॥ ५ ॥

इंद्र आ याहि धिया इषितः विप्रऽजूतः सुतऽवतः ।
उप ब्रह्माणि वाघतः ॥ ५ ॥

हे इंद्र त्वमा याहि अस्मिन्कर्मण्यागच्छ । किमर्थम् । वाघत ऋत्विजो ब्रह्माणि वेदरूपाणि स्तोत्राण्युपैतुम् । कीदृशस्त्वम् । धियास्मदीयया प्रज्ञयेषितः प्राप्तः । अस्मद्भक्त्या प्रेरित इत्यर्थः । विप्रजूतः । यथा यजमानभक्त्या प्रेरितस्तथान्यैरपि विप्रैर्मेधाविभिर्ऋत्विग्भिः प्रेरितः । कीदृशस्य वाघतः । सुतावतः । अभिषुतसोमयुक्तस्य ।

केत इत्यादिष्वेकादशसु प्रज्ञानामसु धीरिति पठितम् । चतुर्विंशतिसंख्याकेषु मेधाविनामसु विप्रो धीर इति पठितम् । भरता इत्यादिष्वष्टस्वृत्विङ्नामसु वाघत इति पठितम् । इषित इत्यत्रेष गताविित्यस्मान्निष्ठायामिडागमः । आगमा अनुदात्ता इतीटो ऽनुदात्तत्वात्कृत्स्वरः शिष्यते । विप्रजूतः । टुवप् बीजतंतुसंताने इति धातोर्ऋज्रेंद्राग्रवज्रविप्रेत्यादिना रन्प्रत्ययांतो विप्रशब्दो निपातितः । निपातनादुपधाया इकारो लघूपधगुणाभावश्च । नित्त्वादाद्युदात्तः । तैर्जूतः प्राप्तः । जू इति सौत्रो धातुर्गत्यर्थः । श्र्युकः क्कितीतीट्प्रतिषेधः । तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वम् । सुतावतः । छांदसं दीर्घत्वम् । मतुपो ऽनुदात्तत्वात्प्रत्ययस्वर एव शिष्यते । ब्रह्माणि । नब्विषयस्यानिसंतस्येत्याद्युदात्तः । वाघच्छब्द ऋत्विङ्नामसु पठितः । प्रातिपदिकस्वरः ॥

तृतीयामृचमाह ।

इंद्रा याहि तूतुजान उप ब्रह्माणि हरिवः ।
सुते दधिष्व नश्चनः ॥ ६ ॥

इंद्र आ याहि तूतुजानः उप ब्रह्माणि हरिऽवः ।
सुते दधिष्व नः चनः ॥ ६ ॥

हरिशब्द इंद्रसंबंधिनोरश्वयोर्नामधेयम् । हरी इंद्रस्य रोहितो ऽग्नेरिति तदीयाश्वनामकत्वेन पठितत्वात् । हे हरिवः अश्वयुक्तेंद्र त्वं ब्रह्माण्युपैतुमा याहि । कदृशस्त्वम् । तूतुजानस्त्वरमाणः । आगत्य चास्मिन्सुते सोमाभिषवयुक्ते कर्मणि नो ऽस्मदीयं चनो ऽन्नं हविर्लक्षणं दधिष्व धारय । स्वीकुर्वित्यर्थः ।

तूतुजानः । तुजेर्लिटि लिटः कानज्वेति कानजादेशः । तुजादीनां दीर्घो ऽभ्यासस्येत्यभ्यासस्य दीर्घत्वम् । अभ्यस्तानामादिरित्याद्युदात्तत्वम् । हरिव इत्यत्र हरयो ऽस्य संतीति मतुपि छंदसीर इति मकारस्य वत्वम् । संबुद्धावुगिदचामिति नुम् । संयोगांतलोपे नकारस्य मतुवसो रुः संबुद्धौ छंदसीति रुत्वम् । आष्टमिको निघातः । ब्रह्माणीत्यस्य हरिव इत्यनेनासामर्थ्यात्समर्थः पदविधिरिति नियमात्सुबामंत्रित इति परांगवद्भावाभावेनामंत्रितनिघाताभावादाद्युदात्तत्वे सत्युपेत्यकारस्य सन्नतरः । दधिष्वेत्यत्र दधातेर्लोटि थास् । थासः से । सवाभ्यां वामावित्येकारस्य वादेशः । छंदस्युभयथेति सार्वधातुकार्धधातुकसंज्ञयोः सत्योः सार्वधातुकत्वेन शपि तस्य श्लौ च द्विर्भावः । आर्धधातुकत्वेनेडागमश्च । आतो लोप इटि चेत्याकारलोपः । चनः । चायतेरन्ने ह्रस्वश्चेत्यसुन्नंतः । चकारान्नुडागमे यलोपः ॥

इति प्रथमस्य प्रथमे पंचमो वर्गः ।

वैश्वदेवतृचे प्रथमामृचमाह ।

ओमासश्चर्षणीधृतो विश्वे देवास आ गत ।
दाश्वांसो दाशुषः सुतम् ॥ ७ ॥

ओमासः चर्षणिऽधृतः विश्वे देवासः आ गत ।
दाश्वांसः दाशुषः सुतम् ॥ ७ ॥

हे विश्वे देवास एतन्नामका देवविशेषाः । दाशुषो हविर्दत्तवतो यजमानस्य सुतमभिषुतं सोमं प्रति आ गत आगच्छत । ते च देवा ओमासो रक्षकाः । चर्षणीधृतो मनुष्याणां धारकाः । दाश्वांसः फलस्य दातारः ।

मनुष्या इत्यादिषु पंचविंशतिसंख्याकेषु मनुष्यनामसु चर्षणिशब्दः पठितः । अश्विनावित्यादिष्वेकत्रिंशत्संख्याकेषु देवविशेषनामसु विश्वे देवाः साध्या इति पठितम् ।

एतामृचं यास्क एवं व्याख्यातवान् । अवितारो वावनीया वा मनुष्यधृतः सर्वे च देवा इहागच्छत दत्तवंतो दत्तवतः सुतमिति तदेतदेकमेव वैश्वदेवं गायत्रं तृचं दशतयीषु विद्यते यत्तु किंचिद्बहुदैवतं तद्वैश्वदेवानां स्थाने युज्यते यदेव विश्वलिंगमिति शाकपूणिरिति । अत्र विश्वशब्दः सर्वशब्दपर्याय इति यास्कस्य मतम् । देवविशेषस्यैवासाधारणं लिंगमिति शाकपूणेर्मतम् । अवंतीत्योमासो देवाः । मन्नित्यनुवृत्तावविसिविसिशुषिभ्यः किदिति मन्प्रत्ययः । ज्वरत्वरस्रिव्यविमवामुपधायाश्चेत्यूठ् । मनः कित्त्वे ऽपि बाहुलकाद्गुणः । आज्जसेरसुगिति जसेरसुगागमः । आमंत्रिताद्युदात्तत्वम् । चर्षणयो मनुष्यास्तान्वृष्टिदानादिना धारयंतीति चर्षणीधृतो देवाः । पूर्वस्यामंत्रितस्य सामान्यवचनस्य विभाषितं विशेष-

वचने बहुवचनमित्यविद्यमानवत्त्वप्रतिषेधादपादादित्वेन निघातः । नन्वत एव विद्यमानवत्त्वात्सुबामंत्रित इति परांगवत्त्वेनैकपदीभावात्पदादपरत्वेन कथं निघात इति चेत् । न । वत्करणं स्वाश्रयमपि यथा स्यादिति वचनात्पदभेदप्रयुक्तस्य निघातस्याप्युपपत्तेः । ऐकपद्ये ऽप्याद्युदात्तत्वे ऽनुदात्तं पदमेकवर्जमिति सुतरामेव निघातो भविष्यति । इत्थमेव तर्हि द्रवत्पाणी शुभस्पती इत्यत्रापि परांगवत्त्वेनैकपद्यादुत्तरस्य शेषनिघातप्रसंग इति चेत् । न । तत्र परांगवद्भावस्य परेणामंत्रितं पूर्वमविद्यमानवदित्यविद्यमानवद्भावेन बाधितत्वात् । इह पुनर्विभाषितं विशेषवचने बहुवचनमित्यविद्यमानवत्त्वस्य निषेधात् । पूर्वस्यामंत्रितस्य विद्यमानवत्त्वात्परांगवत्त्वं स्वीकृतमिति वैषम्यम् ।

विश्वे । पादादित्वादाद्युदात्तः । गणदेवतावचनश्चात्र विश्वशब्दो न सर्वशब्दपर्याय इति विशेष्यपरतया सामान्यवचनत्वादोमास इत्यनेन न सामानाधिकरण्यम् । सामानाधिकरण्ये हि पूर्वस्य पादस्य परांगवद्भावे सति मित्रावरुणावृतावृधावित्यादाविवात्राप्यामंत्रिताद्युदात्तता न स्यात् । विश्व इत्यस्य विशेषणं देवास इति । दीव्यंतीति देवाः प्रकाशवंतः । नन्ववयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसीति रूढ एवार्थो देवशब्दस्य ग्राह्यो न यौगिकः । यौगिकत्वे ह्यवयवार्थानुसंधानव्यवधानेन प्रतिपत्तिर्विक्षिप्ता स्यात् । समुदायप्रसिद्धौ तु न विक्षेप इति चेत् । न । समुदायप्रसिद्धौ हि देवशब्दस्य सामान्यपरतया विशेषवचनत्वाभावाद्विभाषितं विशेषवचने बहुवचनमित्यनेनानिषिद्धत्वाद्विश्व इत्यस्याविद्यमानवत्त्वेन शुभस्पती इति पद-

वेद्वास इत्यस्याप्याद्युदात्तत्वं स्यात् । स्वरानुसारेण च रूढि-त्यागेनापि देवशब्दस्य योगस्वीकारो युक्त एव । आ गत आगच्छत । बहुलं छंदसीति शपो लुकि सत्यनुदात्तोपदेशे-त्यादिना मकारलोपः । आङः पदात्परत्वान्निघातः । दाश्वांसः । दाशृ दान इत्यस्य क्वसौ दाश्वान्साह्वान्मीढ्वांश्चेति निपा-तनात्क्वादिनियमप्राप्त इडागमो द्विर्वचनं च न भवति । प्रत्य-यस्वरेण क्वसोरुदात्तत्वम् । दाशुष इत्यत्र वसोः संप्रसारणमिति संप्रसारणम् । संप्रसारणाच्चेति पूर्वरूपत्वम् । शासिवसिघसीनां चेति षत्वम् ॥

द्वितीयामृचमाह ।

विश्वे॑ दे॒वासो॑ अ॒प्तुरः॑ सु॒तमा गं॑त॒ तूर्ण॑यः ।
उ॒स्राइ॑व॒ स्वस॑राणि ॥ ८ ॥

विश्वे॑ दे॒वासः॑ अ॒प्ऽतुरः॑ सु॒तं आ गं॑त॒ तूर्ण॑यः ।
उ॒स्राःऽइ॑व स्वस॑राणि ॥ ८ ॥

विश्वे देवास एतन्नामका गणरूपा देवविशेषाः सुतं सोम-मा गंत आगच्छंतु । कीदृशाः । अप्तुरः । तत्तत्काले वृष्टिप्रदा इत्यर्थः । तूर्णयस्त्वरायुक्ताः । यजमानमनुग्रहीतुमालस्यर-हिता इत्यर्थः । विश्वेषां देवानां सोमं प्रत्यागमने उस्रा इत्यादिर्दृष्टांतः । उस्राः सूर्यरश्मयः स्वसराण्यहानि प्रत्या-लस्यरहिता यथा समागच्छंति तद्वत् ।

खेदय इत्यादिषु पंचदशसु रश्मिनामसूस्रा वसव इति पठितम् । वस्तोरित्यादिषु द्वादशस्वहर्नामसु स्वसराणि घ्रंस

घर्म इति पठितम् । तच्च पदं यास्केन व्याख्यातम् । स्वसराण्यहानि भवंति स्वयंसारीण्यपि वा स्वरादित्यो भवति स एतानि सारयति । उस्रा इव स्वसराणीत्यपि निगमो भवतीति ।

देवासः पचाद्यजंतश्चित्त्वादंतोदात्तः । अप्तुरः । तुर त्वरणे जुहोत्यादिः । अप्सु रिति त्वरयंतीत्यर्थे क्विप्चेति क्विप् । गतिकारकोपपदात्कृदित्युत्तरपदप्रकृतिस्वरत्वम् । आ गंत । आगच्छंत्वित्यर्थे व्यत्ययेन मध्यमपुरुषबहुवचनम् । बहुलं छंदसीति शपो लुक् । तस्य तप्तनप्तनथनाश्चेति तबादेशः ऽपिदिति प्रतिषेधादङित्त्वादनुनासिकलोपाभावः । तिङ्ङतिङ इति निघातः । ञि त्वरा संभ्रम इति धातोस्त्वरंत इति तूर्णयः । निरित्यनुवृत्तौ वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो निदिति निप्रत्ययः । नित्त्वादाद्युदात्तः । उस्राइवेत्यत्रेवेन नित्यसमासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं चेति समासे पूर्वपदप्रकृतिस्वरत्वं नित्यम् । सरतीति सरः सूर्यः । पचाद्यच् । स्वः सरो येषां तानि स्वसराण्यहानि । बहुव्रीहौ प्रकृत्या पूर्वपदमिति स्वशब्द आद्युदात्तः ॥

तृतीयामृचमाह ।

विश्वे॑ दे॒वासो॑ अ॒स्रिध॒ एहि॑मायासो अ॒द्रुहः॑ ।
मेधं॑ जुषंत॒ वह्न॑यः ॥ ९ ॥

विश्वे॑ दे॒वासः॑ अ॒स्रिधः॑ एहि॑ऽमायासः अ॒द्रुहः॑ ।
मेधं॑ जुषंत॒ वह्न॑यः ॥ ९ ॥

विश्वे देवास एतन्नामका देवविशेषा मेधं हविर्यज्ञसंबंधि जुषंत सेवंताम् । कीदृशाः । अस्रिधः क्षयरहिताः शोषरहिता वा ।

एहिमायासः। सर्वतो व्याप्तप्रज्ञाः। यद्वा सौचीकमग्निमप्सु प्रविष्टमेहि मा यासीरिति यदवोचंस्तदनुकरणहेतुको ऽयं विश्वेषां देवानां व्यपदेश एहिमायास इति। अद्रुहो द्रोहरहिताः। वह्नयो वोढारः। धनानां प्रापयितारः।

स्त्रिधेः क्षयार्थस्य शोषणार्थस्य वा संपदादिभ्यो भावे क्विपि नञा बहुव्रीहिः। पूर्वपदप्रकृतिस्वरं बाधित्वा नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वम्। एहिमायासः। ईह चेष्टायाम्। आ समंतादीहत इत्येहिः। इन्निति सर्वधातुसाधारण इन्प्रत्ययो नित्त्वादाद्युदात्तः। एहिर्माया प्रज्ञा येषामिति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। अथवा। आङ उदात्तादुत्तरस्येहीति लोण्मध्यमैकवचनस्य तिङ्ङतिङ इति निघात एकादेश उदात्तेनोदात्त इत्येकार उदात्तः। एहीत्येतत्पदयुक्तं मा यासीरित्यत्र मायेत्यक्षरद्वयं येषां त एहिमायासः। पूर्वपदप्रकृतिस्वरः। अद्रुहः। द्रुह जिघांसायां संपदादित्वाद्भावे क्विपि बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वम्। मेधम्। मेधृ संगमे च। मेध्यते देवैः संगम्यत इति मेधं हविः। कर्मणि घञ्। ञित्त्वादाद्युदात्तः। जुषंत सेवंतामित्यर्थे छंदसि लुङ्लङ्लिट इति धातुसंबंधे लङ्। यत उक्तरूपा विश्वे देवा अतो जुषंतेति द्रुहादिधात्वर्थैः संबंधात्। बहुलं छंदस्यमाङ्योगे ऽपीत्यडागमाभावः। वह्नयः। निरित्यनुवृत्तौ वहिश्रीत्यादिना विहितस्य निप्रत्ययस्य नित्त्वादाद्युदात्तत्वम्॥

सारस्वते तृचे या प्रथमा सान्वारंभणीयेष्टौ सरस्वत्याः

शश्वंतो हि शत्रवो रारधुष्टे
भेदस्य चिच्छर्धतो विंद रंधिम् ।
मर्ताँ एनः स्तुवतो यः कृणोति
तिग्मं तस्मिन्नि जहि वज्रमिंद्र ॥ १८ ॥

आवदिंद्रं यमुना तृत्सवश्च
प्रात्र भेदं सर्वताता मुषायत् ।
अजासश्च शिग्रवो यक्षवश्च
बलिं शीर्षाणि जभ्रुरश्व्यानि ॥ १९ ॥

न तं इंद्र सुमतयो न रायः
संचक्षे पूर्वा उषसो न नूत्नाः ।
देवकं चिन्मान्यमानं जघंथा-
व त्मना बृहतः शंबरं भेत् ॥ २० ॥

प्र ये गृहादममदुस्त्वाया
पराशरः शतयातुर्वसिष्ठः ।
न ते भोजस्य सख्यं मृषंता-
धा सूरिभ्यः सुदिना व्युच्छान् ॥ २१ ॥

द्वे नप्तुर्देववतः शते गो-
र्द्वा रथा वधूमंता सुदासः ।
अर्हन्नग्ने पैजवनस्य दानं
होतेव सद्म पर्येमि रेभन् ॥ २२ ॥

चत्वारो मा पैजवनस्य दानाः
स्मद्दिष्टयः कृशनिनो निरेके ।
ऋज्रासो मा पृथिविष्ठाः सुदास-
स्तोकं तोकाय श्रवसे वहंति ॥ २३ ॥

यस्य श्रवो रोदसी अंतरुर्वी
शीर्ष्णेशीर्ष्णे विबभाजा विभक्ता ।
सप्तेदिंद्रं न स्रवतो गृणंति
नि युध्यामधिमशिशादभीके ॥ २४ ॥

इमं नरो मरुतः सश्चतानु
दिवोदासं न पितरं सुदासः ।
अविष्टना पैजवनस्य केतं
दूणाशं क्षत्रमजरं दुवोयु ॥ २५ ॥

---

19.

यस्तिग्मशृंगो वृषभो न भीम
एकः कृष्टीश्च्यावयति प्र विश्वाः ।
यः शश्वतो अदाशुषो गयस्य
प्रयंतासि सुष्वितराय वेदः ॥ १ ॥

त्वं ह त्यदिंद्र कुत्समावः
शुश्रूषमाणस्तन्वा समर्ये ।
दासं यच्छुष्णं कुयवं न्यस्मा
अरंधय आर्जुनेयाय शिक्षन् ॥ २ ॥

त्वं धृष्णो धृषता वीतहव्यं
प्रावो विश्वाभिरूतिभिः सुदासम् ।
प्र पौरुकुत्सिं त्रसदस्युमावः
क्षेत्रसाता वृत्रहत्येषु पूरुम् ॥ ३ ॥

त्वं नृभिर्नृमणो देववीतौ
भूरीणि वृत्रा हर्यश्व हंसि ।
त्वं नि दस्युं चुमुरिं धुनिं चा-
स्वापयो दभीतये सुहंतु ॥ ४ ॥

तव च्यौत्नानि वज्रहस्त तानि
नव यत्पुरो नवतिं च सद्यः ।
निवेशने शततमाविवेषी-
रहंच वृत्रं नमुचिमुताहन् ॥ ५ ॥

सना ता तं इंद्र भोजनानि
रातहव्याय दाशुषे सुदासे ।
वृष्णे ते हरी वृषणा युनज्मि
व्यंतु ब्रह्माणि पुरुशाक वाजम् ॥ ६ ॥

मा ते अस्यां सहसावन्परिष्टा-
वघाय भूम हरिवः परादै ।
त्रायस्व नोऽवृकेभिर्वरूथै-
स्तव प्रियासः सूरिषु स्याम ॥ ७ ॥

प्रियास इत्ते मघवन्नभिष्टौ
नरो मदेम शरणे सखायः ।
नि तुर्वशं नि याद्वं शिशीह्य-
तिथिग्वाय शंस्यं करिष्यन् ॥ ८ ॥

सद्यश्चिन्नु ते मघवन्नभिष्टौ
नरः शंसन्त्युक्थशास उक्था ।
ये ते हवेभिर्वि पणीरदाश-
न्नस्मान्वृणीष्व युज्याय तस्मै ॥ ९ ॥

एते स्तोमा नरां नृतम तुभ्य-
मस्मद्र्यञ्चो ददतो मघानि ।
तेषामिंद्र वृत्रहत्ये शिवो भूः
सखा च शूरोऽविता च नृणाम् ॥ १० ॥

नू इंद्र शूर स्तवमान ऊती
ब्रह्मजूतस्तन्वा वावृधस्व ।
उप नो वाजान्मिमीह्युप स्ती-
न्यूयं पात स्वस्तिभिः सदा नः ॥ ११ ॥

---

Ad Indra.

20.

उग्रो जज्ञे वीर्याय स्वधावा-
ञ्चक्रिरपो नर्यो यत्करिष्यन् ।
जग्मिर्युवा नृषदनमवोभि-
स्त्राता न इंद्र एनसो महश्चित् ॥ १ ॥

हंता वृत्रमिंद्रः शूशुवानः
प्रावीन्नु वीरो जरितारमूती ।
कर्ता सुदासे अह वा उ लोकं
दाता वसु मुहुरा दाशुषे भूत् ॥ २ ॥

युध्मो अनर्वा खजकृत्समद्वा
शूरः सत्राषाड् जनुषेमषाळ्हः ।
व्यास इंद्रः पृतनाः स्वोजा
अधा विश्वं शत्रूयंतं जघान ॥ ३ ॥

उभे चिदिंद्र रोदसी महित्वा
पप्राथ तविषीभिस्तुविष्मः ।
नि वज्रमिंद्रो हरिवान्मिमिक्ष-
न्समंधसा मदेषु वा उवोच ॥ ४ ॥

वृषा जजान वृषणं रणाय
तमु चिन्नारी नर्यं ससूव ।
प्र यः सेनानीरध नृभ्यो अस्ती-
नः सत्वा गवेषणः स धृष्णुः ॥ ५ ॥

नू चित्स भ्रेषते जनो न रेष-
न्मनो यो अस्य घोरमाविवासात् ।
यज्ञैर्य इंद्रे दधते दुवांसि
क्षयत्स राय ऋतपा ऋतेजाः ॥ ६ ॥

यदिंद्र पूर्वो अपराय शिक्ष-
  न्नयज्ज्यायान्कनीयसो देष्णम् ।
अमृत इत्पर्यासीत दूर-
  मा चित्र चित्र्यं भरा रयिं नः ॥ ७ ॥

यस्त इंद्र प्रियो जनो ददाश-
  दसन्निरेके अद्रिवः सखा ते ।
वयं ते अस्यां सुमतौ चनिष्ठाः
  स्याम वरूथे अघ्नतो नृपीतौ ॥ ८ ॥

एष स्तोमो अचिक्रदद्वृषा त
  उत स्तामुर्मघवन्नक्रपिष्ट ।
रायस्कामो जरितारं त आग-
  न्त्वमंग शक्र वस्व आ शको नः ॥ ९ ॥

स न इंद्र त्वयताया इषे धा-
  स्त्मना च ये मघवानो जुनंति ।
वस्वी षु ते जरित्रे अस्तु शक्ति-
  र्यूयं पात स्वस्तिभिः सदा नः ॥ १० ॥

---

21.

असावि देवं गोऋजीकमंधो
  न्यस्मिन्निंद्रो जनुषेमुवोच ।
बोधामसि त्वा हर्यश्व यज्ञै-
  र्बोधा नः स्तोममंधसो मदेषु ॥ १ ॥

प्र यंति यज्ञं विपयंति बर्हिः
सोममादो विदथे दुध्रवाचः ।
न्यु भ्रियंते यशसो गृभादा
दूरउपब्दो वृषणो नृषाचः ॥ २ ॥

त्वमिंद्र स्रवितवा अपस्कः
परिष्ठिता अहिना शूर पूर्वीः ।
त्वद्वावक्रे रथ्यो३न धेना
रेजंते विश्वा कृत्रिमाणि भीषा ॥ ३ ॥

भीमो विवेषायुधेभिरेषा-
मपांसि विश्वा नर्याणि विद्वान् ।
इंद्रः पुरो जर्हृषाणो वि दूधो-
द्वि वज्रहस्तो महिना जघान ॥ ४ ॥

न यातव इंद्र जूजुवुर्नो
न वंदना शविष्ठ वेद्याभिः ।
स शर्धदर्यो विषुणस्य जंतो-
र्मा शिश्नदेवा अपि गुर्ऋतं नः ॥ ५ ॥

अभि क्रत्वेंद्र भूरध ज्मन्न ते
विव्यङ्महिमानं रजांसि ।
स्वेना हि वृत्रं शवसा जघंथ
न शत्रुरंतं विविदद्युधा ते ॥ ६ ॥

देवाश्चित्ते असुर्याय पूर्वे-
ऽनु क्षत्राय ममिरे सहांसि ।
इंद्रो मघानि दयते विषह्ये-
द्रं वाजस्य जोहुवंत सातौ ॥ ७ ॥

कीरिश्चिद्धि त्वामवसे जुहावे-
शानमिंद्र सौभगस्य भूरेः ।
अवो बभूथ शतमूते अस्मे
अभिक्षत्तुस्त्वावतो वरूता ॥ ८ ॥

सखायस्त इंद्र विश्वह स्याम
नमोवृधासो महिना तरुत्र ।
वन्वंतु स्मा तेऽवसा समीके३
भीतिमर्यो वनुषां शवांसि ॥ ९ ॥

स न इंद्र त्वयताया इषे धा-
स्त्मना च ये मघवानो जुनंति ।
वस्वी षु ते जरित्रे अस्तु शक्ति-
र्यूयं पात स्वस्तिभिः सदा नः ॥ १० ॥

---

22.

पिबा सोममिंद्र मंदतु त्वा
यं ते सुषाव हर्यश्वाद्रिः ।
सोतुर्बाहुभ्यां सुयतो नार्वा ॥ १ ॥

यस्ते मदो युज्यश्चारुरस्ति
येन वृत्राणि हर्यश्व हंसि ।
स त्वामिंद्र प्रभूवसो ममत्तु ॥ २ ॥

बोधा सु मे मघवन्वाचमेमां
यां ते वसिष्ठो अर्चति प्रशस्तिम् ।
इमा ब्रह्म सधमादे जुषस्व ॥ ३ ॥

श्रुधी हवं विपिपानस्याद्रे-
र्बोधा विप्रस्यार्चतो मनीषाम् ।
कृष्वा दुवांस्यंतमा सचेमा ॥ ४ ॥

न ते गिरो अपि मृष्ये तुरस्य
न सुष्टुतिमसुर्यस्य विद्वान् ।
सदा ते नाम स्वयशो विवक्मि ॥ ५ ॥

भूरि हि ते सवना मानुषेषु
भूरि मनीषी हवते त्वामित् ।
मारे अस्मन्मघवञ्ज्योक्कः ॥ ६ ॥

तुभ्येदिमा सवना शूर विश्वा
तुभ्यं ब्रह्माणि वर्धना कृणोमि ।
त्वं नृभिर्हव्यो विश्वधासि ॥ ७ ॥

नू चिन्नु ते मन्यमानस्य दस्मो-
दश्नुवंति महिमानमुग्र ।
न वीर्यमिंद्र ते न राधः ॥ ८ ॥

ये च पूर्व ऋषयो ये च नूत्ना
इंद्र ब्रह्माणि जनयंत विप्राः ।
अस्मे ते संतु सख्या शिवानि
यूयं पात स्वस्तिभिः सदा नः ॥ ९ ॥

---

23.

उदु ब्रह्माण्यैरत श्रवस्ये-
द्रं समर्ये महया वसिष्ठ ।
आ यो विश्वानि शवसा ततानो-
पश्रोता म ईवतो वचांसि ॥ १ ॥

अयामि घोष इंद्र देवजामि-
रिरज्यंत यच्छुरुधो विवाचि ।
नहि स्वमायुश्चिकिते जनेषु
तानीदंहांस्यति पर्ष्यस्मान् ॥ २ ॥

युजे रथं गवेषणं हरिभ्या-
मुप ब्रह्माणि जुजुषाणमस्थुः ।
वि बाधिष्ट स्य रोदसी महित्वे-
द्रो वृत्राण्यप्रती जघन्वान् ॥ ३ ॥

आपश्चित्पिप्यु स्तर्यो३न गावो
नक्षन्नृतं जरितारस्त इंद्र ।
याहि वायुर्न नियुतो नो अच्छा
त्वं हि धीभिर्दयसे वि वाजान् ॥ ४ ॥

ते त्वा मदा इंद्र मादयंतु
शुष्मिणं तुविराधसं जरित्रे ।
एको देवत्रा दयसे हि मर्ता-
नस्मिञ्छूर सवने मादयस्व ॥ ५ ॥

एवेदिंद्रं वृषणं वज्रबाहुं
वसिष्ठासो अभ्यर्चंत्यर्कैः ।
स नं स्तुतो वीरवत्पातु गोमं-
द्यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥

---

A Indra. 24.

योनिष्ट इंद्र सदने अकारि
तमा नृभिः पुरुहूत प्र याहि ।
असो यथा नोऽविता वृधे च
ददो वसूनि ममदश्च सोमैः ॥ १ ॥

गृभीतं ते मन इंद्र द्विबर्हाः
सुतः सोमः परिषिक्ता मधूनि ।
विसृष्टधेना भरते सुवृक्ति-
रियमिंद्रं जोहुवती मनीषा ॥ २ ॥

आ नो दिव आ पृथिव्या ऋजीषि-
न्निदं बर्हिः सोमपेयाय याहि ।
वहंतु त्वा हरयो मद्र्यंच-
मांगूषमच्छा तवसं मदाय ॥ ३ ॥

आ नो विश्वाभिरूतिभिः सजोषा
  ब्रह्म जुषाणो हर्यश्व याहि ।
वरीवृजत्स्थविरेभिः सुशिप्रा-
  स्मे दधद्वृषणं शुष्ममिंद्र ॥ ४ ॥

एष स्तोमो मह उग्राय वाहे
  धुरी३वात्यो न वाजयन्नधायि ।
इंद्र त्वायमर्क ईट्टे वसूनां
  दिवीव द्यामधि नः श्रोमतं धाः ॥ ५ ॥

एवा न इंद्र वार्यस्य पूर्धि
  प्र ते महीं सुमतिं वेविदाम ।
इषं पिन्व मघवद्भ्यः सुवीरां
  यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥

---

25.

आ ते मह इंद्रोत्युग्र
  समन्यवो यत्समरंत सेनाः ।
पताति दिद्युन्नर्यस्य बाह्वो-
  र्मा ते मनो विष्वद्र्य१ग्वि चारीत् ॥ १ ॥

नि दुर्ग इंद्र श्नथिह्यमित्रा-
  नभि ये नो मर्तासो अमंति ।
आरे तं शंसं कृणुहि निनित्सो-
  रा नो भर संभरणं वसूनाम् ॥ २ ॥

शतं ते शिप्रिन्नूतयः सुदासे
सहस्रं शंसा उत रातिरस्तु ।
जहि वधर्वनुषो मर्त्यस्या-
स्मे द्युम्नमधि रत्नं च धेहि ॥ ३ ॥

त्वावतो हींद्र क्रत्वे अस्मि
त्वावतोऽवितुः शूर रातौ ।
विश्वेदहानि तविषीव उग्रँ
ओकः कृणुष्व हरिवो न मर्धीः ॥ ४ ॥

कुत्सा एते हर्यश्वाय शूष-
मिंद्रे सहो देवजूतमियानाः ।
सत्रा कृधि सुहनाशूर वृत्रा
वयं तरुत्राः सनुयाम वाजम् ॥ ५ ॥

एवा नं इंद्र वार्यस्य पूर्धि
प्र ते महीं सुमतिं वेविदाम ।
इषं पिन्व मघवद्भ्यः सुवीरां
यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥

A Indra.

26.

न सोम इंद्रमसुतो ममाद
नाब्रह्माणो मघवानं सुतासः ।
तस्मा उक्थं जनये यज्जुजोष-
न्नृवन्नवीयः शृणवद्यथा नः ॥ १ ॥

उक्थउक्थे सोम इंद्रं ममाद
नीथेनीथे मघवानं सुतासः ।
यदीं सबाधः पितरं न पुत्राः
समानदक्षा अवसे हवंते ॥ २ ॥

चकार ता कृणवन्नूनमन्या
यानि ब्रुवंति वेधसः सुतेषु ।
जनीरिव पतिरेकः समानो
नि मामृजे पुर इंद्रः सु सर्वाः ॥ ३ ॥

एवा तमाहुरुत शृण्व इंद्र
एको विभक्ता तरणिर्मघानाम् ।
मिथस्तुर ऊतयो यस्य पूर्वी-
रस्मे भद्राणि सश्चत प्रियाणि ॥ ४ ॥

एवा वसिष्ठ इंद्रमूतये नॄ-
न्कृष्टीनां वृषभं सुते गृणाति ।
सहस्रिण उप नो माहि वाजा-
न्यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

---

27.

इंद्रं नरो नेमधिता हवंते
यत्पार्या युनजते धियस्ताः ।
शूरो नृषाता शवसश्चकान
आ गोमति व्रजे भजा त्वं नः ॥ १ ॥

य इंद्र शुष्मो मघवन्ते अस्ति
शिक्षा सखिभ्यः पुरुहूत नृभ्यः ।
त्वं हि दृळ्हा मघवन्विचेता
अपा वृधि परिवृतं न राधः ॥ २ ॥

इंद्रो राजा जगतश्चर्षणीना-
मधि क्षमि विषुरूपं यदस्ति ।
ततो ददाति दाशुषे वसूनि
चोदद्राध उपस्तुतश्चिदर्वाक् ॥ ३ ॥

नू चित्र इंद्रो मघवा सहूती
दानो वाजं नि यमते न ऊती ।
अनूना यस्य दक्षिणा पीपाय
वामं नृभ्यो अभिवीता सखिभ्यः ॥ ४ ॥

नू इंद्र राये वरिवस्कृधी न
आ ते मनो ववृत्याम मघाय ।
गोमदश्वावद्रथवद्व्यंतो
यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

---

a Indra

28.

ब्रह्मा ण इंद्रोप याहि विद्वा-
नर्वाचस्ते हरयः संतु युक्ताः ।
विश्वे चिद्धि त्वा विहवंत मर्ता
अस्माकमिच्छृणुहि विश्वमिन्व ॥ १ ॥

हवं त इंद्र महिमा व्यान-
ड्ब्रह्म यत्पासि शवसिन्नृषीणाम् ।
आ यद्वज्रं दधिषे हस्त उग्र
घोरः सन्क्रत्वा जनिष्ठा अषाळ्हः ॥ २ ॥

तव प्रणीतींद्र जोहुवाना-
न्सं यन्नॄन्न रोदसी निनेथ ।
महे क्षत्राय शवसे हि जज्ञे-
ऽतूतुजिं चित्तूतुजिरशिश्नत् ॥ ३ ॥

एभिर्न इंद्राहभिर्दशस्य
दुर्मित्रासो हि क्षितयः पवंते ।
प्रति यच्चष्टे अनृतमनेना
अव द्विता वरुणो मायी नः सात् ॥ ४ ॥

वोचेमेदिंद्रं मघवानमेनं
महो रायो राधसो यद्ददन्नः ।
यो अर्चतो ब्रह्मकृतिमविष्ठो
यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

---

29.

अयं सोम इंद्र तुभ्यं सुन्व
आ तु प्र याहि हरिवस्तदोकाः ।
पिबा त्व१स्य सुषुतस्य चारो-
र्ददो मघानि मघवन्नियानः ॥ १ ॥

ब्रह्मन्वीर ब्रह्मकृतिं जुषाणो-
ऽर्वाचीनो हरिभिर्याहि तूयम् ।
अस्मिन्नू षु सवने मादयस्वो-
प ब्रह्माणि शृणव इमा नः ॥ २ ॥

का ते अस्त्यरंकृतिः सूक्तैः
कदा नूनं ते मघवन्दाशेम ।
विश्वा मतीरा ततने त्वाया-
धा म इंद्र शृणवो हवेमा ॥ ३ ॥

उतो घा ते पुरुष्या३इदास-
न्येषां पूर्वेषामशृणोर्ऋषीणाम् ।
अधाहं त्वा मघवञ्जोहवीमि
त्वं न इंद्रासि प्रमतिः पितेव ॥ ४ ॥

वोचेमेदिंद्रं मघवानमेनं
महो रायो राधसो यद्दन्नः ।
यो अर्चतो ब्रह्मकृतिमविष्ठो
यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

---

a Indra

30.

आ नो देव शवसा याहि शुष्मि-
न्भवा वृध इंद्र रायो अस्य ।
महे नृम्णाय नृपते सुवज्र
महि क्षत्राय पौंस्याय शूर ॥ १ ॥

हवंत उ त्वा हव्यं विवाचि
   तनूषु शूराः सूर्यस्य सातौ ।
त्वं विश्वेषु सेन्यो जनेषु
   त्वं वृत्राणि रंधया सुहंतु ॥ २ ॥

अहा यदिंद्र सुदिना व्युच्छा-
   न्दधो यत्केतुमुपमं समत्सु ।
न्य१ग्निः सीददसुरो न होता
   हुवानो अत्र सुभगाय देवान् ॥ ३ ॥

वयं ते त इंद्र ये च देव
   स्तवंत शूर ददतो मघानि ।
यच्छा सूरिभ्य उपमं वरूथं
   स्वाभुवो जरणामश्नवंत ॥ ४ ॥

वोचेमेदिंद्रं मघवानमेनं
   महो रायो राधसो यद्ददन्नः ।
यो अर्चतो ब्रह्मकृतिमविष्ठो
   यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

---

I Indra.

31.

प्र व इंद्राय मादनं हर्यश्वाय गायत ।
   सखायः सोमपाव्ने ॥ १ ॥

शंसेदुक्थं सुदानव उत द्युक्षं यथा नरः ।
चकृमा सत्यराधसे ॥ २ ॥

त्वं न इंद्र वाजयुस्त्वं गव्युः शतक्रतो ।
त्वं हिरण्ययुर्वसो ॥ ३ ॥

वयमिंद्र त्वायवोऽभि प्र णोनुमो वृषन् ।
विद्धी त्वस्य नो वसो ॥ ४ ॥

मा नो निदे च वक्तवेऽर्यो रंधीरराव्णे ।
त्वे अपि क्रतुर्मम ॥ ५ ॥

त्वं वर्मासि सप्रथः पुरोयोधश्च वृत्रहन् ।
त्वया प्रति ब्रुवे युजा ॥ ६ ॥

महाँ उतासि यस्य तेऽनु स्वधावरी सहः ।
मम्नाते इंद्र रोदसी ॥ ७ ॥

तं त्वा मरुत्वती परि भुवद्वाणी सयावरी ।
नक्षमाणा सह द्युभिः ॥ ८ ॥

ऊर्ध्वासस्त्वान्विंदवो भुवन्दस्ममुप द्यवि ।
सं ते नमंत कृष्टयः ॥ ९ ॥

प्र वो महे महिवृधे भरध्वं
प्रचेतसे प्र सुमतिं कृणुध्वम् ।
विशः पूर्वीः प्र चरा चर्षणिप्राः ॥ १० ॥

उरुव्यचसे महिने सुवृक्ति-
मिंद्राय ब्रह्म जनयंत विप्राः ।
तस्य व्रतानि न मिनंति धीराः ॥ ११ ॥

इंद्रं वाणीरनुत्तमन्युमेव
सत्रा राजानं दधिरे सहध्यै ।
हर्यश्वाय बर्हया समापीन् ॥१२ ॥

---

a Indra.

32.

मो षु त्वा वाघतश्चना-
रे अस्मन्नि रीरमन् ।
आरात्ताच्चित्सधमादं न आगही-
ह वा सन्नुप श्रुधि ॥ १ ॥

इमे हि ते ब्रह्मकृतः सुते सचा
मधौ न मक्ष आसते ।
इंद्रे कामं जरितारो वसूयवो
रथे न पादमा दधुः ॥ २ ॥

रायस्कामो वज्रहस्तं सुदक्षिणं
पुत्रो न पितरं हुवे ॥ ३ ॥

इम इंद्राय सुन्विरे
सोमासो दध्याशिरः ।

ताँ आ मदाय वज्रहस्त पीतये
हरिभ्यां याह्योक आ ॥ ४ ॥
श्रवच्छुत्कर्ण ईयते वसूनां
नू चिन्नो मर्धिषद्गिरः ।
सद्यश्चिद्यः सहस्राणि शता दद-
न्नकिर्दित्संतमा मिनत् ॥ ५ ॥

स वीरो अप्रतिष्कुत
इंद्रेण शूशुवे नृभिः ।
यस्ते गभीरा सवनानि वृत्रह-
न्सुनोत्या च धावति ॥ ६ ॥
भवा वरूथं मघवन्मघोनां
यत्समजासि शर्धतः ।
वि त्वाहतस्य वेदनं भजेमह्या
दूणाशो भरा गयम् ॥ ७ ॥

सुनोता सोमपाव्ने
सोममिंद्राय वज्रिणे ।
पचता पक्तीरवसे कृणुध्व-
मित्पृणन्नित्पृणते मयः ॥ ८ ॥
मा स्रेधत सोमिनो दक्षता महे
कृणुध्वं राय आतुजे ।

तरणिरिज्जयति क्षेति पुष्यति
न देवासः कवत्नवे ॥ ९ ॥

नकिः सुदासो रथं
पर्यास न रीरमत् ।
इंद्रो यस्याविता यस्य मरुतो
गमत्स गोमति व्रजे ॥ १० ॥
गमद्वाजं वाजयन्निंद्र मर्त्यो
यस्य त्वमविता भुवः ।
अस्माकं बोध्यविता रथाना-
मस्माकं शूर नृणाम् ॥ ११ ॥

उदिन्न्वस्य रिच्यते-
ऽंशो धनं न जिग्युषः ।
य इंद्रो हरिवान्न दभंति तं रिपो
दक्षं दधाति सोमिनि ॥ १२ ॥
मंत्रमखर्वं सुधितं सुपेशसं
दधात यज्ञियेष्वा ।
पूर्वीश्चन प्रसितयस्तरंति तं
य इंद्रे कर्मणा भुवत् ॥ १३ ॥

कस्तमिंद्र त्वावसु-
मा मर्त्यो दधर्षति ।

श्रद्धा इत्ते मघवन्पार्ये दिवि
वाजी वाजं सिषासति ॥ १४ ॥
मघोनः स्म वृत्रहत्येषु चोदय
ये ददति प्रिया वसु ।
तव प्रणीती हर्यश्व सूरिभि-
र्विश्वा तरेम दुरिता ॥ १५ ॥

तवेदिंद्रावमं वसु
त्वं पुष्यसि मध्यमम् ।
सत्रा विश्वस्य परमस्य राजसि
नकिष्ट्वा गोषु वृण्वते ॥ १६ ॥
त्वं विश्वस्य धनदा असि श्रुतो
य ईं भवंत्याजयः ।
तवायं विश्वः पुरुहूत पार्थिवो-
ऽवस्युर्नाम भिक्षते ॥ १७ ॥

यदिंद्र यावतस्त्व-
मेतावदहमीशीय ।
स्तोतारमिद्दिधिषेय रदावसो
न पापत्वाय रासीय ॥ १८ ॥
शिक्षेयमिन्महयते दिवेदिवे
राय आ कुहचिद्विदे ।
नहि त्वदन्यन्मघवन्न आप्यं
वस्यो अस्ति पिता चन ॥ १९ ॥

तरणिरित्सिषासति
  वाजं पुरंध्या युजा ।
आ व इंद्रं पुरुहूतं नमे गिरा
  नेमिं तष्टेव सुद्रुम् ॥ २० ॥

न दुष्टुती मर्त्यो विंदते वसु
  न स्रेधंतं रयिर्नशत् ।
सुशक्तिरिन्मघवन्तुभ्यं मावते
  देष्णं यत्पार्ये दिवि ॥ २१ ॥

अभि त्वा शूर नोनुमो-
  ऽदुग्धा इव धेनवः ।
ईशानमस्य जगतः स्वर्दृश-
  मीशानमिंद्र तस्थुषः ॥ २२ ॥

न त्वावाँ अन्यो दिव्यो न पार्थिवो
  न जातो न जनिष्यते ।
अश्वायंतो मघवन्निंद्र वाजिनो
  गव्यंतस्त्वा हवामहे ॥ २३ ॥

अभी षतस्तदा भरें-
  द्र ज्यायः कनीयसः ।
पुरूवसुर्हि मघवन्सनादसि
  भरेभरे च हव्यः ॥ २४ ॥

परा णुदस्व मघवन्नमित्रा-
न्सुवेदा नो वसू कृधि ।
अस्माकं बोध्यविता महाधने
भवा वृधः सखीनाम् ॥ २५ ॥

इंद्र क्रतुं न आ भर
पिता पुत्रेभ्यो यथा ।
शिक्षा णो अस्मिन्पुरुहूत यामनि
जीवा ज्योतिरशीमहि ॥ २६ ॥
मा नो अज्ञाता वृजना दुराध्यो३
माशिवासो अव क्रमुः ।
त्वया वयं प्रवतः शश्वतीरपो-
ऽति शूर तरामसि ॥ २७ ॥

---

à Indra.

33.

श्वित्यंचो मा दक्षिणतस्कपर्दा
धियंजिन्वासो अभि हि प्रमंदुः ।
उत्तिष्ठन्वोचे परि बर्हिषो नॄ-
न्न मे दूरादवितवे वसिष्ठाः ॥ १ ॥

दूरादिंद्रमनयन्ना सुतेन
तिरो वैशंतमति पांतमुग्रम् ।
पाशद्युम्नस्य वायतस्य सोमा-
त्सुतादिंद्रोऽवृणीता वसिष्ठान् ॥ २ ॥

एवेन्नु कं सिंधुमेभिस्ततारे-
वेन्नु कं भेदमेभिर्जघान ।
एवेन्नु कं दाशराज्ञे सुदासं
प्रावदिंद्रो ब्रह्मणा वो वसिष्ठाः ॥ ३ ॥

जुष्टी नरो ब्रह्मणा वः पितृणा-
मक्षमव्ययं न किला रिषाथ ।
यच्छक्करीषु बृहता रवेणें-
द्रे शुष्ममदधाता वसिष्ठाः ॥ ४ ॥

उद्द्यामिवेत्तृष्णजो नाथितासो-
ऽदीधयुर्दाशराज्ञे वृतासः ।
वसिष्ठस्य स्तुवत इंद्रो अश्रो-
दुरुं तृत्सुभ्यो अकृणोदु लोकम् ॥ ५ ॥

दंडा इवेद्गोअजनास आस-
न्परिच्छिन्ना भरता अर्भकासः ।
अभवच्च पुरएता वसिष्ठ
आदित्तृत्सूनां विशो अप्रथंत ॥ ६ ॥

त्रयः कृण्वंति भुवनेषु रेत-
स्तिस्रः प्रजा आर्या ज्योतिरग्राः ।
त्रयो घर्मास उषसं सचंते
सर्वाँ इत्ताँ अनु विदुर्वसिष्ठाः ॥ ७ ।

सूर्यस्येव वक्षथो ज्योतिरेषां
समुद्रस्येव महिमा गभीरः ।

वातस्येव प्रजवो नान्येन
    स्तोमो वसिष्ठा अन्वेतवे वः ॥ ८ ॥

त इन्निण्यं हृदयस्य प्रकेतैः
    सहस्रवल्शमभि सं चरंति ।
यमेन ततं परिधिं वयंतो-
    ऽप्सरस उप सेदुर्वसिष्ठाः ॥ ९ ॥

विद्युतो ज्योतिः परि संजिहानं
    मित्रावरुणा यदपश्यतां त्वा ।
तत्ते जन्मोतैकं वसिष्ठा-
    गस्त्यो यत्त्वा विश आजभार ॥ १० ॥

उतासि मैत्रावरुणो वसिष्ठो-
    र्वश्या ब्रह्मन्मनसोऽधि जातः ।
द्रप्सं स्कन्नं ब्रह्मणा दैव्येन
    विश्वे देवाः पुष्करे त्वाददंत ॥ ११ ॥

स प्रकेत उभयस्य प्रविद्वा-
    न्सहस्रदान उत वा सदानः ।
यमेन ततं परिधिं वयिष्य-
    न्नप्सरसः परि जज्ञे वसिष्ठः ॥ १२ ॥

सत्रे ह जाताविषिता नमोभिः
    कुंभे रेतः सिषिचतुः समानम् ।

ततो ह मान उदियाय मध्या-
त्ततो जातमृषिमाहुर्वसिष्ठम् ॥ १३ ॥

उक्थभृतं सामभृतं बिभर्ति
ग्रावाणं बिभ्रत्प्र वदात्यग्रे ।
उपैनमाध्वं सुमनस्यमाना
आ वो गच्छाति प्रतृदो वसिष्ठः ॥ १४ ॥

---

34.

प्र शुक्रैतु देवी मनीषा
अस्मत्सुतष्टो रथो न वाजी ॥ १ ॥

विदुः पृथिव्या दिवो जनित्रं
शृण्वंत्यापो अध क्षरंतीः ॥ २ ॥

आपश्चिदस्मै पिन्वंत पृथ्वी-
र्वृत्रेषु शूरा मंसंत उग्राः ॥ ३ ॥

आ धूर्ष्वस्मै दधाताश्वा-
निंद्रो न वज्री हिरण्यबाहुः ॥ ४ ॥

अभि प्र स्थाताहेव यज्ञं
यातेव पत्मन्त्मना हिनोत ॥ ५ ॥

त्मना समत्सु हिनोत यज्ञं
दधात केतुं जनाय वीरम् ॥ ६ ॥

उद॑स्य शुष्मा॑द्भानुर्नार्त॑
बिभ॑र्ति भा॒रं पृ॑थि॒वी न भूम॑ ॥ ७ ॥

ह्वया॑मि दे॒वाँ अया॑तुरग्ने॒
साध॑न्नृ॒तेन॒ धियं॑ दधामि ॥ ८ ॥

अ॒भि वो॑ दे॒वीं धियं॑ दधिध्वं॒
प्र वो॑ देव॒त्रा वाचं॑ कृणुध्वम् ॥ ९ ॥

आ च॑ष्ट आसा॒ं पाथो॑ न॒दीना॒ं
वरु॑ण उ॒ग्रः स॒हस्र॑चक्षाः ॥ १० ॥

राजा॑ रा॒ष्ट्रानां॒ पेशो॑ न॒दीना॒-
मनु॑त्तमस्मै क्ष॒त्रं वि॒श्वायु॑ ॥ ११ ॥

अवि॑ष्टो अ॒स्मान्विश्वा॑सु वि॒क्ष्व-
द्युं॑ कृणोत॒ शंसं॑ निनि॒त्सोः ॥ १२ ॥

व्ये॑तु दि॒द्युद्द्वि॒षामशे॑वा
युयोत॒ विष्व॒ग्रप॑स्त॒नूना॑म् ॥ १३ ॥

अवी॑न्नो अ॒ग्निर्ह॒व्यान्नमो॑भिः
प्रेष्ठो॑ अस्मा अधायि॒ स्तोम॑ः ॥ १४ ॥

स॒जूर्दे॒वेभि॑र॒पां नपा॑तं॒
सखा॑यं कृध्वं शि॒वो नो॑ अस्तु ॥ १५ ॥

अब्जामुक्थैरहिं गृणीषे
  बुध्ने नदीनां रजःसु षीदन् ॥ १६ ॥

मा नोऽहिर्बुध्न्यो रिषे धा-
  न्मा यज्ञो अस्य स्रिधदृतायोः ॥ १७ ॥

उत नः एषु नृषु श्रवो धुः
  प्र राये यन्तु शर्धन्तो अर्यः ॥ १८ ॥

तपन्ति शत्रुं स्व१र्ण भूमा
  महासेनासो अमेभिरेषाम् ॥ १९ ॥

आ यन्नः पत्नीर्गमन्त्यच्छा
  त्वष्टा सुपाणिर्दधातु वीरान् ॥ २० ॥

प्रति न स्तोमं त्वष्टा जुषेत
  स्यादस्मे अरमतिर्वसूयुः ॥ २१ ॥

ता नो रासन्रातिषाचो वसू-
  न्या रोदसी वरुणानी शृणोतु ।
वरूत्रीभिः सुशरणो नो अस्तु
  त्वष्टा सुदत्रो वि दधातु रायः ॥ २२ ॥

तन्नो रायः पर्वतास्तन्न आप-
  स्तद्रातिषाच ओषधीरुत द्यौः ।
वनस्पतिभिः पृथिवी सजोषा
  उभे रोदसी परि पासतो नः ॥ २३ ॥

अनु तदुर्वी रोदसी जिहाता-
मनु द्युक्षो वरुण इंद्रसखा ।
अनु विश्वे मरुतो ये सहासो
रायः स्याम धरुणं धियध्यै ॥ २४ ॥

तन्न इंद्रो वरुणो मित्रो अग्नि-
राप ओषधीर्वनिनो जुषंत ।
शर्मन्स्याम मरुतामुपस्थे
यूयं पात स्वस्तिभिः सदा नः ॥ २५ ॥

---

Viśvedevas.

## 35.

शं न इंद्राग्नी भवतामवोभिः
शं न इंद्रावरुणा रातहव्या ।
शमिंद्रासोमा सुविताय शं योः
शं न इंद्रापूषणा वाजसातौ ॥ १ ॥

शं नो भगः शमु नः शंसो अस्तु
शं नः पुरंधिः शमु संतु रायः ।
शं नः सत्यस्य सुयमस्य शंसः
शं नो अर्यमा पुरुजातो अस्तु ॥ २ ॥

शं नो धाता शमु धर्ता नो अस्तु
शं न उरूची भवतु स्वधाभिः ।
शं रोदसी बृहती शं नो अद्रिः
शं नो देवानां सुहवानि संतु ॥ ३ ॥

शं नो अग्निर्ज्योतिरनीको अस्तु
शं नो मित्रावरुणावश्विना शम् ।
शं नः सुकृतां सुकृतानि संतु
शं न इषिरो अभि वातु वातः ॥ ४ ॥

शं नो द्यावापृथिवी पूर्वहूतौ
शमंतरिक्षं दृशये नो अस्तु ।
शं न ओषधीर्वनिनो भवंतु
शं नो रजसस्पतिरस्तु जिष्णुः ॥ ५ ॥

शं न इंद्रो वसुभिर्देवो अस्तु
शमादित्येभिर्वरुणः सुशंसः ।
शं नो रुद्रो रुद्रेभिर्जलाषः
शं नस्त्वष्टा ग्नाभिरिह शृणोतु ॥ ६ ॥

शं नः सोमो भवतु ब्रह्म शं नः
शं नो ग्रावाणः शमु संतु यज्ञाः ।
शं नः स्वरूणां मितयो भवंतु
शं नः प्रस्वः शम्वस्तु वेदिः ॥ ७ ॥

शं नः सूर्य उरुचक्षा उदेतु
शं नश्चतस्रः प्रदिशो भवंतु ।
शं नः पर्वता ध्रुवयो भवंतु
शं नः सिंधवः शमु संत्वापः ॥ ८ ॥

शं नो अदितिर्भवतु व्रतेभिः
शं नो भवंतु मरुतः स्वर्काः ।

शं नो विष्णुः शमु पूषा नो अस्तु
  शं नो भवित्रं शम्वस्तु वायुः ॥ ९ ॥

शं नो देवः सविता त्रायमाणः
  शं नो भवंतूषसो विभातीः ।
शं नः पर्जन्यो भवतु प्रजाभ्यः
  शं नः क्षेत्रस्य पतिरस्तु शंभुः ॥ १० ॥

शं नो देवा विश्वदेवा भवंतु
  शं सरस्वती सह धीभिरस्तु ।
शमभिषाचः शमु रातिषाचः
  शं नो दिव्याः पार्थिवाः शं नो अप्याः ॥ ११ ॥

शं नः सत्यस्य पतयो भवंतु
  शं नो अर्वंतः शमु संतु गावः ।
शं न ऋभवः सुकृतः सुहस्ताः
  शं नो भवंतु पितरो हवेषु ॥ १२ ॥

शं नो अज एकपाद्देवो अस्तु
  शं नोऽहिर्बुध्न्यः शं समुद्रः ।
शं नो अपां नपात्पेरुरस्तु
  शं नः पृश्निर्भवतु देवगोपा ॥ १३ ॥

आदित्या रुद्रा वसवो जुषंते-
  दं ब्रह्म क्रियमाणं नवीयः ।

शृण्वंतु नो दिव्याः पार्थिवासो
गोजाता उत ये यज्ञियासः ॥ १४ ॥

ये देवानां यज्ञिया यज्ञियानां
मनोर्यजत्रा अमृता ऋतज्ञाः ।
ते नो रासंतामुरुगायमद्य
यूयं पात स्वस्तिभिः सदा नः ॥ १५ ॥

36.

प्र ब्रह्मैतु सदनादृतस्य
वि रश्मिभिः ससृजे सूर्यो गाः ।
वि सानुना पृथिवी सस्र उर्वी
पृथु प्रतीकमध्येधे अग्निः ॥ १ ॥

इमां वां मित्रावरुणा सुवृक्ति-
मिषं न कृण्वे असुरा नवीयः ।
इनो वामन्यः पदवीरदब्धो
जनं च मित्रो यतति ब्रुवाणः ॥ २ ॥

आ वातस्य ध्रजतो रंत इत्या
अपीपयंत धेनवो न सूदाः ।
महो दिवः सदने जायमानो-
ऽचिक्रदद्वृषभः सस्मिन्नूधन् ॥ ३ ॥

गिरा य एता युनजद्धरी त
इंद्र प्रिया सुरथा शूर धायू ।

प्र यो मन्युं रिरिक्षतो मिनात्या
  सुक्रतुमर्यमणं ववृत्याम् ॥ ४ ॥
यजंते अस्य सख्यं वयंश्च
  नमस्विनः स्व ऋतस्य धामन् ।
वि पृक्षो बाबधे नृभि स्तवान
  इदं नमो रुद्राय प्रेष्ठम् ॥ ५ ॥

आ यत्साकं यशसो वावशानाः
  सरस्वती सप्तथी सिंधुमाता ।
याः सुष्वयंत सुदुघाः सुधारा
  अभि स्वेन पयसा पीप्यानाः ॥ ६ ॥

उत त्ये नो मरुतो मंदसाना
  धियं तोकं च वाजिनोऽवंतु ।
मा नः परि ख्यदक्षरा चरंत्य-
  वीवृधन्युज्यं ते रयिं नः ॥ ७ ॥

प्र वो महीमरमतिं कृणुध्वं
  प्र पूषणं विदथ्यं न वीरम् ।
भगं धियोऽवितारं नो अस्याः
  सातौ वाजं रातिषाचं पुरंधिम् ॥ ८ ॥

अच्छायं वो मरुतः श्लोक एत्व-
  च्छा विष्णुं निषिक्तपामवोभिः ।
उत प्रजायै गृणते वयो धु-
  र्यूयं पात स्वस्तिभिः सदा नः ॥ ९ ॥

37.

आ वो वाहिष्ठो वहतु स्तवध्यै
रथो वाजा ऋभुक्षणो अमृक्तः ।
अभि त्रिपृष्ठैः सवनेषु सोमै-
र्मदे सुशिप्रा महभिः पृणध्वम् ॥ १ ॥

यूयं ह रत्नं मघवत्सु धत्थ
स्वर्दृशा ऋभुक्षणो अमृक्तम् ।
सं यज्ञेषु स्वधावंतः पिबध्वं
वि नो राधांसि मतिभिर्दयध्वम् ॥ २ ॥

उवोचिथ हि मघवन्देष्णं
महो अर्भस्य वसुनो विभागे ।
उभा ते पूर्णा वसुना गभस्ती
न सूनृता नि यमते वसव्या ॥ ३ ॥

त्वमिंद्र स्वयशा ऋभुक्षा
वाजो न साधुरस्तमेष्यृक्वा ।
वयं नु ते दाश्वांसः स्याम
ब्रह्म कृण्वंतो हरिवो वसिष्ठाः ॥ ४ ॥

सनितासि प्रवतो दाशुषे चि-
द्याभिर्विवेषो हर्यश्व धीभिः ।
ववन्मा नु ते युज्याभिरूती
कदा न इंद्र राय आ दशस्येः ॥ ५ ॥

वासयसीव वेधसस्त्वं नः
  कदा न इंद्र वचसो बुबोधः ।
अस्तं तात्या धिया रयिं सुवीरं
  पृक्षो नो अर्वा न्युहीत वाजी ॥ ६ ॥

अभि यं देवी निर्ऋतिश्चिदीशे
  नक्षंत इंद्रं शरदः सुपृक्षः ।
उप त्रिबंधुर्जरदष्टिमेत्य-
  स्ववेशं यं कृणवंत मर्ताः ॥ ७ ॥

आ नो राधांसि सवित स्तवध्या
  आ रायो यंतु पर्वतस्य रातौ ।
सदा नो दिव्यः पायुः सिषक्तु
  यूयं पात स्वस्तिभिः सदा नः ॥ ८ ॥

---

a Savitar

38.

उदु ष्य देवः सविता ययाम
  हिरण्ययीममतिं यामशिश्रेत् ।
नूनं भगो हव्यो मानुषेभि-
  र्वि यो रत्ना पुरूवसुर्दधाति ॥ १ ॥

उदु तिष्ठ सवितः श्रुध्य१स्य
  हिरण्यपाणे प्रभृतावृतस्य ।
व्यु१र्वीं पृथ्वीममतिं सृजान
  आ नृभ्यो मर्तभोजनं सुवानः ॥ २ ॥

अपि ष्टुतः सविता देवो अस्तु
यमा चिद्विश्वे वसवो गृणंति ।
स नु स्तोमान्नमस्य१श्चनो धा-
द्विश्वेभिः पातु पायुभिर्नि सूरीन् ॥ ३ ॥

अभि यं देव्यदितिर्गृणाति
सवं देवस्य सवितुर्जुषाणा ।
अभि सम्राजो वरुणो गृणंत्य-
भि मित्रासो अर्यमा सजोषाः ॥ ४ ॥

अभि ये मिथो वनुषः सपंते
रातिं दिवो रातिषाचः पृथिव्याः ।
अहिर्बुध्न्य उत नः शृणोतु
वरूत्र्येकधेनुभिर्नि पातु ॥ ५ ॥

अनु तन्नो जास्पतिर्मंसीष्ट
रत्नं देवस्य सवितुरियानः ।
भगमुग्रोऽवसे जोहवीति
भगमनुग्रो अध याति रत्नम् ॥ ६ ॥

शं नो भवंतु वाजिनो हवेषु
देवताता मितद्रवः स्वर्काः ।
जंभयंतोऽहिं वृकं रक्षांसि
सनेम्यस्मद्युयवन्नमीवाः ॥ ७ ॥

वाजेवाजेऽवत वाजिनो नो
धनेषु विप्रा अमृता ऋतज्ञाः ।

अस्य मध्वः पिबत मादयध्वं
तृप्ता यात पथिभिर्देवयानैः ॥ ८ ॥

---

Vireadevas.

39.

ऊर्ध्वो अग्निः सुमतिं वस्वो अश्रे-
त्प्रतीची जूर्णिर्देवतातिमेति ।
भेजाते अद्री रथ्येव पंथा-
मृतं होता न इषितो यजाति ॥ १ ॥

प्र वावृजे सुप्रया बर्हिरेषा-
मा विश्पतीव बीरिट इयाते ।
विशामक्तोरुषसः पूर्वहूतौ
वायुः पूषा स्वस्तये नियुत्वान् ॥ २ ॥

ज्मया अत्र वसवो रंत देवा
उरावंतरिक्षे मर्जयंत शुभ्राः ।
अर्वाक्पथ उरुज्रयः कृणुध्वं
श्रोता दूतस्य जग्मुषो नो अस्य ॥ ३ ॥

ते हि यज्ञेषु यज्ञियास ऊमाः
सधस्थं विश्वे अभि संति देवाः ।
ताँ अध्वर उशतो यक्ष्यग्ने
श्रुष्टी भगं नासत्या पुरंधिम् ॥ ४ ॥

अग्ने गिरो दिव आ पृथिव्या
मित्रं वह वरुणमिंद्रमग्निम् ।
आर्यमणमदितिं विष्णुमेषां
सरस्वती मरुतो मादयंताम् ॥ ५ ॥

ररे हव्यं मतिभिर्यज्ञियानां
नक्षत्कामं मर्त्यानामसिन्वन् ।
धाता रयिमविदस्यं सदासां
सक्षीमहि युज्येभिर्नु देवैः ॥ ६ ॥

नू रोदसी अभिष्टुते वसिष्ठै-
ऋतावानो वरुणो मित्रो अग्निः ।
यच्छंतु चंद्रा उपमं नो अर्कं
यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

---

40.

ओ श्रुष्टिर्विदथ्या३ समेतु
प्रति स्तोमं दधीमहि तुराणाम् ।
यदद्य देवः सविता सुवाति
स्यामास्य रत्निनो विभागे ॥ १ ॥

मित्रस्तन्नो वरुणो रोदसी च
द्युभक्तमिंद्रो अर्यमा ददातु ।
दिदेष्टु देव्यदिती रेक्णो
वायुश्च यन्नियुवैते भगश्च ॥ २ ॥

सेदुग्रो अस्तु मरुतः स शुष्मी
यं मर्त्यं पृषदश्वा अवाथ ।
उतेमग्निः सरस्वती जुनंति
न तस्य रायः पर्येतास्ति ॥ ३ ॥

अयं हि नेता वरुण ऋतस्य
मित्रो राजानो अर्यमापो धुः ।
सुहवा देव्यदितिरनर्वा
ते नो अंहो अति पर्षन्नरिष्टान् ॥ ४ ॥

अस्य देवस्य मीळ्हुषो वया
विष्णोरेषस्य प्रभृथे हविर्भिः ।
विदे हि रुद्रो रुद्रियं महित्वं
यासिष्टं वर्तिरश्विनाविरावत् ॥ ५ ॥

मात्र पूषन्नाघृण इरस्यो
वरूत्री यद्रातिषाचंश्च रासन् ।
मयोभुवो नो अर्वंतो नि पांतु
वृष्टिं परिज्मा वातो ददातु ॥ ६ ॥

नू रोदसी अभिष्टुते वसिष्ठै-
र्ऋतावानो वरुणो मित्रो अग्निः ।
यच्छंतु चंद्रा उपमं नो अर्कं
यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

## 41.

प्रातरग्निं प्रातरिंद्रं हवामहे
प्रातर्मित्रावरुणा प्रातरश्विना ।
प्रातर्भगं पूषणं ब्रह्मणस्पतिं
प्रातः सोममुत रुद्रं हुवेम ॥ १ ॥

प्रातर्जितं भगमुग्रं हुवेम
वयं पुत्रमदितेर्यो विधर्ता ।
आध्रश्चिद्यं मन्यमानस्तुरश्चि-
द्राजा चिद्यं भगं भक्षीत्याह ॥ २ ॥

भग प्रणेतर्भग सत्यराधो
भगेमां धियमुदवा ददन्नः ।
भग प्र णो जनय गोभिरश्वै-
र्भग प्र नृभिर्नृवंतः स्याम ॥ ३ ॥

उतेदानीं भगवंतः स्यामो-
त प्रपित्व उत मध्ये अह्नाम् ।
उतोदिता मघवन्सूर्यस्य
वयं देवानां सुमतौ स्याम ॥ ४ ॥

भग एव भगवाँ अस्तु देवा-
स्तेन वयं भगवंतः स्याम ।
तं त्वा भग सर्व इज्जोहवीति
स नो भग पुर एता भवेह ॥ ५ ॥

समध्वरायोषसो नमंत
दधिक्रावेव शुचये पदाय ।
अर्वाचीनं वसुविदं भगं नो
रथमिवाश्वा वाजिन आ वहंतु ॥ ६ ॥

अश्वावतीर्गोमतीर्न उषासो
वीरवतीः सदमुच्छंतु भद्राः ।
घृतं दुहाना विश्वतः प्रपीता
यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

---

Visvedevas

42.

प्र ब्रह्माणो अंगिरसो नक्षंत
प्र क्रंदनुर्नभन्यस्य वेतु ।
प्र धेनव उदप्रुतो नवंत
युज्यातामद्री अध्वरस्य पेशः ॥ १ ॥

सुगस्ते अग्ने सनवित्तो अध्वा
युक्ष्वा सुते हरितो रोहितश्च ।
ये वा सद्मन्नरुषा वीरवाहो
हुवे देवानां जनिमानि सत्तः ॥ २ ॥

समु वो यज्ञं महयन्नमोभिः
प्र होता मंद्रो रिरिच उपाके ।
यजस्व सु पुर्वणीक देवाना
यज्ञियामरमतिं ववृत्याः ॥ ३ ॥

यदा वीरस्य रेवतो दुरोणे
स्योनशीरतिथिराचिकेतत् ।
सुप्रीतो अग्निः सुधितो दम आ
स विशे दाति वार्यमियत्यै ॥ ४ ॥

इमं नो अग्ने अध्वरं जुषस्व
मरुत्स्विंद्रे यशसं कृधी नः ।
आ नक्ता बर्हिः सदतामुषासो-
शंता मित्रावरुणा यजेह ॥ ५ ॥

एवाग्निं सहस्यं१ वसिष्ठो
रायस्कामो विश्वप्स्न्यस्य स्तौत् ।
इषं रयिं पप्रथद्वाजमस्मे
यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥

---

43.

प्र वो यज्ञेषु देवयंतो अर्च-
न्द्यावा नमोभिः पृथिवी इषध्यै ।
येषां ब्रह्माण्यसमानि विप्रा
विष्वग्वियंति वनिनो न शाखाः ॥ १ ॥

प्र यज्ञ एतु हेत्वो न सप्ति-
रुद्यच्छध्वं समनसो घृताचीः ।
स्तृणीत बर्हिरध्वराय साधू-
र्ध्वा शोचींषि देवयून्यस्थुः ॥ २ ॥

आ पुत्रासो न मातरं विभृत्राः
सानौ देवासो बर्हिषः सदंतु ।
आ विश्वाचीं विदथ्यामनक्त्व-
ग्ने मा नो देवताता मृधस्कः ॥ ३ ॥

ते सीषपंत जोषमा यजत्रा
ऋतस्य धाराः सुदुघा दुहानाः ।
ज्येष्ठं वो अद्य मह आ वसूना-
मा गंतन समनसो यति ष्ठ ॥ ४ ॥

एवा नो अग्ने विक्ष्वा दशस्य
त्वया वयं सहसावन्नास्क्राः ।
राया युजा सधमादो अरिष्टा
यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

44.

दधिक्रां वः प्रथममश्विनोषस-
मग्निं समिद्धं भगमूतये हुवे ।
इंद्रं विष्णुं पूषणं ब्रह्मणस्पति-
मादित्यान्द्यावापृथिवी अपः स्वः ॥ १ ॥

दधिक्रामु नमसा बोधयंत
उदीराणा यज्ञमुपप्रयंतः ।
इळां देवीं बर्हिषि सादयंतो-
ऽश्विना विप्रा सुहवा हुवेम ॥ २ ॥

दधिक्रावाणं बुबुधानो अग्नि-
मुप ब्रुव उषसं सूर्यं गाम् ।
ब्रध्नं मांश्चतोर्वरुणस्य बभ्रुं
ते विश्वास्मद्दुरिता यावयंतु ॥ ३ ॥

दधिक्रावा प्रथमो वाज्यर्वा-
ग्रे रथानां भवति प्रजानन् ।
संविदान उषसा सूर्येणा-
दित्येभिर्वसुभिरंगिरोभिः ॥ ४ ॥

आ नो दधिक्राः पथ्यामनक्तु-
तस्य पंथामन्वेतवा उं ।
शृणोतु नो दैव्यं शर्धो अग्निः
शृण्वंतु विश्वे महिषा अमूराः ॥ ५ ॥

---

45.

आ देवो यातु सविता सुरत्नो-
ऽंतरिक्षप्रा वहमानो अश्वैः ।
हस्ते दधानो नर्या पुरूणि
निवेशयंश्च प्रसुवंश्च भूम ॥ १ ॥

उदस्य बाहू शिथिरा बृहंता
हिरण्यया दिवो अंताँ अनष्टाम् ।
नूनं सो अस्य महिमा पनिष्ट
सूरश्चिदस्मा अनु दादपस्याम् ॥ २ ॥

स घा॑ नो दे॒वः स॑वि॒ता स॒हावा
  सा॑विष॒द्वसु॑पति॒र्वसू॑नि ।
वि॒श्रय॑माणो अ॒मति॑मुरू॒चीं
  म॑र्त॒भोज॑न॒मध॑ रासते नः ॥ ३ ॥

इ॒मा गिरः॑ सवि॒तारं॑ सुजि॒ह्वं
  पू॒र्णग॑भस्तिमीळते सुपा॒णिम् ।
चि॒त्रं वयो॑ बृ॒हद॒स्मे द॑धातु
  यू॒यं पा॑त स्व॒स्तिभिः॒ सदा॑ नः ॥ ४ ॥

---

46.

इ॒मा रु॒द्राय॑ स्थि॒रध॑न्वने॒ गिरः॑
  क्षि॒प्रेष॑वे दे॒वाय॑ स्व॒धाव्ने॑ ।
अषा॑ळ्हाय॒ सह॑मानाय वे॒धसे॑
  ति॒ग्मायु॑धाय भरता शृ॒णोतु॑ नः ॥ १ ॥

स हि क्षये॑ण॒ क्षम्य॑स्य॒ जन्म॑नः॒
  साम्रा॑ज्येन दि॒व्यस्य॒ चेत॑ति ।
अव॒न्नव॑न्ती॒रुप॑ नो॒ दुर॑श्चरा-
  नमी॒वो रु॑द्र जा॒सु नो॑ भव ॥ २ ॥

या ते॑ दि॒द्युदव॑सृष्टा दि॒वस्परि॑
  क्ष्म॒या चर॑ति॒ परि॒ सा वृ॑णक्तु नः ।
स॒हस्रं॑ ते स्वपिवात भेष॒जा
  मा न॑स्तो॒केषु॒ तन॑येषु रीरिषः ॥ ३ ॥

मा नो वधी रुद्र मा परा दा
मा ते भूम प्रसितौ हीळितस्य ।
आ नो भज बर्हिषि जीवशंसे
यूयं पात स्वस्तिभिः सदा नः ॥ ४ ॥

---

47.

आपो यं वः प्रथमं देवयंत
इंद्रपानमूर्मिमकृण्वतेळः ।
तं वो वयं शुचिमरिप्रमद्य
घृतप्रुषं मधुमंतं वनेम ॥ १ ॥

तमूर्मिमापो मधुमत्तमं वो-
ऽपां नपादवत्वाशुहेमा ।
यस्मिन्निंद्रो वसुभिर्मादयाते
तमश्याम देवयंतो वो अद्य ॥ २ ॥

शतपवित्राः स्वधया मदंती-
र्देवीर्देवानामपि यंति पाथः ।
ता इंद्रस्य न मिनंति व्रतानि
सिंधुभ्यो हव्यं घृतवज्जुहोत ॥ ३ ॥

याः सूर्यो रश्मिभिराततान
याभ्य इंद्रो अरदद्गातुमूर्मिम् ।
ते सिंधवो वरिवो धातना नो
यूयं पात स्वस्तिभिः सदा नः ॥ ४ ॥

---

48.

ऋभुक्षणो वाजा मादयध्व-
मस्मे नरो मघवानः सुतस्य ।
आ वोऽर्वाचः क्रतवो न यातां
विभ्वो रथं नर्यं वर्तयंतु ॥ १ ॥

ऋभुर्ऋभुभिरभि वः स्याम
विभ्वो विभुभिः शवसा शवांसि ।
वाजो अस्माँ अवतु वाजसाता-
विंद्रेण युजा तरुषेम वृत्रम् ॥ २ ॥

ते चिद्धि पूर्वीरभि संति शासा
विश्वाँ अर्य उपरताति वन्वन् ।
इंद्रो विभ्वाँ ऋभुक्षा वाजो अर्यः
शत्रोर्मिथत्या कृणवन्वि नृम्णम् ॥ ३ ॥

नू देवासो वरिवः कर्तना नो
भूत नो विश्वेऽवसे सजोषाः ।
समस्मे इषं वसवो ददीर-
न्यूयं पात स्वस्तिभिः सदा नः ॥ ४ ॥

---

49.

समुद्रज्येष्ठाः सलिलस्य मध्या-
त्पुनाना यंत्यनिविशमानाः ।

इंद्रो या वज्री वृषभो रराद
ता आपो देवीरिह मामवंतु ॥ १ ॥

या आपो दिव्या उत वा स्रवंति
खनित्रिमा उत वा याः स्वयंजाः ।
समुद्रार्था याः शुचयः पावका-
स्ता आपो देवीरिह मामवंतु ॥ २ ॥

यासां राजा वरुणो याति मध्ये
सत्यानृते अवपश्यञ्जनानाम् ।
मधुश्चुतः शुचयो याः पावका-
स्ता आपो देवीरिह मामवंतु ॥ ३ ॥

यासु राजा वरुणो यासु सोमो
विश्वे देवा यासूर्जं मदंति ।
वैश्वानरो यास्वग्निः प्रविष्ट-
स्ता आपो देवीरिह मामवंतु ॥ ४ ॥

---

50.

आ मां मित्रावरुणेह रक्षतं
कुलाययद्विश्वयन्मा न आ गन् ।
अजकावं दुर्दृशीकं तिरो दधे
मा मां पद्येन रपसा विदत्त्सरुः ॥ १ ॥

यद्विजामन्परुषि वंदनं भुव-
दष्ठीवंतौ परि कुल्फौ च देहत् ।

अग्निष्टच्छोचन्नप बाधतामितो
मा मां पद्येन रपसा विदत्त्सरुः ॥ २ ॥

यच्छल्मलौ भवति यन्नदीषु
यदोषधीभ्यः परि जायते विषम् ।
विश्वे देवा निरितस्तत्सुवंतु
मा मां पद्येन रपसा विदत्त्सरुः ॥ ३ ॥

याः प्रवतो निवत उद्वत
उदन्वतीरनुदकाश्च याः ।
ता अस्मभ्यं पयसा पिन्वमानाः
शिवा देवीरशिपदा भवंतु
सर्वा नद्यो अशिमिदा भवंतु ॥ ४ ॥

---

51.

आदित्यानामवसा नूतनेन
सक्षीमहि शर्मणा शंतमेन ।
अनागास्त्वे अदितित्वे तुरास
इमं यज्ञं दधतु श्रोषमाणाः ॥ १ ॥

आदित्यासो अदितिर्मादयंतां
मित्रो अर्यमा वरुणो रजिष्ठाः ।
अस्माकं संतु भुवनस्य गोपाः
पिबंतु सोममवसे नो अद्य ॥ २ ॥

आदित्या विश्वे मरुतश्च विश्वे
देवाश्च विश्वे ऋभवश्च विश्वे ।
इंद्रो अग्निरश्विना तुष्टुवाना
यूयं पात स्वस्तिभिः सदा नः ॥ ३ ॥

52.

आदित्यासो अदितयः स्याम
पूर्देवत्रा वसवो मर्त्यत्रा ।
सनेम मित्रावरुणा सनंतो
भवेम द्यावापृथिवी भवंतः ॥ १ ॥

मित्रस्तन्नो वरुणो मामहंत
शर्म तोकाय तनयाय गोपाः ।
मा वो भुजेमान्यजातमेनो
मा तत्कर्म वसवो यच्चयध्वे ॥ २ ॥

तुरण्यवोऽंगिरसो नक्षंत
रत्नं देवस्य सवितुरियानाः ।
पिता च तन्नो महान्यजत्रो
विश्वे देवाः समनसो जुषंत ॥ ३ ॥

53.

प्र द्यावा यज्ञैः पृथिवी नमोभिः
सबाध ईळे बृहती यजत्रे ।
ते चिद्धि पूर्वे कवयो गृणंतः
पुरो मही दधिरे देवपुत्रे ॥ १ ॥

प्र पू॑र्व॒जे पि॒तरा॒ नव्य॑सीभि-
गी॒र्भिः कृ॑णुध्वं॒ सद॑ने ऋ॒तस्य॑ ।
आ नो॑ द्यावापृथिवी॒ दैव्ये॑न॒
जने॑न यातं॒ महि॑ वां॒ वरू॑थम् ॥ २ ॥

उ॒तो हि वां॑ रत्न॒धेया॑नि॒ संति॑
पु॒रूणि॑ द्यावापृथिवी सु॒दासे॑ ।
अ॒स्मे ध॑त्तं॒ यदस॒दस्कृ॑धोयु
यू॒यं पा॑त स्व॒स्तिभिः॒ सदा॑ नः ॥ ३ ॥

---

54.

वास्तो॑ष्पते॒ प्रति॑ जानीह्य॒स्मा-
न्स्वा॑वे॒शो अ॑नमी॒वो भ॑वा नः ।
यत्त्वेम॑हे॒ प्रति॒ तन्नो॑ जुषस्व॒
शं नो॑ भव द्वि॒पदे॒ शं चतु॑ष्पदे ॥ १ ॥

वास्तो॑ष्पते प्र॒तर॑णो न एधि
गय॒स्फानो॒ गोभि॒रश्वे॑भिरिंदो ।
अ॒जरा॑सस्ते स॒ख्ये स्या॑म
पि॒तेव॑ पु॒त्रान्प्रति॑ नो जुषस्व ॥ २ ॥

वास्तो॑ष्पते श॒ग्मया॑ सं॒सदा॑ ते
सक्षी॒महि॑ र॒ण्वया॑ गातु॒मत्या॑ ।
पा॒हि क्षेम॑ उ॒त योगे॒ वरं॑ नो
यू॒यं पा॑त स्व॒स्तिभिः॒ सदा॑ नः ॥ ३ ॥

55.

अमीवहा वास्तोष्पते विश्वा रूपाण्याविशन् ।
सखा सुशेव एधि नः ॥ १ ॥

यदर्जुन सारमेय दतः पिशंग यच्छसे ।
वीव भ्राजंत ऋष्टय उप स्रक्केषु बप्सतो
नि षु स्वप ॥ २ ॥

स्तेनं राय सारमेय तस्करं वा पुनःसर ।
स्तोतॄनिंद्रस्य रायसि किमस्मान्दुच्छुनायसे
नि षु स्वप ॥ ३ ॥

त्वं सूकरस्य दर्दृहि तव दर्दर्तु सूकरः ।
स्तोतॄनिंद्रस्य रायसि किमस्मान्दुच्छुनायसे
नि षु स्वप ॥ ४ ॥

सस्तु माता सस्तु पिता सस्तु श्वा सस्तु विश्पतिः ।
ससंतु सर्वे ज्ञातयः सस्त्वयमभितो जनः ॥ ५ ॥

य आस्ते यश्च चरति यश्च पश्यति नो जनः ।
तेषां सं हन्मो अक्षाणि यथेदं हर्म्यं तथा ॥ ६ ॥

सहस्रशृंगो वृषभो यः समुद्रादुदाचरत् ।
तेना सहस्येना वयं नि जनान्स्वापयामसि ॥ ७ ॥

प्रोष्ठेशया वह्येशया नारीर्यास्तल्पशीवरीः ।
स्त्रियो याः पुण्यगंधास्ताः सर्वाः स्वापयामसि ॥ ८ ॥

56.

क ईं व्यंक्ता नरः सनीळा
  रुद्रस्य मर्या अधा स्वश्वाः ॥ १ ॥

नकिर्ह्येषां जनूंषि वेद
  ते अंग विद्रे मिथो जनित्रम् ॥ २ ॥

अभि स्वपूभिर्मिथो वपंत
  वातस्वनसः श्येना अस्पृधन् ॥ ३ ॥

एतानि धीरो निण्या चिकेत
  पृश्निर्यदूधो मही जभार ॥ ४ ॥

सा विट्सुवीरा मरुद्भिरस्तु
  सनात्सहंती पुष्यंती नृम्णम् ॥ ५ ॥

यामं येष्ठाः शुभा शोभिष्ठाः
  श्रिया संमिश्ला ओजोभिरुग्राः ॥ ६ ॥

उग्रं व ओजः स्थिरा शवांस्य-
  धा मरुद्भिर्गणस्तुविष्मान् ॥ ७ ॥

शुभ्रो वः शुष्मः क्रुध्मी मनांसि
  धुनिर्मुनिरिव शर्धस्य धृष्णोः ॥ ८ ॥

सनेम्यस्मद्युयोत दिद्युं
  मा वो दुर्मतिरिह प्रणंङ्नः ॥ ९ ॥

प्रि॒या वो॒ नाम॑ हुवे तु॒राणा॒-
मा यत्तृ॒पन्म॑रुतो वावशा॒नाः ॥ १० ॥

स्वा॒यु॒धास॑ इ॒ष्मिणः॑ सुनि॒ष्का
उ॒त स्व॒यं त॒न्व१॒ः शुम्भ॑मानाः ॥ ११ ॥

शुची॑ वो ह॒व्या म॑रुतः॒ शुची॑नां॒
शुचिं॑ हिनोम्यध्व॒रं शुचि॑भ्यः ।
ऋ॒तेन॑ स॒त्यमृ॑त॒साप॑ आय॒-
ञ्छुचि॑जन्मानः॒ शुच॑यः पाव॒काः ॥ १२ ॥

अंसे॒ष्वा म॑रुतः खा॒दयो॑ वो॒
वक्षः॑सु रु॒क्मा उ॑पशिश्रिया॒णाः ।
वि वि॒द्युतो॒ न वृ॒ष्टिभी॑ रुचा॒ना
अनु॑ स्व॒धामायु॑धै॒र्यच्छ॑मानाः ॥ १३ ॥

प्र बु॒ध्न्या॑ व ईरते॒ महां॑सि॒
प्र नामा॑नि प्रयज्यवस्तिरध्वम् ।
स॒ह॒स्रियं॒ दम्यं॑ भा॒गमे॒तं
गृ॑हमे॒धीयं॑ मरुतो जुषध्वम् ॥ १४ ॥

यदि॑ स्तु॒तस्य॑ मरुतो अधी॒थे-
त्था विप्र॑स्य वा॒जिनो॒ हवी॑मन् ।
म॒क्षू रा॒यः सु॒वीर्य॑स्य दात॒
नू चि॒द्यम॒न्य आ॒दभ॒दरा॑वा ॥ १५ ॥

अत्यासो न ये मरुतः स्वंचो
  यक्षदृशो न शुभयंत मर्याः ।
ते हर्म्येष्ठाः शिशवो न शुभ्रा
  वत्सासो न प्रक्रीळिनः पयोधाः ॥ १६ ॥

दशस्यंतो नो मरुतो मृळंतु
  वरिवस्यंतो रोदसी सुमेके ।
आरे गोहा नृहा वधो वो अस्तु
  सुम्नेभिरस्मे वसवो नमध्वम् ॥ १७ ॥

आ वो होता जोहवीति सत्तः
  सत्राचीं रातिं मरुतो गृणानः ।
य ईवतो वृषणो अस्ति गोपाः
  सो अद्वयावी हवते व उक्थैः ॥ १८ ॥

इमे तुरं मरुतो रामयंती-
  मे सहः सहस आ नमंति ।
इमे शंसं वनुष्यतो नि पांति
  गुरु द्वेषो अररुषे दधंति ॥ १९ ॥

इमे रध्रं चिन्मरुतो जुनंति
  भृमिं चिद्यथा वसवो जुषंत ।
अप बाधध्वं वृषणस्तमांसि
  धत्त विश्वं तनयं तोकमस्मे ॥ २० ॥

मा वो दात्रान्मरुतो निरराम
   मा पश्चाद्दघ्म रथ्यो विभागे ।
आ न स्पार्हे भजतना वसव्ये३
   यदीं सुजातं वृषणो वो अस्ति ॥ २१ ॥

सं यद्धनंत मन्युभिर्जनासः
   शूरा यह्वीष्वोषधीषु विक्षु ।
अध स्मा नो मरुतो रुद्रियास-
   स्त्रातारो भूत पृतनास्वर्यः ॥ २२ ॥

भूरि चक्र मरुतः पित्र्याण्यु-
   क्थानि या वः शस्यंते पुरा चित् ।
मरुद्भिरुग्रः पृतनासु साळ्हा
   मरुद्भिरित्सनिता वाजमर्वा ॥ २३ ॥

अस्मे वीरो मरुतः शुष्म्यस्तु
   जनानां यो असुरो विधर्ता ।
अपो येन सुक्षितये तरेमा-
   ध स्वमोको अभि वः स्याम ॥ २४ ॥

तन्न इंद्रो वरुणो मित्रो अग्नि-
   राप ओषधीर्वनिनो जुषंत ।
शर्मन्स्याम मरुतामुपस्थे
   यूयं पात स्वस्तिभिः सदा नः ॥ २५ ॥

57.

मध्वो वो नाम मारुतं यजत्राः
प्र यज्ञेषु शवसा मदंति ।
ये रेजयंति रोदसी चिदुर्वी
पिन्वंत्युत्सं यदयासुरुग्राः ॥ १ ॥

निचेतारो हि मरुतो गृणंतं
प्रणेतारो यजमानस्य मन्म ।
अस्माकमद्य विदथेषु बर्हि-
रा वीतये सदत पिप्रियाणाः ॥ २ ॥

नैतावदन्ये मरुतो यथेमे
भ्राजंते रुक्मैरायुधैस्तनूभिः ।
आ रोदसी विश्वपिशः पिशानाः
समानमंज्यंजते शुभे कम् ॥ ३ ॥

ऋधक्सा वो मरुतो दिद्युदस्तु
यद्व आगः पुरुषता कराम ।
मा वस्तस्यामपि भूमा यजत्रा
अस्मे वो अस्तु सुमतिश्चनिष्ठा ॥ ४ ॥

कृते चिदत्र मरुतो रणंता-
नवद्यासः शुचयः पावकाः ।
प्र णोऽवत सुमतिभिर्यजत्राः
प्र वाजेभिस्तिरत पुष्यसे नः ॥ ५ ॥

उत स्तुतासो मरुतो व्यंतु
विश्वेभिर्नामभिर्नरो हवींषि ।
ददात नो अमृतस्य प्रजायै
जिगृत रायः सूनृता मघानि ॥ ६ ॥

आ स्तुतासो मरुतो विश्व ऊती
अच्छा सूरीन्सर्वताता जिगात ।
ये नस्त्मना शतिनो वर्धयंति
यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

---

58.

प्र साकमुक्षे अर्चता गणाय
यो दैव्यस्य धाम्नस्तुविष्मान् ।
उत क्षोदंति रोदसी महित्वा
नक्षंते नाकं निर्ऋतेरवंशात् ॥ १ ॥

जनूश्चिद्वो मरुतस्त्वेष्येण
भीमासस्तुविमन्यवोऽयासः ।
प्र ये महोभिरोजसोत संति
विश्वो वो यामन्भयते स्वर्दृक् ॥ २ ॥

बृहद्वयो मघवद्भ्यो दधात
जुजोषन्निन्मरुतः सुष्टुतिं नः ।
गतो नाध्वा वि तिराति जंतुं
प्र णः स्पार्हाभिरूतिभिस्तिरेत ॥ ३ ॥

युष्मोतो विप्रो मरुतः शतस्वी
  युष्मोतो अर्वा सहुरिः सहस्री ।
युष्मोतः सम्राळुत हंति वृत्रं
  प्र तद्वो अस्तु धूतयो देष्णम् ॥ ४ ॥

ताँ आ रुद्रस्य मीळ्हुषो विवासे
  कुविन्नंसंते मरुतः पुनर्नः ।
यत्सस्वर्ता जिहीळिरे यदावि-
  रव तदेन ईमहे तुराणाम् ॥ ५ ॥

प्र सा वाचि सुष्टुतिर्मघोना-
  मिदं सूक्तं मरुतो जुषंत ।
आराच्चिद्द्वेषो वृषणो युयोत
  यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥

---

59.

यं त्रायध्व इदमिदं
  देवासो यं च नयथ ।
तस्मा अग्ने वरुण मित्रार्यम-
  न्मरुतः शर्म यच्छत ॥ १ ॥
युष्माकं देवा अवसाहनि प्रिय
  ईजानस्तरति द्विषः ।
प्र स क्षयं तिरते वि महीरिषो
  यो वो वराय दाशति ॥ २ ॥

नहि वश्चरमं चन
 वसिष्ठः परिमंसते ।
अस्माकमद्य मरुतः सुते सचा
 विश्वे पिबत कामिनः ॥ ३ ॥
नहि व ऊतिः पृतनासु मर्धति
 यस्मा अराध्वं नरः ।
अभि व आवर्त्सुमतिर्नवीयसी
 तूयं यात पिपीषवः ॥ ४ ॥

ओ षु घृष्विराधसो
 यातनांधांसि पीतये ।
इमा वो हव्या मरुतो ररे हि कं
 मो ष्व१न्यत्र गंतन ॥ ५ ॥
आ च नो बर्हिः सदताविता च न
 स्पार्हाणि दातवे वसु ।
अस्रेधंतो मरुतः सोम्ये मधौ
 स्वाहेह मादयाध्वै ॥ ६ ॥

सस्वश्चिद्धि तन्व१ः शुंभमाना
 आ हंसासो नीलपृष्ठा अपप्तन् ।
विश्वं शर्धो अभितो मा नि षेद
 नरो न रण्वाः सवने मदंतः ॥ ७ ॥

यो नो मरुतो अभि दुर्हृणायु-
स्तिरश्चित्तानि वसवो जिघांसति ।
द्रुहः पाशान्प्रति स मुचीष्ट
तपिष्ठेन हन्मना हंतना तम् ॥ ८ ॥

सांतपना इदं हविर्मरुतस्तज्जुजुष्टन ।
युष्माकोती रिशादसः ॥ ९ ॥

गृहमेधास आ गत मरुतो माप भूतन ।
युष्माकोती सुदानवः ॥ १० ॥

इहेह वः स्वतवसः कवयः सूर्यत्वचः ।
यज्ञं मरुत आ वृणे ॥ ११ ॥

त्र्यंबकं यजामहे सुगंधिं पुष्टिवर्धनम् ।
उर्वारुकमिव बंधनान्मृत्योर्मुक्षीय मामृतात् ॥१२॥

---

60.

यदद्य सूर्य ब्रवोऽनागा
उद्यन्मित्राय वरुणाय सत्यम् ।
वयं देवत्रादिते स्याम
तव प्रियासो अर्यमन्गृणंतः ॥ १ ॥

एष स्य मित्रावरुणा नृचक्षा
उभे उदेति सूर्यो अभि ज्मन् ।
विश्वस्य स्थातुर्जगतश्च गोपा
ऋजु मर्तेषु वृजिना च पश्यन् ॥ २ ॥

अयुक्त सप्त हरितः सधस्था-
　द्या ईं वहंति सूर्यं घृताचीः ।
धामानि मित्रावरुणा युवाकुः
　सं यो यूथेव जनिमानि चष्टे ॥ ३ ॥

उद्वां पृक्षासो मधुमंतो अस्थु-
　रा सूर्यो अरुहच्छुक्रमर्णः ।
यस्मा आदित्या अध्वनो रदंति
　मित्रो अर्यमा वरुणः सजोषाः ॥ ४ ॥

इमे चेतारो अनृतस्य भूरे-
　र्मित्रो अर्यमा वरुणो हि संति ।
इम ऋतस्य वावृधुर्दुरोणे
　शग्मासः पुत्रा अदितेरदब्धाः ॥ ५ ॥

इमे मित्रो वरुणो दूळभासो-
　ऽचेतसं चिच्चितयंति दक्षैः ।
अपि क्रतुं सुचेतसं वतंत-
　स्तिरश्चिदंहः सुपथा नयंति ॥ ६ ॥

इमे दिवो अनिमिषा पृथिव्या-
　श्चिकित्वांसो अचेतसं नयंति ।
प्रव्राजे चिन्नद्यो गाधमस्ति
　पारं नो अस्य विष्पितस्य पर्षन् ॥ ७ ॥

यद्गोपावददितिः शर्म भद्रं
मित्रो यच्छंति वरुणः सुदासे ।
तस्मिन्ना तोकं तनयं दधाना
मा कर्म देवहेळनं तुरासः ॥ ८ ॥

अव वेदिं होत्राभिर्यजेत
रिपः काश्चिद्वरुणध्रुतः सः ।
परि द्वेषोभिरर्यमा वृणक्तू-
रुं सुदासे वृषणा उ लोकम् ॥ ९ ॥

सस्वश्चिद्धि समृतिस्त्वेष्येषा-
मपीच्येन सहसा सहंते ।
युष्मद्भिया वृषणो रेजमाना
दक्षस्य चिन्महिना मृळता नः ॥ १० ॥

यो ब्रह्मणे सुमतिमायजाते
वाजस्य सातौ परमस्य रायः ।
सीक्षंत मन्युं मघवानो अर्य
उरु क्षयाय चक्रिरे सुधातु ॥ ११ ॥

इयं देव पुरोहितिर्युवभ्यां
यज्ञेषु मित्रावरुणावकारि ।
विश्वानि दुर्गा पिपृतं तिरो नो
यूयं पात स्वस्तिभिः सदा नः ॥ १२ ॥

61.

उद्वां चक्षुर्वरुण सुप्रतीकं
देवयोरेति सूर्यस्ततन्वान् ।
अभि यो विश्वा भुवनानि चष्टे
स मन्युं मर्त्येष्वा चिकेत ॥ १ ॥

प्र वां स मित्रावरुणावृतावा
विप्रो मन्मानि दीर्घश्रुदियर्ति ।
यस्य ब्रह्माणि सुक्रतू अवाथ
आ यत्क्रत्वा न शरदः पृणैथे ॥ २ ॥

प्रोरोर्मित्रावरुणा पृथिव्याः
प्र दिव ऋष्वाद्बृहतः सुदानू ।
स्पशो दधाथे ओषधीषु विक्ष्वृ-
धग्यतो अनिमिषं रक्षमाणा ॥ ३ ॥

शंसा मित्रस्य वरुणस्य धाम
शुष्मो रोदसी बद्बधे महित्वा ।
अयन्मासा अयज्वनामवीराः
प्र यज्ञमन्मा वृजनं तिराते ॥ ४ ॥

अमूरा विश्वा वृषणाविमा वां
न यासु चित्रं ददृशे न यक्षम् ।
द्रुहः सचन्ते अनृता जनानां
न वां निण्यान्यचिते अभूवन् ॥ ५ ॥

समु वां यज्ञं महयं नमोभि-
हुवे वां मित्रावरुणा सबाधः ।
प्र वां मन्मान्यृचसे नवानि
कृतानि ब्रह्म जुजुषन्निमानि ॥ ६ ॥

इयं देव पुरोहितिर्युवभ्यां
यज्ञेषु मित्रावरुणावकारि ।
विश्वानि दुर्गा पिपृतं तिरो नो
यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

---

62.

उत्सूर्यो बृहदर्चींष्यश्रे-
त्पुरु विश्वा जनिम मानुषाणाम्
समो दिवा ददृशे रोचमानः
क्रत्वा कृतः सुकृतः कर्तृभिर्भूत् ॥ १ ॥

स सूर्य प्रति पुरो न उद्गा
एभि स्तोमेभिरेतशेभिरेवैः ।
प्र नो मित्राय वरुणाय वोचो-
ऽनागसो अर्यम्णे अग्नये च ॥ २ ॥

वि नः सहस्रं शुरुधो रदन्त्वृ-
तावानो वरुणो मित्रो अग्निः ।
यच्छन्तु चन्द्रा उपमं नो अर्क-
मा नः कामं पूपुरन्तु स्तवानाः ॥ ३ ॥

द्यावाभूमी अदिते त्रासीथां नो
ये वां जज्ञुः सुजनिमान ऋष्वे ।
मा हेळे भूम वरुणस्य वायो-
र्मा मित्रस्य प्रियतमस्य नृणाम् ॥ ४ ॥

प्र बाहवा सिसृतं जीवसे न
आ नो गव्यूतिमुक्षतं घृतेन ।
आ नो जने श्रवयतं युवाना
श्रुतं मे मित्रावरुणा हवेमा ॥ ५ ॥

नू मित्रो वरुणो अर्यमा न-
स्त्मने तोकाय वरिवो दधंतु ।
सुगा नो विश्वा सुपथानि संतु
यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥

---

63.

उद्वेति सुभगो विश्वचक्षाः
साधारणः सूर्यो मानुषाणाम् ।
चक्षुर्मित्रस्य वरुणस्य देव-
श्चर्मेव यः समविव्यक्तमांसि ॥ १ ॥

उद्वेति प्रसवीता जनानां
महान्केतुरर्णवः सूर्यस्य ।
समानं चक्रं पर्याविवृत्स-
न्यदेतशो वहति धूर्षु युक्तः ॥ २ ॥

विभ्राजमान उषसामुपस्था-
द्रेभैरुदेत्यनुमद्यमानः ।
एष मे देवः सविता चच्छंद
यः समानं न प्रमिनाति धाम ॥ ३ ॥

दिवो रुक्म उरुचक्षा उदेति
दूरेअर्थस्तरणिर्भ्राजमानः ।
नूनं जनाः सूर्येण प्रसूता
अयन्नर्थानि कृणवन्नपांसि ॥ ४ ॥

यत्रा चक्रुरमृता गातुमस्मै
श्येनो न दीयन्नन्वेति पाथः ।
प्रति वां सूर उदिते विधेम
नमोभिर्मित्रावरुणोत हव्यैः ॥ ५ ॥

नू मित्रो वरुणो अर्यमा न-
स्त्मने तोकाय वरिवो दधंतु ।
सुगा नो विश्वा सुपथानि संतु
यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥

---

64.

दिवि क्षयंता रजसः पृथिव्यां
प्र वां घृतस्य निर्णिजो ददीरन् ।
हव्यं नो मित्रो अर्यमा सुजातो
राजा सुक्षत्रो वरुणो जुषंत ॥ १ ॥

आ राजाना मह ऋतस्य गोपा
सिंधुपती क्षत्रिया यातमर्वाक् ।
इळां नो मित्रावरुणोत वृष्टि-
मव दिव इन्वतं जीरदानू ॥ २ ॥

मित्रस्तन्नो वरुणो देवो अर्यः
प्र साधिष्ठेभिः पथिभिर्नयंतु ।
ब्रवद्यथा न आदरिः सुदास
इषा मदेम सह देवगोपाः ॥३॥

यो वां गर्तं मनसा तक्षदेत-
मूर्ध्वां धीतिं कृणवद्धारयच्च ।
उक्षेथां मित्रावरुणा घृतेन
ता राजाना सुक्षितीस्तर्पयेथाम् ॥ ४ ॥

एष स्तोमो वरुण मित्र तुभ्यं
सोमः शुक्रो न वायवेऽयामि ।
अविष्टं धियो जिगृतं पुरंधी-
र्यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

---

65.

प्रति वां सूर उदिते सूक्तै-
र्मित्रं हुवे वरुणं पूतदक्षम् ॥
ययोरसुर्य१मक्षितं ज्येष्ठं
विश्वस्य यामन्नाचिता जिगत्नु ॥ १ ॥

ता हि देवानामसुरा तावर्या
ता नः क्षितीः करतमूर्जयंतीः ।
अश्याम मित्रावरुणा वयं वां
द्यावा च यत्र पीपयन्नहा च ॥ २ ॥

ता भूरिपाशावनृतस्य सेतू
दुरत्येतू रिपवे मर्त्याय ।
ऋतस्य मित्रावरुणा पथा वा-
मपो न नावा दुरिता तरेम ॥ ३ ॥

आ नो मित्रावरुणा हव्यजुष्टिं
घृतैर्गव्यूतिमुक्षतमिळाभिः ।
प्रति वामत्र वरमा जनाय
पृणीतमुद्नो दिव्यस्य चारोः ॥ ४ ॥

एष स्तोमो वरुण मित्र तुभ्यं
सोमः शुक्रो न वायवेऽयामि ।
अविष्टं धियो जिगृतं पुरंधी-
र्यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

---

66.

प्र मित्रयोर्वरुणयोः स्तोमो न एतु शूष्यः ।
नमस्वान्तुविजातयोः ॥ १ ॥

या धारयंत देवाः सुदक्षा दक्षपितरा ।
असुर्याय प्रमहसा ॥ २ ॥

ता न स्तिपा तनूपा वरुण जरितॄणाम् ।
मित्र साधयतं धियः ॥ ३ ॥

यदद्य सूर उदितेऽनागा मित्रो अर्यमा ।
सुवाति सविता भगः ॥ ४ ॥

सुप्रावीरस्तु स क्षयः प्र नु यामन्सुदानवः ।
ये नो अंहोऽतिपिप्रति ॥ ५ ॥

उत स्वराजो अदितिरदब्धस्य व्रतस्य ये ।
महो राजान ईशते ॥ ६ ॥

प्रति वां सूर उदिते मित्रं गृणीषे वरुणम् ।
अर्यमणं रिशादसम् ॥ ७ ॥

राया हिरण्यया मतिरियमवृकाय शवसे ।
इयं विप्रा मेधसातये ॥ ८ ॥

ते स्याम देव वरुण ते मित्र सूरिभिः सह ।
इषं स्वश्च धीमहि ॥ ९ ॥

बहवः सूरचक्षसो-
ऽग्निजिह्वा ऋतावृधः ।
त्रीणि ये येमुर्विदथानि धीतिभि-
र्विश्वानि परिभूतिभिः ॥ १० ॥
वि ये दधुः शरदं मासमादह-
र्यज्ञमक्तुं चादृचम् ।

अनाप्यं वरुणो मित्रो अर्यमा
क्षत्रं राजान आशत ॥ ११ ॥

तद्वो अद्य मनामहे
सूक्तैः सूर उदिते ।
यदोहते वरुणो मित्रो अर्यमा
यूयमृतस्य रथ्यः ॥ १२ ॥
ऋतावान ऋतजाता ऋतावृधो
घोरासो अनृतद्विषः ।
तेषां वः सुम्ने सुच्छर्दिष्टमे नरः
स्याम ये च सूरयः ॥ १३ ॥

उदु त्यद्दर्शतं वपु-
र्दिव एति प्रतिह्वरे ।
यदीमाशुर्वहति देव एतशो
विश्वस्मै चक्षसे अरम् ॥ १४ ॥
शीर्ष्णःशीर्ष्णो जगतस्तस्थुषस्पतिं
समया विश्वमा रजः ।
सप्त स्वसारः सुविताय सूर्यं
वहन्ति हरितो रथे ॥ १५ ॥

तच्चक्षुर्देवहितं शुक्रमुच्चरत् ।
पश्येम शरदः शतं
जीवेम शरदः शतम् ॥ १६ ॥

काव्येभिरदाभ्या यातं वरुण द्युमत् ।
मित्रश्च सोमपीतये ॥ १७ ॥

दिवो धामभिर्वरुण मित्रश्चा यातमद्रुहा ।
पिबतं सोममातुजी ॥ १८ ॥

आ यातं मित्रावरुणा जुषाणावाहुतिं नरा ।
पातं सोममृतावृधा ॥ १९ ॥

---

67.

प्रति वां रथं नृपती जरध्यै
हविष्मता मनसा यज्ञियेन ।
यो वां दूतो न धिष्ण्यावजीग-
रच्छा सूनुर्न पितरा विवक्मि ॥ १ ॥

अशोच्यग्निः समिधानो अस्मे
उपो अदृश्रन्तमसश्चिदन्ताः ।
अचेति केतुरुषसः पुरस्ता-
च्छ्रिये दिवो दुहितुर्जायमानः ॥ २ ॥

अभि वां नूनमश्विना सुहोता
स्तोमैः सिषक्ति नासत्या विवक्वान् ।
पूर्वीभिर्यातं पथ्याभिरर्वा-
क्स्वर्विदा वसुमता रथेन ॥ ३ ॥

अवोर्वां नूनमश्विना युवाकु-
    र्हुवे यद्वां सुते माध्वी वसूयुः ।
आ वां वहंतु स्थविरासो अश्वाः
    पिबाथो अस्मे सुषुता मधूनि ॥ ४ ॥

प्राचीमु देवाश्विना धियं मे-
    ऽमृध्रां सातये कृतं वसूयुम् ।
विश्वा अविष्टं वाज आ पुरंधी-
    स्ता नः शक्तं शचीपती शचीभिः ॥ ५ ॥

अविष्टं धीष्वश्विना न आसु
    प्रजावद्रेतो अह्रयं नो अस्तु ।
आ वां तोके तनये तूतुजानाः
    सुरत्नासो देववीतिं गमेम ॥ ६ ॥

एष स्य वां पूर्वगत्वेव सख्ये
    निधिर्हितो माध्वी रातो अस्मे ।
अहेळता मनसा यातमर्वा-
    गश्नंता हव्यं मानुषीषु विक्षु ॥ ७ ॥

एकस्मिन्योगे भुरणा समाने
    परि वां सप्त स्रवतो रथो गात् ।
न वायंति सुभ्वो देवयुक्ता
    ये वां धूर्षु तरणयो वहंति ॥ ८ ॥

असश्चता मघवद्भ्यो हि भूतं
 ये राया मघदेयं जुनंति ।
प्र ये बंधुं सूनृताभिस्तिरंते
 गव्या पृंचंतो अश्व्या मघानि ॥ ९ ॥

नू मे हवमा शृणुतं युवाना
 यासिष्टं वर्तिरश्विनाविरावत् ।
धत्तं रत्नानि जरतं च सूरी-
 न्यूयं पात स्वस्तिभिः सदा नः ॥ १० ॥

---

68.

आ शुभ्रा यातमश्विना स्वश्वा
 गिरो दस्रा जुजुषाणा युवाकोः ।
हव्यानि च प्रतिभृता वीतं नः ॥ १ ॥

प्र वामंधांसि मद्यान्यस्थु-
 ररं गंतं हविषो वीतये मे ।
तिरो अर्यो हवनानि श्रुतं नः ॥ २ ॥

प्र वां रथो मनोजवा इयर्ति
 तिरो रजांस्यश्विना शतोतिः ।
अस्मभ्यं सूर्यावसू इयानः ॥ ३ ॥

अयं ह यद्वां देवया उ अद्रि-
 रूर्ध्वो विवक्ति सोमसुद्युवभ्याम् ।
आ वल्गू विप्रो ववृतीत हव्यैः ॥ ४ ॥

चित्रं ह यद्वां भोजनं न्वस्ति
 न्यत्रये महिष्वंतं युयोतम् ।
यो वामोमानं दधते प्रियः सन् ॥ ५ ॥

उत त्यद्वां जुरते अश्विना भू-
 च्चयवानाय प्रतीत्यं हविर्दे ।
अधि यद्वर्प इतऊति धत्थः ॥ ६ ॥

उत त्यं भुज्युमश्विना सखायो
 मध्ये जहुर्दुरेवासः समुद्रे ।
निरीं पर्षदरावा यो युवाकुः ॥ ७ ॥

वृकाय चिज्जसमानाय शक्त-
 मुत श्रुतं शयवे हूयमाना ।
यावघ्न्यामपिन्वतमपो न
 स्तर्यं चिच्छक्त्यश्विना शचीभिः ॥ ८ ॥

एष स्य कारुर्जरते सूक्तै-
 रग्रे बुधान उषसां सुमन्मा ।
इषा तं वर्धदघ्न्या पयोभि-
 र्यूयं पात स्वस्तिभिः सदा नः ॥ ९ ॥

---

69.

आ वां रथो रोदसी बद्बधानो
 हिरण्ययो वृषभिर्यात्वश्वैः ।

घृतवर्तनिः पविभी रुचान
इषां वोळ्हा नृपतिर्वाजिनीवान् ॥ १ ॥

स पप्रथानो अभि पंच भूमा
त्रिवंधुरो मनसा यातु युक्तः ।
विशो येन गच्छथो देवयंतीः
कुत्रा चिद्याममश्विना दधाना ॥ २ ॥

स्वश्वा यशसा यातमर्वा-
ग्दस्रा निधिं मधुमंतं पिबाथः ।
वि वां रथो वध्वा३ यादमानो-
ऽंतान्दिवो बाधते वर्तनिभ्याम् ॥ ३ ॥

युवोः श्रियं परि योषावृणीत
सूरो दुहिता परितक्म्यायाम् ।
यद्देवयंतमवथः शचीभिः
परि घ्रंसमोमना वां वयो गात् ॥ ४ ॥

यो ह स्य वां रथिरा वस्त उस्रा
रथो युजानः परियाति वर्तिः ।
तेन नः शं योरुषसो व्युष्टौ
न्यश्विना वहतं यज्ञे अस्मिन् ॥ ५ ॥

नरा गौरेव विद्युतं तृषाणा-
स्माकमद्य सवनोप यातम् ।

पुरुत्रा हि वां मतिभिर्हवंते
मा वामन्ये नि यमन्देवयंतः ॥ ६ ॥

युवं भुज्युमवविद्धं समुद्र
उदूहथुरर्णसो अस्रिधानैः ।
पतत्रिभिरश्रमैरव्यथिभि-
र्दंसनाभिरश्विना पारयंता ॥ ७ ॥

नू मे हवमा शृणुतं युवाना
यासिष्टं वर्तिरश्विनाविरावत् ।
धत्तं रत्नानि जरतं च सूरी-
न्यूयं पात स्वस्तिभिः सदा नः ॥ ८ ॥

---

70.

आ विश्ववाराश्विना गतं नः
प्र तत्स्थानमवाचि वां पृथिव्याम् ।
अश्वो न वाजी शुनपृष्ठो अस्था-
दा यत्सेदथुर्ध्रुवसे न योनिम् ॥ १ ॥

सिषक्ति सा वां सुमतिश्चनिष्ठा-
तापि घर्मो मनुषो दुरोणे ।
यो वां समुद्रान्सरितः पिपर्त्ये-
तग्वा चिन्न सुयुजा युजानः ॥ २ ॥

यानि स्थानान्यश्विना दधाथे
दिवो यह्वीष्वोषधीषु विक्षु ।
नि पर्वतस्य मूर्धनि सदन्ते-
षं जनाय दाशुषे वहन्ता ॥ ३ ॥

चनिष्टं देवा ओषधीष्वप्सु
यद्योग्या अश्नवैथे ऋषीणाम् ।
पुरूणि रत्ना दधतौ न्य१स्मे
अनु पूर्वाणि चख्यथुर्युगानि ॥ ४ ॥

शुश्रुवांसा चिदश्विना पुरूण्य-
भि ब्रह्माणि चक्षाथे ऋषीणाम् ।
प्रति प्र यातं वरमा जनाया-
स्मे वामस्तु सुमतिश्चनिष्ठा ॥ ५ ॥

यो वां यज्ञो नासत्या हविष्मा-
न्कृतब्रह्मा समर्यो३भवाति ।
उप प्र यातं वरमा वसिष्ठ-
मिमा ब्रह्माण्यृच्यन्ते युवभ्याम् ॥ ६ ॥

इयं मनीषा इयमश्विना गी-
रिमां सुवृक्तिं वृषणा जुषेथाम् ।
इमा ब्रह्माणि युवयून्यग्म-
न्यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

---

71.

अप स्वसुरुषसो नग्जिहीते
रिणक्ति कृष्णीररुषाय पंथाम् ।
अश्वामघा गोमघा वां हुवेम
दिवा नक्तं शरुमस्मद्युयोतम् ॥ १ ॥

उपायातं दाशुषे मर्त्याय
रथेन वाममश्विना वहंता ।
युयुतमस्मदनिराममीवां
दिवा नक्तं माध्वी त्रासीथां नः ॥ २ ॥

आ वां रथमवमस्यां व्युष्टौ
सुम्नायवो वृषणो वर्तयंतु ।
स्यूमगभस्तिमृतयुग्भिरश्वै-
राश्विना वसुमंतं वहेथाम् ॥ ३ ॥

यो वां रथो नृपती अस्ति वोळ्हा
त्रिवंधुरो वसुमाँ उस्रयामा ।
आ न एना नासत्योप यात-
मभि यद्वां विश्वप्स्न्यो जिगाति ॥ ४ ॥

युवं च्यवानं जरसोऽमुमुक्तं
नि पेदव ऊहथुराशुमश्वम् ।
निरंहसस्तमसः स्पर्तमत्रिं
नि जाहुषं शिथिरे धातमंतः ॥ ५ ॥

इयं मनीषा इयमश्विना गी-
रिमां सुवृक्तिं वृषणा जुषेथाम् ।
इमा ब्रह्माणि युवयून्यग्म-
न्यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥

72.

आ गोमता नासत्या रथेना-
श्वावता पुरुश्चंद्रेण यातम् ।
अभि वां विश्वा नियुतः सचंते
स्पार्हया श्रिया तन्वा शुभाना ॥ १ ॥

आ नो देवेभिरुप यातमर्वा-
क्सजोषसा नासत्या रथेन ।
युवोर्हि नः सख्या पित्र्याणि
समानो बंधुरुत तस्य वित्तम् ॥ २ ॥

उदु स्तोमासो अश्विनोरबुध्र-
ञ्जामि ब्रह्माण्युषसश्च देवीः ।
आविवासन्रोदसी धिष्ण्येमे
अच्छा विप्रो नासत्या विवक्ति ॥ ३ ॥

वि चेदुच्छंत्यश्विना उषासः
प्र वां ब्रह्माणि कारवो भरंते ।
ऊर्ध्वं भानुं सविता देवो अश्रे-
द्बृहदग्नयः समिधा जरंते ॥ ४ ॥

आ पश्चातान्नासत्या पुरस्ता-
दाश्विना यातमधरादुदक्तात् ।
आ विश्वतः पांचजन्येन राया
यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

---

73.

अतारिष्म तमसस्पारमस्य
प्रति स्तोमं देवयंतो दधानाः ।
पुरुदंसा पुरुतमा पुराजा-
मर्त्या हवते अश्विना गीः ॥ १ ॥

न्यु प्रियो मनुषः सादि होता
नासत्या यो यजते वंदते च ।
अश्नीतं मध्वो अश्विना उपाक
आ वां वोचे विदथेषु प्रयस्वान् ॥ २ ॥

अहेम यज्ञं पथामुराणा
इमां सुवृक्तिं वृषणा जुषेथाम् ।
श्रुष्टीवेव प्रेषितो वामबोधि
प्रति स्तोमैर्जरमाणो वसिष्ठः ॥ ३ ॥

उप त्या वह्नी गमतो विशं नो
रक्षोहणा संभृता वीळुपाणी ।
समंधांस्यग्मत मत्सराणि
मा नो मर्धिष्टमा गतं शिवेन ॥ ४ ॥

आ प॒श्चाता॑न्नासत्या पु॒रस्ता॒-
दाश्वि॑ना यातमध॒रादुद॑क्तात् ।
आ वि॒श्वतः॒ पाञ्च॑जन्येन रा॒या
यू॒यं पा॑त स्व॒स्तिभिः॒ सदा॑ नः ॥ ९ ॥

74.

इ॒मा उ॑ वां॒ दिवि॑ष्टय
उ॒स्रा ह॑वन्ते अश्विना ।
अ॒यं वा॑म॒ह्वेऽव॑से शचीवसू
विशं॑विशं॒ हि गच्छ॑थः ॥ १ ॥
यु॒वं चि॒त्रं द॑दथु॒र्भोज॑नं नरा॒
चोदे॑थां सू॒नृता॑वते ।
अ॒र्वाग्रथं॒ सम॑नसा॒ नि य॑च्छतं॒
पिब॑तं सो॒म्यं मधु॑ ॥ २ ॥

आ या॑त॒मुप॑ भूषतं॒
मध्वः॑ पिबतमश्विना ।
दु॒ग्धं पयो॑ वृषणा जेन्यावसू
मा नो॑ मर्धिष्टमा ग॑तम् ॥ ३ ॥
अश्वा॑सो॒ ये वा॒मुप॑ दा॒शुषो॑ गृ॒हं
यु॒वां दीय॑न्ति॒ बिभ्र॑तः ।
म॒क्षूयुभि॑र्नरा॒ हये॑भिरश्वि॒ना
देवा॑ यातमस्म॒यू ॥ ४ ॥

अधा ह यंतो अश्विना
पृक्षः सचंत सूरयः ।
ता यंसतो मघवंद्भ्यो ध्रुवं यशः-
श्छर्दिरस्मभ्यं नासत्या ॥ ५ ॥
प्र ये ययुरवृकासो रथा इव
नृपातारो जनानाम् ।
उत स्वेन शवसा शूशुवुर्नर
उत क्षियंति सुक्षितिम् ॥ ६ ॥

---

75.

व्युषा आवो दिविजा ऋतेना-
विष्कृण्वाना महिमानमागात् ।
अप द्रुहस्तम आवरजुष्ट-
मंगिरस्तमा पथ्या अजीगः ॥ १ ॥

महे नो अद्य सुविताय बोध्यु-
षो महे सौभगाय प्र यंधि ।
चित्रं रयिं यशसं धेह्यस्मे
देवि मर्तेषु मानुषि श्रवस्युम् ॥ २ ॥

एते त्ये भानवो दर्शतायाः-
श्चित्रा उषसो अमृतास आगुः ।
जनयंतो दैव्यानि व्रता-
न्यापृणंतो अंतरिक्षा व्यस्थुः ॥ ३ ॥

एषा स्या युजाना पराका-
त्पंच क्षितीः परि सद्यो जिगाति ।
अभिपश्यंती वयुना जनानां
दिवो दुहिता भुवनस्य पत्नी ॥ ४ ॥

वाजिनीवती सूर्यस्य योषा
चित्रामघा राय ईशे वसूनाम् ।
ऋषिष्टुता जरयंती मघोन्यु-
षा उच्छति वह्निभिर्गृणाना ॥ ५ ॥

प्रति द्युतानामरुषासो अश्वा-
श्चित्रा अदृश्रन्नुषसं वहंतः ।
याति शुभ्रा विश्वपिशा रथेन
दधाति रत्नं विधते जनाय ॥ ६ ॥

सत्या सत्येभिर्महती महद्भि-
र्देवी देवेभिर्यजता यजत्रैः ।
रुजद्दृळ्हानि दददुस्रियाणां
प्रति गाव उषसं वावशंत ॥ ७ ॥

नू नो गोमद्वीरवद्धेहि रत्न-
मुषो अश्वावत्पुरुभोजो अस्मे ।
मा नो बर्हिः पुरुषता निदे क-
र्यूयं पात स्वस्तिभिः सदा नः ॥ ८ ॥

76.

उदु ज्योतिरमृतं विश्वजन्यं
विश्वानरः सविता देवो अश्रेत् ।
क्रत्वा देवानामजनिष्ट चक्षु-
राविरकर्भुवनं विश्वमुषाः ॥ १ ॥

प्र मे पंथा देवयाना अदृश्र-
न्नमर्धंतो वसुभिरिष्कृतासः ।
अभूदु केतुरुषसः पुरस्ता-
त्प्रतीच्यागादधि हर्म्येभ्यः ॥ २ ॥

तानीदहानि बहुलान्यास-
न्या प्राचीनमुदिता सूर्यस्य ।
यतः परि जार इवाचरंत्यु-
षो ददृक्षे न पुनर्यतीव ॥ ३ ॥

त इद्देवानां सधमाद आस-
न्नृतावानः कवयः पूर्व्यासः ।
गूळ्हं ज्योतिः पितरो अन्वविंद-
न्सत्यमंत्रा अजनयन्नुषासम् ॥ ४ ॥

समान ऊर्वे अधि संगतासः
सं जानते न यतंते मिथस्ते ।
ते देवानां न मिनंति व्रतान्य-
मर्धंतो वसुभिर्यादमानाः ॥ ५ ॥

प्रति त्वा स्तोमैरीळते वसिष्ठा
  उषर्बुधः सुभगे तुष्टुवांसः ।
गवां नेत्री वाजपत्नी न उच्छो-
  षः सुजाते प्रथमा जरस्व ॥ ६ ॥

एषा नेत्री राधसः सूनृताना-
  मुषा उच्छंती रिभ्यते वसिष्ठैः ।
दीर्घश्रुतं रयिमस्मे दधाना
  यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

---

77.

उपो रुरुचे युवतिर्न योषा
  विश्वं जीवं प्रसुवंती चरायै ।
अभूदग्निः समिधे मानुषाणा-
  मकर्ज्योतिर्बाधमाना तमांसि ॥ १ ॥

विश्वं प्रतीची सप्रथा उदस्था-
  द्रुशद्वासो बिभ्रती शुक्रमश्वैत् ।
हिरण्यवर्णा सुदृशीकसंदृ-
  ग्गवां माता नेत्र्यह्नामरोचि ॥ २ ॥

देवानां चक्षुः सुभगा वहंती
  श्वेतं नयंती सुदृशीकमश्वम् ।
उषा अदर्शि रश्मिभिर्व्यक्ता
  चित्रामघा विश्वमनु प्रभूता ॥ ३ ॥

अंतिवामा दूरे अमित्रमुच्छो-
र्वीं गव्यूतिमभयं कृधी नः ।
यावय द्वेष आ भरा वसूनि
चोदय राधो गृणते मघोनि ॥ ४ ॥

अस्मे श्रेष्ठेभिर्भानुभिर्वि भाह्यु-
षो देवि प्रतिरंती न आयुः ।
इषं च नो दधती विश्ववारे
गोमदश्वावद्रथवच्च राधः ॥ ५ ॥

यां त्वा दिवो दुहितर्वर्धयंत्यु-
षः सुजाते मतिभिर्वसिष्ठाः ।
सास्मासु धा रयिमृष्वं बृहंतं
यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥

---

78.

प्रति केतवः प्रथमा अदृश्र-
न्नूर्ध्वा अस्या अंजयो वि श्रयंते ।
उषो अर्वाचा बृहता रथेन
ज्योतिष्मता वाममस्मभ्यं वक्षि ॥ १ ॥

प्रति षीमग्निर्जरते समिद्धः
प्रति विप्रासो मतिभिर्गृणंतः ।
उषा याति ज्योतिषा बाधमाना
विश्वा तमांसि दुरितापं देवी ॥ २ ॥

एता उ त्याः प्रत्यदृश्रन्पुरस्ता-
ज्ज्योतिर्यच्छंतीरुषसो विभातीः ।
अजीजनन्सूर्यं यज्ञमग्नि-
मपाचीनं तमो अगादजुष्टम् ॥ ३ ॥

अचेति दिवो दुहिता मघोनी
विश्वे पश्यंत्युषसं विभातीम् ।
आस्थाद्रथं स्वधया युज्यमान-
मा यमश्वासः सुयुजो वहंति ॥ ४ ॥

प्रति त्वाद्य सुमनसो बुधंता-
स्माकासो मघवानो वयं च ।
तिल्विलायध्वमुषसो विभाती-
र्यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥

---

79.

व्युषा आवः पथ्या जनानां
पंच क्षितीर्मानुषीर्बोधयंती ।
सुसंदृग्भिरुक्षभिर्भानुमश्रे-
द्वि सूर्यो रोदसी चक्षसावः ॥ १ ॥

व्यंजते दिवो अंतेष्वक्तू-
न्विशो न युक्ता उषसो यतंते ।
सं ते गावस्तम आ वर्तयंति
ज्योतिर्यच्छंति सवितेव बाहू ॥ २ ॥

अभूदुषा इंद्रतमा मघोन्य-
जीजनत्सुविताय श्रवांसि ।
वि दिवो देवी दुहिता दधात्यं-
गिरस्तमा सुकृते वसूनि ॥ ३ ॥

तावदुषो राधो अस्मभ्यं रास्व
यावत्स्तोतृभ्यो अरदो गृणाना ।
यां त्वा जज्ञुर्वृषभस्या रवेण
वि दृळ्हस्य दुरो अद्रेरौर्णोः ॥ ४ ॥

देवंदेवं राधसे चोदयंत्य-
स्मद्र्यक्सूनृता ईरयंती ।
व्युच्छंती नः सनये धियो धा
यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

---

80.

प्रति स्तोमेभिरुषसं वसिष्ठा
गीर्भिर्विप्रासः प्रथमा अबुध्रन् ।
विवर्तयंतीं रजसी समंते
आविष्कृण्वतीं भुवनानि विश्वा ॥ १ ॥

एषा स्या नव्यमायुर्दधाना
गूढ्वी तमो ज्योतिषोषा अबोधि ।
अग्र एति युवतिरह्रयाणा
प्राचिकितत्सूर्यं यज्ञमग्निम् ॥ २ ॥

अश्वावतीर्गोमतीर्न उषासो
वीरवतीः सदमुच्छंतु भद्राः ।
घृतं दुहाना विश्वतः प्रपीता
यूयं पात स्वस्तिभिः सदा नः ॥ ३ ॥

81.

प्रत्यु अदर्श्यायत्यु१-
च्छंती दुहिता दिवः ।
अपो महि व्ययति चक्षसे तमो
ज्योतिष्कृणोति सूनरी ॥ १ ॥
उदुस्रियाः सृजते सूर्यः सचाँ
उद्यन्नक्षत्रमर्चिवत् ।
तवेदुषो व्युषि सूर्यस्य च
सं भक्तेन गमेमहि ॥ २ ॥

प्रति त्वा दुहितर्दिव
उषो जीरा अभुत्स्महि ।
या वहसि पुरु स्पार्हं वनन्वति
रत्नं न दाशुषे मयः ॥ ३ ॥
उच्छंती या कृणोषि मंहना महि
प्रख्यै देवि स्वर्दृशे ।
तस्यास्ते रत्नभाज ईमहे वयं
स्याम मातुर्न सूनवः ॥ ४ ॥

तच्चित्रं राध आ भरो-
षो यद्दीर्घश्रुत्तमम् ।
यत्ते दिवो दुहितर्मर्तभोजनं
तद्रास्व भुनजामहै ॥ ५ ॥
श्रवः सूरिभ्यो अमृतं वसुत्वनं
वाजाँ अस्मभ्यं गोमतः ।
चोदयित्री मघोनः सूनृतावत्यु-
षा उच्छदप स्रिधः ॥ ६ ॥

82.

इंद्रावरुणा युवमध्वराय नो
विशे जनाय महि शर्म यच्छतम् ।
दीर्घप्रयज्युमति यो वनुष्यति
वयं जयेम पृतनासु दूढ्यः ॥ १ ॥

सम्राळन्यः स्वराळन्य उच्यते वां
महांताविंद्रावरुणा महावसू ।
विश्वे देवासः परमे व्योमनि
सं वामोजो वृषणा सं बलं दधुः ॥ २ ॥

अन्वपां खान्यतृंतमोजसा
सूर्यमैरयतं दिवि प्रभुम् ।
इंद्रावरुणा मदे अस्य मायिनो-
ऽपिन्वतमपितः पिन्वतं धियः ॥ ३ ॥

युवामिद्युत्सु पृतनासु वह्नयो
   युवां क्षेमस्य प्रसवे मितज्ञवः ।
ईशाना वस्व उभयस्य कारव
   इंद्रावरुणा सुहवा हवामहे ॥ ४ ॥

इंद्रावरुणा यदिमानि चक्रथु-
   र्विश्वा जातानि भुवनस्य मज्मना ।
क्षेमेण मित्रो वरुणं दुवस्यति
   मरुद्भिरुग्रः शुभमन्य ईयते ॥ ५ ॥

महे शुल्काय वरुणस्य नु त्विष
   ओजो मिमाते ध्रुवमस्य यत्स्वम् ।
अजामिमन्यः श्नथयंतमातिर-
   द्दभ्रेभिरन्यः प्र वृणोति भूयसः ॥ ६ ॥

न तमंहो न दुरितानि मर्त्य-
   मिंद्रावरुणा न तपः कुतश्चन ।
यस्य देवा गच्छथो वीथो अध्वरं
   न तं मर्तस्य नशते परिह्वृतिः ॥ ७ ॥

अर्वाङ्नरा दैव्येनावसा गतं
   शृणुतं हवं यदि मे जुजोषथः ।
युवोर्हि सख्यमुत वा यदाप्यं
   मार्डीकमिंद्रावरुणा नि यच्छतम् ॥ ८ ॥

अस्माकमिंद्रावरुणा भरेभरे
 पुरोयोधा भवतं कृष्ट्योजसा ।
यद्वां हवंत उभये अध स्पृधि
 नरस्तोकस्य तनयस्य सातिषु ॥ ९ ॥

अस्मे इंद्रो वरुणो मित्रो अर्यमा
 द्युम्नं यच्छंतु महि शर्म सप्रथः ।
अवध्रं ज्योतिरदितेर्ऋतावृधो
 देवस्य श्लोकं सवितुर्मनामहे ॥ १० ॥

---

83.

युवां नरा पश्यमानास आप्यं
 प्राचा गव्यंतः पृथुपर्शवो ययुः ।
दासा च वृत्रा हतमार्याणि च
 सुदासमिंद्रावरुणावसावतम् ॥ १ ॥

यत्रा नरः समयंते कृतध्वजो
 यस्मिन्नाजा भवति किं चन प्रियम् ।
यत्रा भयंते भुवना स्वर्दृश-
 स्तत्रा न इंद्रावरुणाधि वोचतम् ॥ २ ॥

सं भूम्या अंता ध्वसिरा अदृक्षतें-
 द्रावरुणा दिवि घोष आरुहत् ।
अस्थुर्जनानामुप मामरातयो-
 ऽर्वागवसा हवनश्रुता गतम् ॥ ३ ॥

इंद्रावरुणा वधनाभिरप्रति
   भेदं वन्वंता प्र सुदासमावतम् ।
ब्रह्माण्येषां शृणुतं हवीमनि
   सत्या तृत्सूनामभवत्पुरोहितिः ॥ ४ ॥

इंद्रावरुणावभ्या तपंति
   मघान्यर्यो वनुषामरातयः ।
युवं हि वस्व उभयस्य राजथो-
   ऽध स्मा नोऽवतं पार्ये दिवि ॥ ५ ॥

युवां हवंत उभयास आजिष्वि-
   न्द्रं च वस्वो वरुणं च सातये ।
यत्र राजभिर्दशभिर्निबाधितं
   प्र सुदासमावतं तृत्सुभिः सह ॥ ६ ॥

दश राजानः समिता अयज्यवः
   सुदासमिंद्रावरुणा न युयुधुः ।
सत्या नृणामद्मसदामुपस्तुति-
   र्देवा एषामभवन्देवहूतिषु ॥ ७ ॥

दाशराज्ञे परियत्ताय विश्वतः
   सुदास इंद्रावरुणावशिक्षतम् ।
श्वित्यंचो यत्र नमसा कपर्दिनो
   धिया धीवंतो असपंत तृत्सवः ॥ ८ ॥

वृत्राण्यन्यः समिथेषु जिघ्नते
   व्रतान्यन्यो अभि रक्षते सदा ।
हवामहे वां वृषणा सुवृक्तिभि-
   रस्मे इंद्रावरुणा शर्म यच्छतम् ॥ ९ ॥

अस्मे इंद्रो वरुणो मित्रो अर्यमा
   द्युम्नं यच्छंतु महि शर्म सप्रथः ।
अवध्रं ज्योतिरदितेर्ऋतावृधो
   देवस्य श्लोकं सवितुर्मनामहे ॥ १० ॥

---

84.

आ वां राजानावध्वरे ववृत्यां
   हव्येभिरिंद्रावरुणा नमोभिः ।
प्र वां घृताची बाह्वोर्दधाना
   परि त्मना विषुरूपा जिगाति ॥ १ ॥

युवो राष्ट्रं बृहदिन्वति द्यौ-
   र्यौ सेतृभिररज्जुभिः सिनीथः ।
परि नो हेळो वरुणस्य वृज्या
   उरुं न इंद्रः कृणवदु लोकम् ॥ २ ॥

कृतं नो यज्ञं विदथेषु चारुं
   कृतं ब्रह्माणि सूरिषु प्रशस्ता ।
उपो रयिर्देवजूतो न एतु
   प्र णः स्पार्हाभिरूतिभिस्तिरेतम् ॥ ३ ॥

अस्मे इंद्रावरुणा विश्ववारं
रयिं धत्तं वसुमंतं पुरुक्षुम् ।
प्र य आदित्यो अनृता मिनात्य-
मिता शूरो दयते वसूनि ॥ ४ ॥

इयमिंद्रं वरुणमष्ट मे गीः
प्रावत्तोके तनये तूतुजाना ।
सुरत्नासो देववीतिं गमेम
यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

---

85.

पुनीषे वामरक्षसं मनीषां
सोममिंद्राय वरुणाय जुह्वत् ।
घृतप्रतीकामुषसं न देवीं
ता नो यामन्नुरुष्यतामभीके ॥ १ ॥

स्पर्धंते वा उ देवहूये अत्र
येषु ध्वजेषु दिद्यवः पतंति ।
युवं ताँ इंद्रावरुणावमित्रा-
न्हतं पराचः शर्वा विषूचः ॥ २ ॥

आपश्चिद्धि स्वयशसः सदःसु
देवीरिंद्रं वरुणं देवता धुः ।
कृष्टीरन्यो धारयति प्रविक्ता
वृत्राण्यन्यो अप्रतीनि हंति ॥ ३ ॥

स सुक्रतुर्ऋतचिदस्तु होता
य आदित्य शवसा वां नमस्वान् ।
आववर्तदवसे वां हविष्मा-
नसदित्स सुविताय प्रयस्वान् ॥ ४ ॥

इयमिन्द्रं वरुणमष्ट मे गीः
प्रावत्तोके तनये तूतुजाना ।
सुरत्नासो देववीतिं गमेम
यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

## 86.

धीरा त्वस्य महिना जनूंषि
वि यस्तस्तंभ रोदसी चिदुर्वी ।
प्र नाकमृष्वं नुनुदे बृहंतं
द्विता नक्षत्रं पप्रथच्च भूम ॥ १ ॥

उत स्वया तन्वा३सं वदे त-
त्कदा न्व१ंतर्वरुणे भुवानि ।
किं मे हव्यमहृणानो जुषेत
कदा मृळीकं सुमना अभि ख्यम् ॥ २ ॥

पृच्छे तदेनो वरुण दिदृक्षू-
पो एमि चिकितुषो विपृच्छम् ।
समानमिन्मे कवयश्चिदाहु-
रयं ह तुभ्यं वरुणो हृणीते ॥ ३ ॥

किमाग आस वरुण ज्येष्ठं
  यत्स्तोतारं जिघांससि सखायम् ।
प्र तन्मे वोचो दूळभ स्वधावो-
  ऽव त्वानेना नमसा तुर इयाम् ॥ ४ ॥

अव द्रुग्धानि पित्र्या सृजा नो-
  ऽव या वयं चकृमा तनूभिः ।
अव राजन्पशुतृपं न तायुं
  सृजा वत्सं न दाम्नो वसिष्ठम् ॥ ५ ॥

न स स्वो दक्षो वरुण ध्रुतिः सा
  सुरा मन्युर्विभीदको अचित्तिः ।
अस्ति ज्यायान्कनीयस उपारे
  स्वप्नश्चनेदनृतस्य प्रयोता ॥ ६ ॥

अरं दासो न मीळ्हुषे कराण्य-
  हं देवाय भूर्णयेऽनागाः ।
अचेतयदचितो देवो अर्यो
  गृत्सं राये कवितरो जुनाति ॥ ७ ॥

अयं सु तुभ्यं वरुण स्वधावो
  हृदि स्तोम उपश्रितश्चिदस्तु ।
शं नः क्षेमे शमु योगे नो अस्तु
  यूयं पात स्वस्तिभिः सदा नः ॥ ८ ॥

87.

रदत्पथो वरुणः सूर्याय
   प्रार्णांसि समुद्रिया नदीनाम् ।
सर्गो न सृष्टो अर्वतीर्ऋताय-
   ञ्चकार महीरवनीरहभ्यः ॥ १ ॥

आत्मा ते वातो रज आ नवीनो-
   त्पशुर्न भूर्णिर्यवसे ससवान् ।
अंतर्मही बृहती रोदसीमे
   विश्वा ते धाम वरुण प्रियाणि ॥ २ ॥

परि स्पशो वरुणस्य स्मदिष्टा
   उभे पश्यंति रोदसी सुमेके ।
ऋतावानः कवयो यज्ञधीराः
   प्रचेतसो य इषयंत मन्म ॥ ३ ॥

उवाच मे वरुणो मेधिराय
   त्रिः सप्त नामाघ्न्या बिभर्ति ।
विद्वान्पदस्य गुह्या न वोच-
   द्युगाय विप्र उपराय शिक्षन् ॥ ४ ॥

तिस्रो द्यावो निहिता अंतरस्मि-
   न्तिस्रो भूमीरुपराः षड्विधानाः ।
गृत्सो राजा वरुणश्चक्र एतं
   दिवि प्रेंखं हिरण्ययं शुभे कम् ॥ ५ ॥

अव सिंधुं वरुणो द्यौरिव स्था-
द्द्रप्सो न श्वेतो मृगस्तुविष्मान् ।
गंभीरशंसो रजसो विमानः
सुपारक्षत्रः सतो अस्य राजा ॥ ६ ॥

यो मृळयाति चक्रुषे चिदागो
वयं स्याम वरुणे अनागाः ।
अनु व्रतान्यदितेर्ऋधंतो
यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

---

88.

प्र शुंध्युवं वरुणाय प्रेष्ठां
मतिं वसिष्ठ मीळ्हुषे भरस्व ।
य ईमर्वांचं करते यजत्रं
सहस्रामघं वृषणं बृहंतम् ॥ १ ॥

अधा न्वस्य संदृशं जगन्वा-
नग्नेरनीकं वरुणस्य मंसि ।
स्व१र्यदश्मन्नधिपा उ अंधो-
ऽभि मा वपुर्दृशये निनीयात् ॥ २ ॥

आ यद्रुहाव वरुणश्च नावं
प्र यत्समुद्रमीरयाव मध्यम् ।
अधि यदपां स्नुभिश्चराव
प्र प्रेंख ईंखयावहै शुभे कम् ॥ ३ ॥

वसिष्ठं ह वरुणो नाव्याधा-
　ऋषिं चकार स्वपा महोभिः ।
स्तोतारं विप्रः सुदिनत्वे अह्नां
　यान्नु द्यावस्ततनन्यादुषासः ॥ ४ ॥

क्व त्यानि नौ सख्या बभूवुः
　सचावहे यदवृकं पुरा चित् ।
बृहंतं मानं वरुण स्वधावः
　सहस्रद्वारं जगमा गृहं ते ॥ ५ ॥

य आपिर्नित्यो वरुण प्रियः स-
　न्त्वामागांसि कृणवत्सखा ते ।
मा त एनस्वंतो यक्षिन्भुजेम
　यंधि ष्मा विप्र स्तुवते वरूथम् ॥ ६ ॥

ध्रुवासु त्वासु क्षितिषु क्षियंतो
　व्यस्मत्पाशं वरुणो मुमोचत् ।
अवो वन्वाना अदितेरुपस्था-
　द्यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

---

89.

मो षु वरुण मृन्मयं गृहं राजन्नहं गमम् ।
　मृळा सुक्षत्र मृळय ॥ १ ॥

यदेमि प्रस्फुरन्निव दृतिर्न ध्मातो अद्रिवः ।
　मृळा सुक्षत्र मृळय ॥ २ ॥

क्रत्वः समह दीनता प्रतीपं जगमा शुचे ।
मृळा सुक्षत्र मृळय ॥ ३ ॥

अपां मध्ये तस्थिवांसं तृष्णाविदज्जरितारम् ।
मृळा सुक्षत्र मृळय ॥ ४ ॥

यत्किं चेदं वरुण दैव्ये जने-
ऽभिद्रोहं मनुष्याश्चरामसि ।
अचित्ती यत्तव धर्मा युयोपिम
मा नस्तस्मादेनसो देव रीरिषः ॥ ५ ॥

---

90.

प्र वीरया शुचयो दद्रिरे वा-
मध्वर्युभिर्मधुमंतः सुतासः ।
वह वायो नियुतो याह्यच्छा
पिबा सुतस्यांधसो मदाय ॥ १ ॥

ईशानाय प्रहुतिं यस्त आन-
ट्शुचिं सोमं शुचिपास्तुभ्यं वायो ।
कृणोषि तं मर्त्येषु प्रशस्तं
जातोजातो जायते वाज्यस्य ॥ २ ॥

राये नु यं जज्ञतू रोदसीमे
राये देवी धिषणा धाति देवम् ।
अध वायुं नियुतः सश्चत स्वा
उत श्वेतं वसुधितिं निरेके ॥ ३ ॥

उच्छन्नुषसः सुदिना अरिप्रा
   उरु ज्योतिर्विविदुर्दीध्यानाः ।
गव्यं चिदूर्वमुशिजो वि वव्रु-
   स्तेषामनु प्रदिवः सस्रुरापः ॥ ४ ॥

ते सत्येन मनसा दीध्यानाः
   स्वेन युक्तासः क्रतुना वहंति ।
इंद्रवायू वीरवाहं रथं वा-
   मीशानयोरभि पृक्षः सचंते ॥ ५ ॥

ईशानासो ये दधते स्वर्णो
   गोभिरश्वेभिर्वसुभिर्हिरण्यैः ।
इंद्रवायू सूरयो विश्वमायु-
   रर्वद्भिर्वीरैः पृतनासु सह्युः ॥ ६ ॥

अर्वंतो न श्रवसो भिक्षमाणा
   इंद्रवायू सुष्टुतिभिर्वसिष्ठाः ।
वाजयंतः स्ववसे हुवेम
   यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

---

91.

कुविदंग नमसा ये वृधासः
   पुरा देवा अनवद्यास आसन् ।
ते वायवे मनवे बाधिताया-
   वासयन्नुषसं सूर्येण ॥ १ ॥

उशंता दूता न दभाय गोपा
मासश्च पाथः शरदश्च पूर्वीः ।
इंद्रवायू सुष्टुतिर्वामियाना
मार्डीकमीट्टे सुवितं च नव्यम् ॥ २ ॥

पीवोअन्नाँ रयिवृधः सुमेधाः
श्वेतः सिषक्ति नियुतामभिश्रीः ।
ते वायवे समनसो वि तस्थु-
र्विश्वेन्नरः स्वपत्यानि चक्रुः ॥ ३ ॥

यावत्तरस्तन्वो३ यावदोजो
यावन्नरश्चक्षसा दीध्यानाः ।
शुचिं सोमं शुचिपा पातमस्मे
इंद्रवायू सदतं बर्हिरेदम् ॥ ४ ॥

नियुवाना नियुत स्पार्हवीरा
इंद्रवायू सरथं यातमर्वाक् ।
इदं हि वां प्रभृतं मध्वो अग्र-
मध प्रीणाना वि मुमुक्तमस्मे ॥ ५ ॥

या वां शतं नियुतो याः सहस्र-
मिंद्रवायू विश्ववाराः सचंते ।
आभिर्यातं सुविदत्राभिरर्वा-
क्पातं नरा प्रतिभृतस्य मध्वः ॥ ६ ॥

अर्वंतो न श्रवसो भिक्षमाणा
इंद्रवायू सुष्टुतिभिर्वसिष्ठाः ।

वाजयंतः स्ववसे हुवेम
यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

92.

आ वायो भूष शुचिपा उप नः
सहस्रं ते नियुतो विश्ववार ।
उपो ते अंधो मद्यमयामि
यस्य देव दधिषे पूर्वपेयम ॥१॥

प्र सोता जीरो अध्वरेष्वस्था-
त्सोममिंद्राय वायवे पिबध्यै ।
प्र यद्वां मध्वो अग्रियं भरंत्य-
ध्वर्यवो देवयंतः शचीभिः ॥ २ ॥

प्र याभिर्यासि दाश्वांसमच्छा
नियुद्भिर्वायविष्टये दुरोणे ।
नि नो रयिं सुभोजसं युवस्व
नि वीरं गव्यमश्व्यं च राधः ॥ ३ ॥

ये वायव इंद्रमादनास
आदेवासो नितोशनासो अर्यः ।
घ्नंतो वृत्राणि सूरिभिः ष्याम
सासह्वांसो युधा नृभिरमित्रान ॥ ४ ॥

आ नो नियुद्भिः शतिनीभिरध्वरं
सहस्रिणीभिरुप याहि यज्ञम ।

वायो अस्मिन्सवने मादयस्व
यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

---

93.

शुचिं नु स्तोमं नवजातमद्ये-
न्द्राग्नी वृत्रहणा जुषेथाम् ।
उभा हि वां सुहवा जोहवीमि
ता वाजं सद्य उशते धेष्ठा ॥ १ ॥

ता सानसी शवसाना हि भूतं
साकंवृधा शवसा शूशुवांसा ।
क्षयन्तौ रायो यवसस्य भूरेः
पृङ्क्तं वाजस्य स्थविरस्य घृष्वेः ॥ २ ॥

उपो ह यद्विदथं वाजिनो गु-
र्धीभिर्विप्राः प्रमतिमिच्छमानाः ।
अर्वन्तो न काष्ठां नक्षमाणा
इन्द्राग्नी जोहुवतो नरस्ते ॥ ३ ॥

गीर्भिर्विप्रः प्रमतिमिच्छमान
ईट्टे रयिं यशसं पूर्वभाजम् ।
इन्द्राग्नी वृत्रहणा सुवज्रा
प्र नो नव्येभिस्तिरतं देष्णैः ॥ ४ ॥

सं यन्मही मिथती स्पर्धमाने
तनूरुचा शूरसाता यतैते ।

अदेवयुं विदथे देवयुभिः
सत्रा हतं सोमसुता जनेन ॥ ५ ॥

इमामु षु सोमसुतिमुप न
एंद्राग्नी सौमनसाय यातम् ।
नू चिद्धि परिमम्नाथे अस्मा-
ना वां शश्वद्भिर्ववृतीय वाजैः ॥ ६ ॥

सो अग्न एना नमसा समिद्धो-
ऽच्छा मित्रं वरुणमिंद्रं वोचेः ।
यत्सीमागश्चकृमा तत्सु मृळ
तदर्यमादितिः शिश्रथंतु ॥ ७ ॥

एता अग्न आशुषाणास इष्टी-
र्युवोः सचाभ्यश्याम वाजान् ।
मेंद्रो नो विष्णुर्मरुतः परि ख्य-
न्यूयं पात स्वस्तिभिः सदा नः ॥ ८ ॥

---

94.

इयं वामस्य मन्मन इंद्राग्नी पूर्व्यस्तुतिः ।
अभ्राद्वृष्टिरिवाजनि ॥ १ ॥

शृणुतं जरितुर्हवमिंद्राग्नी वनतं गिरः ।
ईशाना पिप्यतं धियः ॥ २ ॥

मा पापत्वाय नो नरेंद्राग्नी माभिशस्तये ।
मा नो रीरधतं निदे ॥ ३ ॥

इंद्रे अग्ना नमो बृहत्सुवृक्तिमेरयामहे ।
धिया धेना अवस्यवः ॥ ४ ॥

ता हि शश्वंत ईळत इत्था विप्रास ऊतये ।
सबाधो वाजसातये ॥ ५ ॥

ता वां गीर्भिर्विपन्यवः प्रयस्वंतो हवामहे ।
मेधसाता सनिष्यवः ॥ ६ ॥

इंद्राग्नी अवसा गतमस्मभ्यं चर्षणीसहा ।
मा नो दुःशंस ईशत ॥ ७ ॥

मा कस्य नो अररुषो धूर्तिः प्र णङ्मर्त्यस्य ।
इंद्राग्नी शर्म यच्छतम् ॥ ८ ॥

गोमद्धिरण्यवद्वसु यद्वामश्वावदीमहे ।
इंद्राग्नी तद्वनेमहि ॥ ९ ॥

यत्सोम आ सुते नर इंद्राग्नी अजोहवुः ।
सप्तीवंता सपर्यवः ॥ १० ॥

उक्थेभिर्वृत्रहंतमा या मंदाना चिदा गिरा ।
आंगूषैराविवासतः ॥ ११ ॥

वाविद्दुःशंसं मर्त्यं दुर्विद्वांसं रक्षस्विनम् ।
आभोगं हन्मना हतमुदधिं हन्मना हतम् ॥ १२ ॥

95.

प्र क्षोदसा धायसा सस्र एषा
   सरस्वती धरुणमायसी पूः ।
प्रबाबधाना रथ्येव याति
   विश्वा अपो महिना सिन्धुरन्याः ॥ १ ॥

एकाचेतत्सरस्वती नदीनां
   शुचिर्यती गिरिभ्य आ समुद्रात् ।
रायश्चेतन्ती भुवनस्य भूरे-
   र्घृतं पयो दुदुहे नाहुषाय ॥ २ ॥

स वावृधे नर्यो योषणासु
   वृषा शिशुर्वृषभो यज्ञियासु ।
स वाजिनं मघवद्भ्यो दधाति
   वि सातये तन्वं मामृजीत ॥ ३ ॥

उत स्या नः सरस्वती जुषाणो-
   प श्रवत्सुभगा यज्ञे अस्मिन् ।
मितज्ञुभिर्नमस्यैरियाना
   राया युजा चिदुत्तरा सखिभ्यः ॥ ४ ॥

इमा जुह्वाना युष्मदा नमोभिः
   प्रति स्तोमं सरस्वति जुषस्व ।
तव शर्मन्प्रियतमे दधाना
   उप स्थेयाम शरणं न वृक्षम् ॥ ५ ॥

अयमु ते सरस्वति वसिष्ठो
   द्वारावृतस्य सुभगे व्यावः ।
वर्ध शुभ्रे स्तुवते रासि वाजा-
   न्यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥

---

96.

बृहदु गायिषे वचो-
   ऽसुर्या नदीनाम् ।
सरस्वतीमिन्महया सुवृक्तिभि
   स्तोमैर्वसिष्ठ रोदसी ॥ १ ॥
उभे यत्ते महिना शुभ्रे अंधसी
   अधिक्षियंति पूरवः ।
सा नो बोध्यवित्री मरुत्सखा
   चोद राधो मघोनाम् ॥ २ ॥

भद्रमिद्भद्रा कृणवत्सरस्वत्य-
   कवारी चेतति वाजिनीवती ।
गृणाना जमदग्निव-
   त्स्तुवाना च वसिष्ठवत् ॥ ३ ॥

जनीयंतो न्वग्रवः पुत्रीयंतः सुदानवः ।
सरस्वंतं हवामहे ॥ ४ ॥

ये ते सरस्व ऊर्मयो मधुमंतो घृतश्चुतः ।
तेभिर्नोऽविता भव ॥ ५ ॥

पीपिवांसं सरस्वतः स्तनं यो विश्वदर्शतः ।
भक्षीमहि प्रजामिषम् ॥ ६ ॥

---

97.

यज्ञे दिवो नृषदने पृथिव्या
नरो यत्र देवयवो मदंति ।
इंद्राय यत्र सवनानि सुन्वे
गमन्मदाय प्रथमं वयश्च ॥ १ ॥

आ दैव्या वृणीमहेऽवांसि
बृहस्पतिर्नो मह आ सखायः ।
यथा भवेम मीळ्हुषे अनागा
यो नो दाता परावतः पितेव ॥ २ ॥

तमु ज्येष्ठं नमसा हविर्भिः
सुशेवं ब्रह्मणस्पतिं गृणीषे ।
इंद्रं श्लोको महि दैव्यः सिषक्तु
यो ब्रह्मणो देवकृतस्य राजा ॥ ३ ॥

स आ नो योनिं सदतु प्रेष्ठो
बृहस्पतिर्विश्ववारो यो अस्ति ।
कामो रायः सुवीर्यस्य तं दा-
त्पर्षन्नो अति सश्चतो अरिष्टान् ॥ ४ ॥

तमा नो अर्कममृताय जुष्ट-
मिमे धासुरमृतासः पुराजाः ।
शुचिक्रंदं यजतं पस्त्यानां
बृहस्पतिमनर्वाणं हुवेम ॥ ५ ॥

तं शग्मासो अरुषासो अश्वा
बृहस्पतिं सहवाहो वहंति ।
सहश्चिद्यस्य नीळवत्सधस्थं
नभो न रूपमरुषं वसानाः ॥ ६ ॥

स हि शुचिः शतपत्रः स शुंध्यु-
र्हिरण्यवाशीरिषिरः स्वर्षाः ।
बृहस्पतिः स स्वावेश ऋष्वः
पुरू सखिभ्य आसुतिं करिष्ठः ॥ ७ ॥

देवी देवस्य रोदसी जनित्री
बृहस्पतिं वावृधतुर्महित्वा ।
दक्षाय्याय दक्षता सखायः
करद्ब्रह्मणे सुतरा सुगाधा ॥ ८ ॥

इयं वां ब्रह्मणस्पते सुवृक्ति-
ब्रह्मेंद्राय वज्रिणे अकारि ।
अविष्टं धियो जिगृतं पुरंधी-
र्जजस्तमर्यो वनुषामरातीः ॥ ९ ॥

बृहस्पते युवमिंद्रश्च वस्वो
दिव्यस्येशाथे उत पार्थिवस्य ।
धत्तं रयिं स्तुवते कीरये चि-
द्यूयं पात स्वस्तिभिः सदा नः ॥ १० ॥

---

98.

अध्वर्यवोऽरुणं दुग्धमंशुं
जुहोतन वृषभाय क्षितीनाम् ।
गौराद्वेदीयाँ अवपानमिंद्रो
विश्वाहेद्याति सुतसोममिच्छन् ॥ १ ॥

यद्दधिषे प्रदिवि चार्वन्नं
दिवेदिवे पीतिमिदस्य वक्षि ।
उत हृदोत मनसा जुषाण
उशन्निंद्र प्रस्थितान्पाहि सोमान् ॥ २ ॥

जज्ञानः सोमं सहसे पपाथ
प्र ते माता महिमानमुवाच ।
एंद्र पप्राथोर्व१ंतरिक्षं
युधा देवेभ्यो वरिवश्चकर्थ ॥ ३ ॥

यद्योधया महतो मन्यमाना-
न्साक्षाम तान्बाहुभिः शाशदानान् ।
यद्वा नृभिर्वृत इंद्राभियुध्या-
स्तं त्वयाजिं सौश्रवसं जयेम ॥ ४ ॥

प्रेंद्रस्य वोचं प्रथमा कृतानि
प्र नूतना मघवा या चकार ।
यदेददेवीरसहिष्ट माया
अथाभवत्केवलः सोमो अस्य ॥ ५ ॥

तवेदं विश्वमभितः पशव्यं[1]
यत्पश्यसि चक्षसा सूर्यस्य ।
गवामसि गोपतिरेक इंद्र
भक्षीमहि ते प्रयतस्य वस्वः ॥ ६ ॥

बृहस्पते युवमिंद्रश्च वस्वो
दिव्यस्येशाथे उत पार्थिवस्य ।
धत्तं रयिं स्तुवते कीरये चि-
द्यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

99.

परो मात्रया तन्वा वृधान
न ते महित्वमन्वश्नुवंति ।
उभे ते विद्म रजसी पृथिव्या
विष्णो देव त्वं परमस्य वित्से ॥ १ ॥

न ते विष्णो जायमानो न जातो
देव महिम्नः परमंतमाप ।
उदस्तभ्ना नाकमृष्वं बृहंतं
दाधर्थ प्राचीं ककुभं पृथिव्याः ॥ २ ॥

इरावती धेनुमती हि भूतं
सूयवसिनी मनुषे दशस्या ।
व्यस्तभ्ना रोदसी विष्णवेते
दाधर्थ पृथिवीमभितो मयूखैः ॥ ३ ॥

उरुं यज्ञाय चक्रथुरु लोकं
जनयंता सूर्यमुषासमग्निम् ।
दासस्य चिद्वृषशिप्रस्य माया
जघ्नथुर्नरा पृतनाज्येषु ॥ ४ ॥

इंद्राविष्णू दृंहिताः शंबरस्य
नव पुरो नवतिं च श्नथिष्टम् ।
शतं वर्चिनः सहस्रं च साकं
हथो अप्रत्यसुरस्य वीरान् ॥ ५ ॥

इयं मनीषा बृहती बृहंतो-
रुक्रमा तवसा वर्धयंती ।
ररे वां स्तोमं विदथेषु विष्णो
पिन्वतमिषो वृजनेष्विंद्र ॥ ६ ॥

वषट्ते विष्णवास आ कृणोमि
तन्मे जुषस्व शिपिविष्ट हव्यम् ।

वर्धंतु त्वा सुष्टुतयो गिरो मे
 यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

---

100.

नू मर्तो दयते सनिष्य-
 न्यो विष्णव उरुगायाय दाशत् ।
प्र यः सत्राचा मनसा यजात
 एतावंतं नर्यमाविवासात् ॥ १ ॥

त्वं विष्णो सुमतिं विश्वजन्या-
 मप्रयुतामेवयावो मतिं दाः ।
पर्चो यथा नः सुवितस्य भूरे-
 रश्वावतः पुरुश्चंद्रस्य रायः ॥ २ ॥

त्रिर्देवः पृथिवीमेष एतां
 वि चक्रमे शतर्चसं महित्वा ।
प्र विष्णुरस्तु तवसस्तवीया-
 न्त्वेषं ह्यस्य स्थविरस्य नाम ॥ ३ ॥

वि चक्रमे पृथिवीमेष एतां
 क्षेत्राय विष्णुर्मनुषे दशस्यन् ।
ध्रुवासो अस्य कीरयो जनास
 उरुक्षितिं सुजनिमा चकार ॥ ४ ॥

प्र तत्ते अद्य शिपिविष्ट नामा-
 र्यः शंसामि वयुनानि विद्वान् ।

तं त्वा गृणामि तवसमतव्या-
न्क्षयंतमस्य रजसः पराके ॥ ५ ॥

किमित्ते विष्णो परिचक्ष्यं भू-
त्प्र यद्ववक्षे शिपिविष्टो अस्मि ।
मा वर्पो अस्मदप गूह एत-
द्यदन्यरूपः समिथे बभूथ ॥ ६ ॥

वषट्ते विष्णवास आ कृणोमि
तन्मे जुषस्व शिपिविष्ट हव्यम् ।
वर्धंतु त्वा सुष्टुतयो गिरो मे
यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

---

101.

तिस्रो वाचः प्र वद ज्योतिरग्रा
या एतद्दुह्रे मधुदोघमूधः ।
स वत्सं कृण्वन्गर्भमोषधीनां
सद्यो जातो वृषभो रोरवीति ॥ १ ॥

यो वर्धन ओषधीनां यो अपां
यो विश्वस्य जगतो देव ईशे ।
स त्रिधातु शरणं शर्म यंस-
त्त्रिवर्तु ज्योतिः स्वभिष्ट्य१स्मे ॥ २ ॥

स्तरीरु त्वद्भवति सूत उ त्व-
द्यथावशं तन्वं चक्र एषः ।

पितुः पयः प्रति गृभ्णाति माता
तेन पिता वर्धते तेन पुत्रः ॥ ३ ॥

यस्मिन्विश्वानि भुवनानि तस्थु-
स्तिस्रो द्यावस्त्रेधा सस्रुरापः ।
त्रयः कोशास उपसेचनासो
मध्वः श्चोतन्त्यभितो विरप्शम् ॥ ४ ॥

इदं वचः पर्जन्याय स्वराजे
हृदो अस्त्वन्तरं तज्जुजोषत् ।
मयोभुवो वृष्टयः सन्त्वस्मे
सुपिप्पला ओषधीर्देवगोपाः ॥ ५ ॥

स रेतोधा वृषभः शश्वतीनां
तस्मिन्नात्मा जगतस्तस्थुषश्च ।
तन्म ऋतं पातु शतशारदाय
यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥

---

102.

पर्जन्याय प्र गायत दिवस्पुत्राय मीळ्हुषे ।
स नो यवसमिच्छतु ॥ १ ॥

यो गर्भमोषधीनां गवां कृणोत्यर्वताम् ।
पर्जन्यः पुरुषीणाम् ॥ २ ॥

तस्मा इदास्ये हविर्जुहोता मधुमत्तमम् ।
इळां नः संयतं करत् ॥ ३ ॥

---

103.

संवत्सरं शशयाना ब्राह्मणा व्रतचारिणः ।
वाचं पर्जन्यजिन्वितां प्र मंडूका अवादिषुः ॥ १ ॥

दिव्या आपो अभि यदेनमाय-
न्दृतिं न शुष्कं सरसी शयानम् ।
गवामह न मायुर्वत्सिनीनां
मंडूकानां वग्नुरत्रा समेति ॥ २ ॥

यदीमेनाँ उशतो अभ्यवर्षी-
त्तृष्यावतः प्रावृष्यागतायाम् ।
अख्खलीकृत्या पितरं न पुत्रो
अन्यो अन्यमुप वदंतमेति ॥ ३ ॥

अन्यो अन्यमनु गृभ्णात्येनो-
रपां प्रसर्गे यदमंदिषाताम् ।
मंडूको यदभिवृष्टः कनिष्क-
न्पृश्निः संपृंक्ते हरितेन वाचम् ॥ ४ ॥

यदेषामन्यो अन्यस्य वाचं
शाक्तस्येव वदति शिक्षमाणः ।

सर्वं तदेषां समृधेव पर्व
यत्सुवाचो वदथनाध्यप्सु ॥ ५ ॥

गोमायुरेको अजमायुरेकः
पृश्निरेको हरित एकं एषाम् ।
समानं नाम बिभ्रतो विरूपाः
पुरुत्रा वाचं पिपिशुर्वदंतः ॥ ६ ॥

ब्राह्मणासो अतिरात्रे न सोमे
सरो न पूर्णमभितो वदंतः ।
संवत्सरस्य तदहः परि ष्ठ
यन्मंडूकाः प्रावृषीणं बभूव ॥ ७ ॥

ब्राह्मणासः सोमिनो वाचमक्रत
ब्रह्म कृण्वंतः परिवत्सरीणम् ।
अध्वर्यवो घर्मिणः सिष्विदाना
आविर्भवंति गुह्या न के चित् ॥ ८ ॥

देवहितिं जुगुपुर्द्वादशस्य
ऋतुं नरो न प्र मिनंत्येते ।
संवत्सरे प्रावृष्यागतायां
तप्ता घर्मा अश्नुवते विसर्गम् ॥ ९ ॥

गोमायुरदादजमायुरदा-
त्पृश्निरदाद्धरितो नो वसूनि ।

गवां मंडूका ददतः शतानि
सहस्रसावे प्र तिरंत आयुः ॥ १० ॥

---

104.

इंद्रासोमा तपतं रक्ष उब्जतं
न्यर्पयतं वृषणा तमोवृधः ।
परा शृणीतमचितो न्योषतं
हतं नुदेथां नि शिशीतमत्रिणः ॥ १ ॥

इंद्रासोमा समघशंसमभ्यघं
तपुर्ययस्तु चरुरग्निवाँ इव ।
ब्रह्मद्विषे क्रव्यादे घोरचक्षसे
द्वेषो धत्तमनवायं किमीदिने ॥ २ ॥

इंद्रासोमा दुष्कृतो वव्रे अंत-
रनारंभणे तमसि प्र विध्यतम् ।
यथा नातः पुनरेकश्चनोदय-
त्तद्वामस्तु सहसे मन्युमच्छवः ॥ ३ ॥

इंद्रासोमा वर्तयतं दिवो वधं
सं पृथिव्या अघशंसाय तर्हणम् ।
उत्तक्षतं स्वर्यं पर्वतेभ्यो
येन रक्षो वावृधानं निजूर्वथः ॥ ४ ॥

इंद्रासोमा वर्तयतं दिवस्पर्य-
ग्नितप्तेभिर्युवमश्महन्मभिः ।

तपुर्वधेभिरजरेभिरत्रिणो
नि पर्शाने विध्यतं यंतु निस्वरम् ॥ ५ ॥

इंद्रासोमा परि वां भूतु विश्वत
इयं मतिः कक्ष्याश्वेव वाजिना ।
यां वां होत्रां परिहिनोमि मेधये-
मा ब्रह्माणि नृपतीव जिन्वतम् ॥ ६ ॥

प्रति स्मरेथां तुजयद्भिरेवै-
र्हतं द्रुहो रक्षसो भंगुरावतः ।
इंद्रासोमा दुष्कृते मा सुगं भू-
द्यो नः कदा चिदभिदासति द्रुहा ॥ ७ ॥

यो मा पाकेन मनसा चरंत-
मभिचष्टे अनृतेभिर्वचोभिः ।
आप इव काशिना संगृभीता
असन्नस्त्वासत इंद्र वक्ता ॥ ८ ॥

ये पाकशंसं विहरंत एवै-
र्ये वा भद्रं दूषयंति स्वधाभिः ।
अहये वा तान्प्रददातु सोम
आ वा दधातु निर्ऋतेरुपस्थे ॥ ९ ॥

यो नो रसं दिप्सति पित्वो अग्ने
यो अश्वानां यो गवां यस्तनूनाम् ।

रिपु स्तेन स्तेयकृद्दभ्रमेतु
   नि ष हीयतां तन्वा३ तना च ॥ १० ॥

परः सो अस्तु तन्वा३ तना च
   तिस्रः पृथिवीरधो अस्तु विश्वाः ।
प्रति शुष्यतु यशो अस्य देवा
   यो नो दिवा दिप्सति यश्च नक्तम ॥ ११ ॥

सुविज्ञानं चिकितुषे जनाय
   सच्चासच्च वचसी पस्पृधाते ।
तयोर्यत्सत्यं यतरदृजीय-
   स्तदित्सोमोऽवति हंत्यासत् ॥ १२ ॥

न वा उ सोमो वृजिनं हिनोति
   न क्षत्रियं मिथुया धारयंतम् ।
हंति रक्षो हंत्यासद्वदंत-
   मुभाविंद्रस्य प्रसितौ शयाते ॥ १३ ॥

यदि वाहमनृतदेव आस
   मोघं वा देवाँ अप्यूहे अग्ने ।
किमस्मभ्यं जातवेदो हृणीषे
   द्रोघवाचस्ते निर्ऋथं सचंताम् ॥ १४ ॥

अद्या मुरीय यदि यातुधानो अस्मि
   यदि वायुस्ततप पूरुषस्य ।

अधा स वीरैर्दशभिर्वि यूया
 यो मा मोघं यातुधानेत्याह ॥ १५ ॥

यो मायातुं यातुधानेत्याह
 यो वा रक्षाः शुचिरस्मीत्याह ।
इंद्रस्तं हंतु महता वधेन
 विश्वस्य जंतोरधमस्पदीष्ट ॥ १६ ॥

प्र या जिगाति खर्गलेव नक्त-
 मप द्रुहा तन्वं१गूहमाना ।
वव्राँ अनंताँ अव सा पदीष्ट
 ग्रावाणो घ्नंतु रक्षस उपब्दैः ॥ १७ ॥

वि तिष्ठध्वं मरुतो विक्ष्वि१च्छत
 गृभायत रक्षसः सं पिनष्टन ।
वयो ये भूत्वी पतयंति नक्तभि-
 र्ये वा रिपो दधिरे देवे अध्वरे ॥ १८ ॥

प्र वर्तय दिवो अश्मानमिंद्र
 सोमशितं मघवन्सं शिशाधि ।
प्राक्तादपाक्तादधरादुदक्ता-
 दभि जहि रक्षसः पर्वतेन ॥ १९ ॥

एत उ त्ये पतयंति श्वयातव
 इंद्रं दिप्संति दिप्सवोऽदाभ्यम् ।

शिर्शानि शाकः पिशुनेभ्यो वधं
नूनं सृजदशनिं यातुमद्भ्यः ॥ २० ॥

इंद्रो यातूनामभवत्पराशरो
हविर्मथीनामभ्या३विवासताम् ।
अभीदु शाकः परशुर्यथा वनं
पात्रेव भिंदन्सत एति रक्षसः ॥ २१ ॥

उलूकयातुं शुशुलूकयातुं
जहि श्वयातुमुत कोकयातुम् ।
सुपर्णयातुमुत गृध्रयातुं
दृषदेव प्र मृण रक्ष इंद्र ॥ २२ ॥

मा नो रक्षो अभि नड्यातुमावता-
मपोच्छतु मिथुना या किमीदिना ।
पृथिवी नः पार्थिवात्पात्वंहसो-
ऽंतरिक्षं दिव्यात्पात्वस्मान् ॥ २३ ॥

इंद्र जहि पुमांसं यातुधान-
मुत स्त्रियं मायया शाशदानाम् ।
विग्रीवासो मूरदेवा ऋदंतु
मा ते दृशन्सूर्यमुच्चरंतम् ॥ २४ ॥

प्रति चक्ष्व वि चक्ष्वेंद्रश्च सोम जागृतम् ।
रक्षोभ्यो वधमस्यतमशनिं यातुमद्भ्यः ॥ २५ ॥

## *EXTRACTS FROM THE PADA TEXT.*

---

1.

1. हस्त ऽ च्युती. प्र ऽ शस्तम्. दूरे ऽ दृशम्. गृह ऽ पतिम्. 2. नि ऋ°. सु ऽ प्रतिचक्षम्. दमे. 3. प्र ऽ इद्धः. नः अ°. 4. सु ऽ वीरासः. यत्र. सम् ऽ आसते. सु ऽ जाताः. 5. दाः. सु ऽ वीरम्. सु ऽ अपत्यम्. प्र ऽ शस्तम्. यातु ऽ मावान्. 6. सु ऽ दक्षम्. स्वा ए°. वसु ऽ युः. 7. अग्ने अप. दह अ°. नि ऽ स्वरम्. चातयस्व अ°. 8. अग्ने. उतो इति. नः. एभिः. 9. मर्ताः. सु ऽ मनाः. 10. वृत्र ऽ हत्येषु. शूराः. प्र ऽ शस्ताम्. 11. सदाम. मा अ°. 12. उप ऽ याति. सु ऽ अपत्यम्. स्व ऽ जन्मना. वर्धानम्. 13. अघ ऽ योः. स्याम्. 14. सः इत्. वीळु ऽ पाणिः. सहस्र ऽ पाथाः. सम् ऽ एति. 15. सः इत्. नि ऽ पाति. सम् ऽ एद्धारम्. सु ऽ जातासः. 16. आ ऽ हुतः. 17. त्वे इति. अग्ने आ ऽ हवनानि. भूरि ई°. वहतू इति. 18. इमो इति. हव्या अ°. 19. दाः. दुः ऽ वाससे. रक्षसे. ऋत ऽ वः. वने. 20. नु. अग्ने उत् श°. सुमृदः. स्याम उ°. 21. सु ऽ हवः. रण्व ऽ संदृक्. सु ऽ दीती. सूनो इति. त्वे इति. नित्ये. धक्. अस्मत्. 22. दुः ऽ भृतये. सचा ए°. देव ऽ इद्धेषु. दुः-

ऽमतयः· भूमात्· सूनो इति· 23. सुऽअनीक· आऽजुहोति· वसुऽवनिम्. 24. वह· मदेम अविऽक्षितासः· सुऽवीराः· 25 = 20·

---

2.

1. सम्ऽइधम्· शोच· 2. सुऽक्रतवः· धियम्ऽधाः· 3. सुऽदक्षम्· रोदसी इति· सत्यऽवाचम्· सम्ऽइद्धम्· इत्· 4. अभिऽद्यु· आऽजुह्वानाः· घृतऽपृष्ठम्· 5. सुऽआध्यः· देवऽयन्तः· अशिश्रयुः· पूर्वी इति· रिहाणे इति. 6. योषणे इति· दिव्ये इति· मही इति· उषसानक्ता· सुदुघाऽइव· बर्हिऽसदा· पुरुहूते इति पुरुऽहूते· मघोनी इति· यज्ञिये इति· 7. कारू इति· जातऽवेदसा· 8. सऽजोषाः· आ इ°· 9. तत्. स्यस्वेति स्यस्व· सुऽदक्षः· युक्तऽग्रावा. देवऽकामः· 10. वनस्पते अव· सृज उप· सः इत्· 11. सम्ऽइधानः· सऽरथम्· सुऽपुत्रा· अमृताः·

---

3.

1. सऽजोषाः· निऽध्रुविः· ऋतऽवा· तपुःऽमूर्धा· घृतऽअन्नः· 2. सम्ऽवरणात् वि· 3. नवऽजातस्य· वृष्णः अ°· अच्छ· अग्ने· 4. सम्ऽअवृक्त· सेनाऽइव· प्रऽसितिः· ते· 5. निऽशिशानाः· आऽहुतस्य· 6. सुऽसंदृक्· सुऽअनीक· रोचसे. 7. स्वाहा अ°· परि इ°. 8. याः·

अधृष्टाः. सूनो इति. जात ऽ वेदः. 9. पृता ऽ इव. स्व ऽ धि-तिः. देव ऽ यज्याय. सु ऽ क्रतुः. 10. सु ऽ चेतसम्.

---

4.

1. च अ॰. सु ऽ पूतम्. 2. शुचि ऽ दन्. 3. सम् ऽ सदि. दुः ऽ ओकम्. 4. प्र ऽ चेताः. त्वे इति. सु ऽ मनसः. 5. दे-व ऽ कृतम्. हि अ॰. विश्व ऽ धायसम्. 6. हि अ॰. सु ऽ वी-र्यस्य. अवीराः. मा अ॰. सदाम. मा अ॰. 7. परि ऽ सद्यम्. हि. अन्य ऽ जातम्. 8. ग्रभाय अ॰. सु ऽ शेवः. अन्य ऽ उ-दर्यः. मंतवै. ऊं इति.* अध. वाजी अ॰. 9. अभि एतु. रयिः. 10.=3,10.

---

5.

1. प्र अ॰. उप ऽ स्थे. ववृधे. 2. वृषभः. ववृधानः. 3. असमनाः. 4. त्रि ऽ धातु. पृथिवी. रोदसी इति. ततंथ अ॰. 5. वावशानाः. 6. त्वे इति. नि ऋ॰. मित्र ऽ महः. अग्ने. 7. वि ऽ ओमन्. जात ऽ वेदः. 8. अस्मे इति. आ ई॰. विश्व-ऽ वार. 9. पुरु ऽ क्षुम्. स ऽ जोषाः.

---

6.

1. सम् ऽ राजः. प्र ऽ शस्तिम्. अनु ऽ माद्यस्य. इंद्रस्य ऽ इव. 2. पुरम् ऽ दरस्य. 3. नि अ॰. मृध्र ऽ वाचः. चकार अ॰. 4.

---

* So always.

गृणीषे अ॰ 5. अर्यऽपत्नीः. निऽरुध्य. बलिऽहृतः. 6. सुऽमतिम्. आ अ॰. उपऽस्थम्. 7. उत्ऽइता. आ अ॰.

---

7.

1. भर्व. मितऽद्रुः. 2. स्वाः. पृथिव्याः. 3. सुऽधितम्. विश्ववारे इति विश्वऽवारे. सुऽशेवः. 4. विऽचेतसः दुरोणे अ॰. मधुऽवचाः. ऋतऽवा. 5. आऽजगन्वान्. नृऽसदने. विऽधर्ता. बवृधाते इति. विश्वऽवारम्. 6. आ अ॰. वा अ॰. 7. नु. अग्ने. सूनो इति.

---

8.

1. आऽहुतम्. सऽबाधः. आ अ॰. अग्ने. 2. स्यः. सुऽमहान्. अकरित्यकः. कृष्णऽपविः. 3. सुऽवृक्तिम्. सुऽदत्र. 4. प्रऽप्र अ॰. 5. त्वे इति. आऽहवनानि. सुऽमनाः. सुऽजात. 6. शतऽसाः. सम्ऽसहस्रम्. द्विऽबर्हाः. अमीवऽचातनम्. रक्षःऽहा.

---

9.

1. उपऽस्थात् होता. सुकृत्ऽसु. 2. सुऽक्रतुः. पुरुऽभोजसम्. 3. सुऽसंसत्. चित्रऽभानुः. प्रऽस्वः. 4. समनऽगाः. अशुचत् जातऽवेदाः. सुऽसंदृशा. विऽभाति. सम्ऽइधानम्. 5. अच्छ. ब्रह्मऽकृता. अश्विना अ॰. रत्न-

ऽधयाय. 6. सम्ऽइधानः. पुरम्ऽधिम्. पुरुऽनीथा. जातऽवेदः.

10.

1. दीद्यत् शोः. अजीगरिति. 2. न. देवऽयावा. 3. अच्छ. सुऽसंदृशम्. सुऽप्रतीकम्. सुऽअंचम्. हव्यऽवाहम्. 4. सऽजोषाः. वह. विश्वऽजन्याम्. विश्वऽवारम्.

11.

1. प्रऽकेतः. न. अमृताः. सऽरथम्. नि अ॰. सद इह. 2. इत्. आ अ॰. अग्ने अ॰. सुऽदिना. 3. त्वे इति. अग्ने. भव. अभिशस्तिऽपावा. 4. अध्वरस्य अ॰. हि अ॰. जुषंत. अथ. देवाः. हव्यऽवाहम्. 5. आ अ॰. हविःऽअद्याय. इंद्रऽज्येष्ठासः.

12.

1. सम्ऽइद्धः. चित्रऽभानुम्. रोदसी इति. उर्वी इति. सुऽआहुतम्. 2. दुःऽइतानि. सह्वान्. अग्निः स्तवे. दमे. जातऽवेदाः. दुःऽइतात्. 3. त्वे इति. सुऽसनानि.

13.

1. प्र अ॰. विश्वऽशुचे. धियम्ऽधे. असुरऽघ्ने. 2 रोद-

सी इति. अपृणाः. अभि ऽशस्तेः. जात ऽवेदः. 3. वि. प-रि ऽज्मा.

14.

1. सम् ऽइधा. जात ऽवेदसे. देवहूति ऽभिः. शुक्र ऽशो-चिषे. दाशेम अ°. 2. सम् ऽइधा. सु ऽस्तुती. घृतेन अ°. भद्र ऽशोचे. 3. देव ऽहूतिम्. वषट् ऽकृतिम्.

15.

1. उप ऽसद्याय. मीळ्हुषे. जुहुत. 2. नि ऽससाद. गृह-ऽपतिः. 3. अग्निः. उत अ°. 5. स्पार्हाः 6. सः इ°. वषट् ऽकृतिम्. हव्य ऽवाहनः. 7. सु ऽवीरम्. अग्ने अग्-ऽहुत. 8. सु ऽअग्नयः. सु ऽवीरः. 9. उप अ°. 10. अग्निः. शुक्र ऽशोचिः. 11. भर ई°. यह्वो इति. 13. रक्ष नः. स्म. रिषतः. 14. अध. आयसी. नृ ऽपीतये. भव. शत-ऽभुजिः. 15. दोषा ऽवस्तः अघ ऽयतः.

16.

1. नमसा ऊ°. सु ऽअध्वरम्. 2. विश्व ऽभोजसा. सु ऽआ-हुतः. सु ऽब्रह्मा. सु ऽशर्मी. 3. आ ऽजुह्वानस्य. दिवि ऽस्पृ-शः. 4. सूनो इति. मर्त ऽभोजना. त्वा ई°. 5. गृह ऽप-तिः. विश्व ऽवार. प्र ऽचेताः. 6. सुक्रतो इति सु ऽक्रतो.

रत्न ऽ धाः सु ऽ शंसः. 7. त्वे इति सु ऽ आहुत. 8. घृत- ऽ हस्ता. दुरोणे आ, नि ऽ सीदति. यच्छ. दीर्घ ऽ श्रुत. 9. हव्य ऽ दातिम्. 10. पर्तृ ऽ भिः त्वम्. 11. द्रविणः ऽ दाः, आ ऽ सिचम्. 12. प्र ऽ चेतसम्. सु ऽ वीर्यम्.

---

17.

1. सु ऽ समिधा. सम् ऽ इद्धः. 2. वह इह. 3. सु ऽ अध्वरा. जात ऽ वेदः. 4. सु ऽ अध्वरा. जात ऽ वेदाः. पिप्रयत्. 5. प्रचेत इति प्र ऽ चेतः, सत्याः. आ ऽ शिषः. 6. हव्य- ऽ वाहम्. अग्ने.

---

18.

1. त्वे इति. चित्. सु ऽ हवाः. हि. 2. राजा ऽ इव. एव अव. विदुः. 3. मंद्राः. सु ऽ मतौ. 4. सु ऽ यवसे. दुर्धुक्षन्. इत्. गो ऽ पतिम्. आह आ. सु ऽ मतिम्. 5. सु ऽ दासे. सु ऽ पारा. 6. नि ऽ शिताः. अपि ऽ इव. 7. भनंत आ अ°. अनयत्. सध ऽ माः. 8. दुः ऽ आध्यः. मह्ना अ°. पशुः. अशायत्. 9. नि ऽ अर्थम्. चन इत् अभि ऽ पित्वम्. सु ऽ दासे. सु ऽ तुकान्. अरंधयत्. वध्रि ऽ वाचः. 10. अगोपाः. यथा ऽ कृतम्. पृश्नि ऽ गावः. पृश्नि ऽ निप्रेषितासः. नि ऽ युतः. 11. नि अस्तरित्यस्तः. 12. अप् ऽ सु. वज्र ऽ बाहुः. 13. दर्दरिति दर्दः. वि. मृध ऽ वाचम्. 14. गव्यवः अ°. सुसुपुः. विश्वा इत्. 15. इंद्रेण एते. दुः ऽ मित्रासः. प्रकल ऽ वित्. मिमानाः.

सु ऽदासे (17). 16. गृत ऽपाम्. मन्यु ऽम्यः. 17. पेत्वेन. वेश्यां अ°. प्र अ°. 18. ररधुः ते. चित् श°. एनः. 19. प्र अ°. 20. ते. सु ऽमतयः. सम् ऽचक्षे. चित्. जघंथ अव. 21. परा ऽशरः. शत ऽयातुः. मृषंत अध. सु ऽदिना. वि उ°. 22. द्वे इति. शते इति. सु ऽदासः (23). होता ऽइव. 23. स्मत् ऽदिष्टयः. पृथिवि ऽस्थाः. 24. रोदसी इति. उर्वी इति. वि ऽबभाज. वि ऽभक्ता. सप्त इत्. 25. सश्वत अनु. दिवः ऽदासम्. सु ऽदासः. अविष्टन. दुः ऽनशम्.

---

19.

1. तिग्म ऽशृंगः. च्यवयति. प्र ऽयंता असि. सुस्वि ऽतराय. 2. स ऽमर्ये. यत् शु°. नि अर्हे. 3. धृष्णो इति. वीत ऽहव्यम्. प्र आः°. सु ऽदासम्. क्षेत्र ऽसाता. वृत्र ऽहत्येषु. 4. नृ ऽमनः. देव ऽवीतौ. हरि ऽअश्व. च अ°. सु ऽहंतु. 5. वज्र ऽहस्त. नि ऽवेशने. शत ऽतमा अ°. उत अ°. 6. शत ऽहव्याय. सु ऽदासे. हरी इति. पुरु ऽशाक. 7. परा ऽदै. 8. अतिथि ऽग्वाय. 9. चित्. उक्थ ऽशासः. 10. स्तोमाः. वृत्र ऽहत्ये. 11. नु. ब्रह्म ऽजूतः. ववृधस्व.

---

20.

1. नृ ऽसदनम्. 2. प्र आवीत्. सु ऽदासे. वै. 3. खज ऽकृत्. जनुषा ई. वि आसे. सु ऽओजाः. अध. शत्रु ऽयंतम्. 4. उभे इति. रोदसी इति. महि ऽत्वा आ. वै.

5. चित्. सेनाऽनीः. अस्ति इ°. गोऽएषणः. 6. नु.
रेपत्. आऽविवासात्. राये. ऋतऽपाः. ऋतेऽजाः. 7.
अयंत. भर. 8. ते. असत्. सुऽमतौ. नृऽपीतौ. 9. ते.
ते. आ अ°. 10. त्वऽयंतायै.

---

21.

1. गोऽऋजीकम्. नि अ°. जनुषा ईम्. हरिऽअश्व. बोध.
नः. 2. सोमऽमादः. दुध्रऽवाचः. नि ऊं इति. दूरेऽउपब्दः.
नृऽसाचः. 3. त्वविंतवै. करिति कः. परिऽस्थिताः. धेनाः.
4. विवेष आ°. वज्रऽहस्तः. 5. शिश्नऽदेवाः. 6. कत्वा
इ°. विव्यक्. स्वेन. 7. पूर्वै अनु. विऽसह्य इ°. 8. हि.
जुहाव ई°. शतम्ऽऊते. असमे इति. अभिऽक्षत्तुः. 9. ते.
रमःऽवृधासः. स्म. ते अ°. सम्ऽईके अभिऽइतिम्.

---

22.

1. पिब. सुसाव. हरिऽअश्व अ°. सुऽयंतः. न अ°. 2.
रिऽअश्व. प्रभुवसो इति प्रभुऽवसो. 3. बोध. आ इ°. प्र-
शस्तिम्. सधऽमादे. 4. श्रुधि. विऽपिपानस्य अ°. बोध.
प्रस्य अ°. कृष्व. सचा इमा. 5. सुऽस्तुतिम्. स्वऽयशाः.
. मा आरे अस्मत्. करिति कः. 7. तुभ्य इत्. विश्वधा
सि. 8. नु. चित्. दस्म उत्. 9. पूर्वे. असमे इति.

---

23.

1. श्रवस्या इं॰ सऽमर्ये. महय. ततान उपऽश्रोता.
मे. 2. देवऽजामिः. यत् ग्मु॰ विऽवाचि. तानि इत्
3. गोऽएषणम्. रोदसी इति. महिऽत्वा इं॰. अप्रति. 4
पिप्युः. ते. निऽयुतः. अच्छ. 5. तुविऽराधसम्. ग्गूर. 6
एव इत्. वज्रऽबाहुम्. अभि अ॰.

24.

1. योनिः ते. पुरुऽहूत. 2. द्विऽबर्हाः. परिऽसिक्ता
विसृष्टऽधेना. सुऽवृक्तिः. 3. सोमऽपेयाय. अच्छ. 4
सऽजोषाः. हरिऽअश्व. सुऽशिप्र अस्मे इति. 5. महे
धुरिऽइव अ॰. त्वा अ॰. दिविऽइव. 6. एव. सुऽमतिम
सुऽवीराम्.

25.

1. इंद्र ऊती उ॰. सऽमन्यवः. समऽअरंत. दिद्युत
2. दुःऽगे. समऽभरणम्. 3. सुऽदासे. वधः. मर्त्यस्य अस्
इति. 4. हि इं॰. विश्वा इत्. उग्र. 5. हरिऽअश्वाय. दे
वऽजूतम्. सुऽहना.

26.

1. न अ॰. तस्मै. यत्. जुजोषत्. नृऽवत्. 2. उक्थे

ऽउक्थे. सऽबाधः. समानऽदक्षाः. 3. कृणवत्. जनीःऽइव. ममृजे. 4. एव. शृण्वे. विऽभक्ता. मिथःऽतुरः. अस्मे इति. 5. एव.

---

27.

1. नेमऽधिता. पार्याः. नृऽसाता. भज. 2. शिक्ष. पुरुऽहूत. विऽचेताः. अप. परिऽवृतम्. 3. विषुऽरूपम्. उपऽस्तुतः. 4. नु. चित्. सऽहूती. अभिऽवीता. 5. नु. कृधि. अश्वऽवत्.

---

28.

1. ब्रह्म. नः. इंद्र उप. हि. विऽहवंत. इत्. शृ°. विश्वम्ऽइन्व. 2. ते. वि आ°. हस्ते. 3. प्रऽनीती इं°. यत्. रोदसी इति. अतुतुजिम्. 4. इंद्र अ°. दुःऽमित्रासः. यत्. 5. वोचेम इत्. ददत्. ब्रह्मऽकृतिम्.

---

29.

1. सुन्वे. तत्ऽओकाः. पिब. तु अ°. सुऽसुतस्य. 2. ब्रह्मऽकृतिम्. जुषाणः अ°. ऊमिति सु. मादयस्व उप. 3. अरम्ऽकृतिः. सुऽउक्थैः. विश्वाः. त्वाऽया अध. मे. हवा इमा. 4. उतो इति. घ. अध अ°. इंद्र असि. प्रऽमतिः. पिताऽइव. 5=28,5.

---

30.

1. भव॑. नृ ऽ प॒ते. सु ऽ व॒ज्र. 2. ह॒वंते. वि ऽ वाचि. रं॒धय. सु ऽ हंतु. 3. सु ऽ दिनां. वि॒ ऽ उ॒च्छान्. उप॒ ऽ मम्. समत् ऽ सु. नि अ॒°. सु ऽ भगाय. 4. ते॒. यच्छ॑. उप॒ ऽ मम्. सु ऽ आ॒भुवः. 5=28,5.

---

31.

1. हरि॑ ऽ अश्वाय. सोम॒ ऽ पात्रे. 2. शंस॑ इत्. सु ऽ दा-नवे. च॒कृम. स॒त्य ऽ राधसे. 3. श॒त॒क्र॒तो॒ इति॑ शत ऽ क्रतो. व॒सो॒ इति॑. 4. नो॒नु॒मः. वि॒द्धि तु अ॒°. व॒सो॒ इति॑. 5. त्वे इति॑. 6. वर्मी अ॒सि॒. स॒ ऽ प्रथः. पु॒रः ऽ यो॒धः. वृ॒त्र ऽ ह॒न्. 7. उ॒त अ॒सि॒. ते॒ अनु॑. स्व॒धाव॑री॒ इति॑ स्व॒धा ऽ वरी. म॒म्ना॒ते॒ इति॑. रोद॑सी॒ इति॑. 8. स॒ ऽ याव॑री. 9. त्वा॒ अनु॑. 10. म॒हि॒ ऽ वृधे. प्र ऽ चेतसे. सु ऽ म॒तिम्. च॒र॒. च॒र्ष॒णि॒ ऽ प्राः. 11. उ॒रु॒ ऽ व्यच॑से. सु ऽ वृ॒क्तिम्. 12. अनु॑त्त ऽ मन्युम्. हरि॑ ऽ अ-श्वाय. ब॒र्ह॒य॒.

---

32.

1. मो इति॑ सु. च॒न अ॒रि अ॒स्मत्. आ॒रात्तात्. स॒ध॒ ऽ मादम्. ग॒हि॒ इ॒ह. 2. ब्र॒ह्म॒ ऽ कृतः. व॒सु ऽ यवः. 3. रा॒यः ऽ कामः. वज्र॑ ऽ ह॒स्तम्. सु ऽ दक्षि॑णम्. 4. इ॒मे. दधि॑ ऽ आशिरः. व॒ज्र॒-ऽ ह॒स्त. 5. श्रव॑त् श्रु॒त् ऽ कर्णः. नु. चि॒त्. 6. अप्र॑ति ऽ स्कुतः. वृ॒त्र ऽ ह॒न्. 7. भव॑. स॒म् ऽ अजा॑सि. त्वा ऽ हंतस्य. दुः ऽ नशः,

भर. 8. सुनोत. सोमऽपाव्ने. पचत. 9. दक्षत. राये. आऽतुजे. इत्. 10. सुऽदासः. यस्य अ°. 12. इत्. नु अ°. रिच्यते अं°. 13. सुऽधितम्. सुऽपेशसम्. प्रऽसितयः. 14. त्वाऽवसुम्. श्रद्धा सिसासति. 15. वृत्रऽहत्येषु. प्रऽनीती. हरिऽअश्व. दुःऽइता. 16. तव इत्. इंद्र अ°. नकिः त्वा. 17. धनऽदाः. ये. तव अ°. पुरुऽहूत. 18. रदवसो इति रदऽवसो. 19. इत्. कुहचित्ऽविदे. अन्यत्. 20. पुरम्ऽध्या. पुरुऽहूतम्. तष्टाऽइव. सुऽद्रुम्. 21. दुःऽस्तुती. सुऽशक्तिः. इत्. 22. नोनुमः अ°. स्वःऽदृशम्. 23. अश्वऽयंतः. 24. अभि सतः. भर इं°. पुरुऽवसुः. 25. नुदस्व. सुऽवेदा. वसु महाऽधने. भव. 26. शिक्ष. नः. पुरुऽहूत. जीवाः. 27. अज्ञाताः. वृजनाः. दुःऽआध्यः. मा अ°. अति.

---

33.

1. दक्षिणतःऽकपर्दाः. धियम्ऽजिन्वासः. प्रऽमंदुः. उत्ऽतिष्ठन्. 2. पाशऽद्युम्नस्य. अवृणीत. 3. एव इत्(3). ततार. सुऽदासम्. प्र आ°. 4. किल. यत् श°. रवेण इं°. अदधात. 5. द्याम्ऽइव इत्. तृष्णऽजः. नाथितासः अ°. 6. दंडाःऽइव इत्. गोऽअजनासः. परिऽछिन्नाः. अभवत्. पुरःऽएता. 7. प्रऽजाः. आर्याः. ज्योतिःऽअग्राः. 8. सूर्यस्यऽइव. समुद्रस्यऽइव. वातस्यऽइव. प्रऽजवः. न अ°. अनुऽएतवे. 9. ते इत्. प्रऽकेतैः. सहस्रऽवल्शम्. परिऽधिम्. 10. विऽद्युतः. सम्ऽजिहानम्. जन्म उत ए°. वसिष्ठ

अ॰ आ ऽजभार. 11. उत असि· वसिष्ठ उर्वश्याः· मनसः अ॰. त्वा अ॰. 12. प्र ऽकेतः· प्र ऽविद्वान्. सहस्र ऽदानः· स ऽदानः· परि ऽधिम्· 13. सिसिचतुः· 14. उक्थ ऽभृतम्· साम ऽभृतम्· उप ए॰. सु ऽमनस्यमानाः· प्र ऽतृदः·

---

34.

1. शुक्रा ए॰. मनीषा· सु ऽतष्टः· 2. पृथिव्याः· 3. शूराः मंसंते· 4. धूः ऽसु अ॰. दधात अ॰. हिरण्य ऽबाहुः· 5. स्यात अहं ऽइव· याता ऽइव· 6. समत् ऽसु· 7. न आ॰. 10. चष्टे· सहस्र ऽचक्षाः· 11. विश्व ऽआयु· 12. अविष्टो इति· विक्षु. 13. वि एतु· 14. अवीत्· हव्य ऽअत्· अस्मै· 15. स ऽजूः· 16. अप् ऽजाम्· सीदन्· 17. नः अ॰ ऋत-ऽयोः· 19. न· भूम· महा ऽसेनासः· 20. यत्· अच्छ· सु ऽपाणिः· 21. नः· अस्मे इति· वसु ऽयुः· 22. राति-ऽसाचः· रोदसी इति· सु ऽशरणः· सु ऽदत्रः· 23. तत् (2)· राति ऽसाचः· स ऽजोषाः· उभे इति· रोदसी इति· 24. उर्वी इति· रोदसी इति इंद्र ऽसखा· 25. तत्· उप ऽस्थे·

---

35.

1. इंद्राग्नी इति· रात ऽहव्या· वाज ऽसातौ· 2. पुरम्-ऽधिः· सु ऽयमस्य· पुरु ऽजातः· 3. रोदसी इति· बृहती इति· सु ऽहवानि· 4. ज्योतिः ऽअनीकः· सु ऽकृताम्· सु ऽकृतानि· 5. द्यावापृथिवी इति· पूर्व ऽहूतौ· 6. सु ऽशंसः

7. प्र ऽस्वं:. 8. उरु ऽचक्षाः. प्र ऽदिशः. पर्वताः. 9. सु ऽअर्काः. 10. भवंतु उ॰. वि ऽभातीः. प्र ऽजाभ्यः. शम् ऽभुः. 11. देवाः. विश्व ऽदेवाः. अभि ऽसाचः. राति-ऽसाचः. 12. सु ऽकृतः. सु ऽहस्ताः. 13. एक ऽपात्. नः अ॰. देव ऽगोपाः. 14. आदित्याः. रुद्राः. वसवः. जुषंत इ॰. गो ऽजाताः. 15. यज्ञियाः. ऋत ऽज्ञाः. उरु ऽगायम्.

---

36.

1. ब्रह्म एतु. सद्मे. आ ई॰. 2. सु ऽवृक्तिम्. पद ऽवीः. 3. रंते. जायमानः अ॰. 4. हरी इति. ते. सु ऽरथा. धायू इति. सु ऽक्रतुम्. 5. स्वे. नृ ऽभिः. 6. सिंधु ऽमाता. सुस्व-यंत. सु ऽदुघाः. सु ऽधाराः. 7. मंदसानाः. चरंती. 8. धियः अ॰. राति ऽसाचम्. पुरम् ऽधिम्. 9. अच्छ अ॰. अच्छ. निसिक्त ऽपाम्. प्र ऽजायै.

---

37.

1. त्रि ऽपृष्ठैः. सु ऽशिप्राः. 2. स्वः ऽदृशः. 3. वि-ऽभागे. गभस्ती इति. 4. स्व ऽयशाः. ऋभुक्षाः. 5. स-निता असि. हरि ऽअश्व. ववन्म. 6. वासयासि ऽइव. सु-ऽवीरम्. नि उ॰. 7. निः ऽऋतिः. नक्षंत. सु ऽपृक्षः. त्रि-ऽबंधुः. जरत् ऽअष्टिम्. अस्व ऽवेशम्. 8. सवितरिति. स्तवध्यै. सिसक्तु.

---

38.

1. स्यः. पुरु ऽ वसुः. 2. सवितरिति. श्रुधि अ°. हिरण्य ऽ पाणे. प्र ऽ भृतौ. वि उ°. मर्त ऽ भोजनम्. 3. स्तुतः. नः. 4. देवी. सम् ऽ राजः. स ऽ जोषाः. 5. राति ऽ साचः. वरूत्री एकधेनु ऽ भिः. 6. तत्. जाःपतिः. अवसे. 7. मित ऽ द्रवः. सु ऽ अर्काः. जंभयंतः अ°. 8. ऋत ऽ ज्ञाः. तृप्राः. देव ऽ यानैः.

---

39.

1. सु ऽ मतिम्. भेजाते इति. अद्री इति. रथ्या ऽ इव. 2. ववृजे. सु ऽ प्रयाः. विश्पती ऽ इवेति विश्पती ऽ इव. बीरिटे. इयाते इति. पूर्व ऽ हूतौ. 3. उरु ऽ ज्रयः. श्रोत. 4. सध ऽ स्थम्. अध्वरे. पुरम् ऽ धिम्. 5. आ अ°. पृथिव्याः. आ अ°. 6. धात. अवि ऽ दस्यम्. सदा ऽ साम्. 7. नु. रोदसी इति. अभिस्तुते इत्यभि ऽ स्तुते. ऋत ऽ वानः. उप ऽ मम्.

---

40.

1. ओ इति. स्याम अ°. वि ऽ भागे. 2. तत्. रोदसी इति. द्यु ऽ भक्तम्. देवी अदितिः. यत्. नियुवैते इति नि ऽ युवैते. 3. सः इत्. पृषत् ऽ अश्वाः. उत ईम्. परि ऽ एता अ°. 4. अर्यमा अ°. धुरिति धुः. सु ऽ हवा. देवी. 5. वयाः. प्र ऽ भृथे. 6. मा अ°. आ ऽ घृणे. राति ऽ साचः. मयः ऽ भुवः. परि ऽ ज्मा.

---

41.

1. प्रातरग्निं सः. 2. प्रातःऽजितम्. वि ऽधर्ता. भक्षि इति. 3. प्रणेतरिति प्र ऽनेतः. सत्य ऽराधः. भग इ॰. अव. ददत् नः. 4. उत इ॰. स्याम उत. प्र ऽपित्वे. उत उत् ऽइता. सु ऽमतौ. 5. इत्. पुरः ऽएता. भव इह. 6. अध्वराय उ॰. दधिक्रावा ऽइव. वसु ऽविदम्. रथम् ऽइव अश्वाः. 7. अश्व ऽवतीः. उषसः. दुहानाः. प्र ऽपीताः.

42.

1. उद ऽप्रुतः. अद्री इति. 2. सु ऽगः. सन ऽवित्तः. युक्ष्व. अरुषाः. वीर ऽवाहः. 3. रिरिचे. पुरु ऽअनीक. 4. स्योन ऽशीः. आ ऽचिकेतत्. सु ऽप्रीतः. सु ऽधितः. दमे. 5. कृधि. उषसा उशाना. यज इह. 6. एव अ॰. रायः ऽकामः. 7. एव. विश्व ऽपस्न्यस्य. अस्मे इति.

43.

1. पृथिवी इति. वि ऽयंति. 2. स ऽमनसः. साधु ऊ॰. 3. वि ऽभृत्राः. कुरिति कः. 4. सु ऽदुघाः. स ऽमनसः. स्थ. 5. एव. विक्षु. सध ऽमादः. अरिष्टाः.

44.

1. दधि ऽक्राम्. अश्विना उ॰. सम् ऽइद्धम्. द्यावापृथिवी

इति. स्वरिति स्वः. 2. दधि ऽ क्राम्. उत् ऽ ईराणाः. उप ऽ प्रयंतः. सु ऽ हवा. 3. दधि ऽ क्रावाणम्. ब्रुवे. मंश्चतोः. विश्वा अ॰. दुः ऽ हना. यवयंतु. 4. दधि ऽ क्रावा. वाजी अर्वा अ॰. प्र ऽ जानन्. सम् ऽ विदानः. सूर्येण आ॰. 5. दधि ऽ क्राः. अनु ऽ एतवै.

---

45.

1. सु ऽ रत्नः. अंतरिक्ष ऽ प्राः. नि ऽ वेशयन्. प्र ऽ सुवन्. 2. बाहू इति. अस्मै. 3. घ. सह ऽ वा आ. वसु ऽ पतिः. वि ऽ श्रयमाणः. मर्त ऽ भोजनम्. 4. इमाः. सु ऽ जिह्वम्. पूर्ण ऽ गभस्तिम्. सु ऽ पाणिम्. अस्मे इति.

---

46.

1. इमाः. स्थिर ऽ धन्वने. क्षिप्र ऽ इषवे. तिग्म ऽ आयुधाय. भरत. 2. चर अ॰. 3. अव ऽ सृष्टा. सु ऽ अपिवात. रिरिषः. 4. इषीः. द्याः. प्र ऽ सितौ. जीव ऽ शंसे.

---

47.

1. इंद्र ऽ पानम्. अकृण्वत इ॰. घृत ऽ प्रुषम्. 2. आशु ऽ हेमा. 3. शत ऽ पवित्राः. घृत ऽ वत्. 4. आ ऽ ततान. धातन.

---

48.

1. वाजाः. अस्मे इति. वि ऽभ्वः. 2. वि ऽभ्वः. विभु ऽभिः. वाज ऽसातौ. 3. हि. वि ऽभ्वा ऋभुक्षाः. 4. नु कर्तन. विश्वे अ°. स ऽजोषाः. अस्मे इति.

49.

1. समुद्र ऽज्येष्ठाः. पुनानाः. अनि ऽविशमानाः. याः. 2. स्वयम् ऽजाः. समुद्र ऽअर्थाः. 3. सत्यानृते इति. अव ऽपश्यन्. मधु ऽश्चुतः. 4. देवाः. यासु ऊ°. प्र ऽविष्टाः.

50.

1. मित्रावरुणा इह. वि ऽश्रयन्त्. दुः ऽदृशीकम्. 2. वि ऽजामन्. अग्निः तत् शो°. 3. यत् शा°. यत्. देवाः. 4. शिवाः. अशिपदाः. सर्वाः. अशिमिदाः.

51.

3. आदित्याः. विश्वे. तुस्तुवानाः.

52.

1. द्यावापृथिवी इति. 2. तत्. ममहत. भुजेम अन्य-ऽजातम्. यत्. 3. तुरण्यवः अं°. तत्. स ऽमनसः.

53.

1. पृथिवी इति. सुऽबाधः. बृहती इति. यजत्रे इति. ते इति. हि. मही इति. देवपुत्रे इति देवऽपुत्रे. 2. पूर्वजे इति पूर्वऽजे. सदने इति. द्यावापृथिवी इति. 3. उतो इति. रत्नऽधेयानि. द्यावापृथिवी इति. सुऽदासे. अस्मे इति.

---

54.

1. वास्तोः. सुऽआवेशः. भव. त्वा इ॰. तत्. द्विऽपदे. चतुःऽपदे. 2. वास्तोः प्रऽतरणः. गयऽस्फानः. इंदो इति. पिताऽइव. 3. वास्तोः सम्ऽसदा. क्षेमे.

---

55.

1. अमीवऽहा. वास्तोः आऽविशन्. सुऽशेवः. 2. विऽइव. भ्राजंते. सु. 3. पुनःऽसर. दुच्छुनऽयसे. 6. यथा इ॰. 7. सहस्रऽशृंगः. उत्ऽआचरत्. तेन. सहस्येन. 8. प्रोष्ठेऽशयाः. वह्येऽशयाः. तल्पऽशीवरीः. पुण्यऽगंधाः.

---

56.

1 के. विऽअंक्ताः. सऽनीळाः. अधं. सुऽअश्वाः. 2. हि ए॰. 3. स्वऽपूभिः. वातऽस्वनसः. 5. सुऽवीराः. 6. सम्ऽमिश्लाः. 7. ओजः. अधं. 9. दुःऽमतिः. प्रणक्. 10. तपन्. 11. सुऽआयुधासः. सुऽनिष्काः. 12. ऋत-

ऽसार्वः. शुचिऽजन्मानः. 13. उपऽशिश्रियाणाः. विऽद्युतः. वृष्टिऽभिः. 14. प्रऽयज्यवः. गृहऽमेधीयम्. 15. अधि-ऽइथ इ मक्षु. सुऽवीर्यस्य. नु. आऽदभन्. 16. सुऽअंचः. यक्षऽदृशः. हर्म्येऽस्थाः. शुभ्राः. प्रऽक्रीळिनः. पयःऽधाः. 17. रोदसी इति. सुमेके इति सुऽमेके. गोऽहा. नृऽहा. अस्मे इति. 19. रमयंति इमे. 20. चित्. अस्मे इति. 21. दात्रात्. विऽभागे. नः. भजनन. सुऽजातम्. 22. ह-नंत. शुराः. स्म. 24. अस्मे इति. युष्मी अ°. विऽधर्ता. सु-ऽक्षितये. तरेम अ°. 25.=34. 25.

---

57.

1. रोदसी इति. उर्वी इति. 2. निऽचेतारः. प्रऽनेतारः. 3. न ए°. यथा इमे. रोदसी इति. विश्वऽपिशः. अंजि अ°. 4. भूम. अस्मे इति. सुऽमतिः. 5. रणंत अ°. नः. सुमतिऽभिः. 6. प्रऽजायै. 7. विश्वे ऊती. अच्छ.

---

58.

साकम्ऽउक्षे. अर्चत. रोदसी इति. निःऽऋतेः. 2. तु-विऽमन्यवः अ°. ओजसा उत. स्वःऽदृक्. 3. इत्. सु-ऽस्तुतिम्. न अश्वा. नः. 4. युष्माऽऊतः (3). सम्ऽराट्. 5. कुवित्. 6. सुऽस्तुतिः. सुऽउक्तम्. आरात्.

---

59.

1. त्रायध्वे. तस्मै. मित्रं अ॰. अवसा अहनि. प्रिये. 3. परि ऽ मंसते. 4. यस्मै. आ अ॰. सु ऽ मतिः. 5. ओ इति. सु. धृष्वि ऽ राधसः. यातन अं॰. मो इति सु अ॰. 6. सदत अवित. नः. स्वाहा इह. 7. सस्वरिति. हि. नील ऽ पृष्ठाः. सेद. 8. दुः ऽ हृणायुः. हंतन. 9. तत्. युष्माक ऊती. 10. गृह ऽ मेधासः. मा अप. युष्माक ऊती. सु ऽ दानवः. 11. इह ऽ इह. स्व ऽ तवसः. सूर्य ऽ त्वचः. 12. No Pada text.

---

60.

1. ब्रवः अ॰. उत् ऽ यन्. देव ऽ त्रा अ॰. 2. नृ ऽ चक्षाः. उभे इति. 3. सध ऽ स्थात्. यूथा ऽ इव. 4. अरुहत् गु॰. यस्मै. स ऽ जोषाः. 5. इमे. ववृधुः. 6. दुः ऽ दभासः. चित्. सु ऽ चेतसम्. सु ऽ पथा. 7. अनि ऽ मिषा. प्र ऽ व्राजे. चित्. 8. सु ऽ दासे. दधानाः. देव ऽ हेळनम्. 9. वरुण ऽ धुतः. वृणक्तु उ॰. सु ऽ दासे. वृषणौ. 10. सस्वरिति. सम् ऽ ऋतिः. त्वेषी ए॰. रेजमानाः. चित्. मृळत. 11. सु ऽ मतिम्. आ ऽ यजाते. सु ऽ धातु. 12. देवा. पुरः ऽ हितिः. दुः ऽ गा.

---

61.

1. वरुणा. सु ऽ प्रतीकम्. 2. ऋत ऽ वा. दीर्घ ऽ श्रुत्. सुक्रतू इति सु ऽ क्रतू. पृणैथे इति. 3. प्र उ॰. सुदानू इति सु ऽ दानू. दधाथे इति. विक्षु अनि ऽ मिषम्. 4. शंस. रोदसी इति. यज्ञ ऽ मन्मा. 5. इमाः. 6. स ऽ बाधः. 7.=60, 12.

---

62.

1. सु ऽ क्रतुः. 2. एभिः. वोचः अ°. 3. ऋत ऽ वानः, उप ऽ मम्. 4. द्यावाभूमी इति. सु ऽ जनिमानः. ऋष्वे इति. 5. इवा इमा. 6. नु. सु ऽ गा. सु ऽ पथानि.

---

63.

1. सु ऽ भगः. विश्व ऽ चक्षाः. चर्म ऽ इव. सम् ऽ अविव्यक्. 2. प्र ऽ सविता. परि ऽ आविवृत्सन्. 3. वि ऽ भ्राजमानः. उप-ऽस्थात्. अनु ऽ मद्यमानः. प्र ऽ मिनाति. 4. उरु ऽ चक्षाः. दू-रे ऽ अर्थः. प्र ऽ सूताः. 5. यत्र. अमृताः. सूरे. उत् ऽ इते. मित्रा-वरुणा उत.

---

64.

1. निः ऽ निजः. सु ऽ जातः. सु ऽ क्षत्रः. 2. सिंधुपती इति सिंधु ऽ पती. मित्रावरुणा उत. जीरदानू इति जीर ऽ दानू. 3. तत्. सु ऽ दासे. देव ऽ गोपाः. 4. धारयत्. सु ऽ क्षितीः. 5. पुरम् ऽ धीः.

---

65.

1. सुरे. उत् ऽ इते. सु ऽ उक्थैः. पूत ऽ दक्षम्. आ ऽ चिता. 3. भूरि ऽ पाशौ. सेतू इति. दुरत्येतू इति दुः ऽ अत्येतू. दुः ऽ इता 4. हव्य ऽ जुष्टिम्.

---

66.

1. वरुणयोः. तुवि ऽ जातयोः. 2. सु ऽ दक्षा. दक्ष ऽ पितरा. प्र ऽ महसा. 3. नः. स्ति ऽ पा. तनू ऽ पा. 4. सूरे. उत् ऽ इते अनागाः. 5. सुप्र ऽ अवीः. सु ऽ दानवः. अति ऽ पिप्रति. 6. स्व ऽ राजः. 7. सूरे. उत् ऽ इते. 8. मेध ऽ सातये. 9. स्वरिति स्वः. 10. सूर ऽ चक्षसः अग्नि ऽ जिह्वाः. ऋत ऽ वृधः. परिभूति ऽ भिः. 11. अहः. च आत्. 12. सु ऽ उक्तैः. सूरे. उत् ऽ इते. 13. ऋत ऽ वानः. ऋत ऽ जाताः. ऋत ऽ वृधः. अनृत ऽ द्विषः. सुच्छर्दिः ऽ तमे. 14. प्रति ऽ व्हरे. 16. तत्. देव ऽ हितम्. उत् ऽ चरत्. 17. अदाभ्या आ. सोम ऽ पीतये. 18. च आ. आतुजी इत्यातुजी. 19. आ ऽ हुतिम्. ऋत ऽ वृधा.

---

67.

1. नृपती इति नृ ऽ पती. अच्छ. 2. सम् ऽ इधानः. अस्मे इति. उपो इति. पुरस्तात् श्रि°. 3. सु ऽ होता. सिसक्ति. स्वः ऽ विदा. 4. माध्वी इति. वसु ऽ युः. अस्मे इति. सु ऽ स्तुता. 5. देवा अ°. मे अ°. वसु ऽ युम्. वाजे. पुरम् ऽ धीः. शचीपती इति शची ऽ पती 6. धीषु अ°. सु ऽ रत्नासः. देव ऽ वीतिम्. 7. पूर्वगत्वा ऽ इव. नि ऽ धिः. माध्वी इति. अस्मे इति. मनसा आ. 8. सु ऽ भर्वः. देव ऽ युक्ताः. 9. मव ऽ देयम्. 10. नु.

---

68.

1. सु ऽअश्वा॑. प्रति॑ऽभृता. 3. मनः॑ऽजवाः. शत ऽऊ॑तिः सूर्यविसू इति॑. 4. देव ऽयाः ऊं इति॑. सोम ऽसुत्. वल्गू इति॑. 5. नु. नि. 6. भूत्. हविः ऽदे. इतः ऽऊ॑ति. 7. दुः-ऽएवा॑सः. 8. चित्. चित् शक्ती अ॰. 9. सु ऽउक्तैः. सु ऽमन्मा॑.

---

69.

1. रोद॑सी इति॑. घृत ऽवर्त॑निः. पवि ऽभिः॑. नृ ऽपतिः॑. 2. भूम॑. त्रि ऽवंधुरः. मन॑सा आ. कुत्र॑. 3. सु ऽअश्वा॑. यशसा॑ आ. नि ऽधिम्. याद॑मानः अं॰. 4. योषा॑ अ॰. परि॑ ऽतकम्या-याम्. 5. वस्ते॑ उस्राः. परि ऽयाति॑. वि ऽदृष्टौ. नि अ॰. 6. गौरा ऽइव. वि ऽद्युत॑म्. तृषाणा अ॰. सव॑ना उप॑. 7. अव॑-ऽविद्धम्. समुद्रे. 8=67.9.

---

70.

1. विश्व ऽवारा अ॰. शुन ऽपृष्ठः. 2. सिस॑क्ति. सु ऽमतिः. चनिष्ठा अ॰. एत॑ ऽग्वा. चित्. सु ऽयुजा॑. 3. दधाथे इति॑. सद॑ता इ॰. 4. देवौ. अश्वैथे इति॑. नि अस्मे इति॑. 5. चक्षाथे इति॑. जना॑य. अस्मे इति॑. सु ऽमतिः. 6. कृत ऽब्रह्मा. सु ऽमर्यः. 7. मनीषा. सु ऽवृक्तिम्.

---

71.

1. अश्व॑ऽमघा. गो॑ऽमघा. 2. उप॒ऽआया॑तम्. माध्वी॒ इति॑. 3. वि ऽ उ॑ष्टौ. सु॒म्नऽयवः॑. स्यू॒म॑ऽगभस्तिम्. ऋ॒त॒युक्ऽभिः॑. आ अ॒°. 4. नृ॒प॒ती॒ इति॑ नृ ऽपती. त्रि॒ऽवं॒धु॒रः. उ॒रु॒ऽया॑मा. ना॒स॒त्या॒ उप॑. वि॒श्वऽप्स्न्यः॑. 5. पेदवे॑. तम॑सः. अं॒तरिति॑. 6=70.7.

---

72.

1. रथे॑न अश्व॑ऽवता. पु॒रु॒ऽचं॒द्रेण॑. विश्वाः॑. नि॒ऽयुतः॑. 2. स॒ऽजोष॑सा. 3. आ॒ऽविवा॑सन्. रोद॑सी॒ इति॑. धिष्ण्ये॒ इति॑. इ॒मे इति॑. अच्छ॑. 4. च॒ इत्. उ॒षसः॑. ऊ॒र्ध्वम्. स॒म्ऽइधा॑. 5. प॒श्चाता॑त्. ना॒स॒त्या॒ आ. आ अ॒°.

---

73.

1. पु॒रु॒ऽदंसा॑. पु॒रा॒ऽजा अ°. 2. नि. ऊँ इति॑ उ॒पा॒के. 3. सु॒ऽवृ॒क्तिम्. श्रु॒ष्टी॒वाऽइ॑व. प्र ऽइ॑षितः. 4. वह्नी॒ इति॑. र॒क्षः॒ऽहना॑. सम्ऽभृ॑ता. वी॒ळुपा॑णी॒ इति॑ वी॒ळु॒ऽपा॑णी. 5=75.2.

---

74.

1. अ॒ह्वे अ° श॒ची॒व॒सू॒ इति॑ श॒ची॑ऽवसू. 2. स॒ऽम॑नसा. 3. जे॒न्या॒व॒सू॒ इति॑. 4. म॒क्षु॒यु॒ऽभिः॑. अ॒श्वि॒ना॒ आ. अ॒स्म॒यू॒ इत्य॑स्म॒ऽयू. 5. अध॑. 6. नृ॒ऽपा॒तारः॑. सु॒ऽक्षि॒तिम्.

---

75.

1. वि उ॰. दिविऽजाः. ऋतेन आविःऽकृण्वाना. आ अ॰. आवः. अजीगरिति. 2. अस्मे इति. 3. आ अ॰. आऽपृणंतः. वि अ॰. 4. अभिऽपश्यंती. 5. चित्रऽमघा. ऋषिऽस्तुता. मघोनी. 6. विश्वऽपिशा. 8. नु. अश्वऽवत्. पुरुऽभोजः. अस्मे इति.

---

76.

1. विश्वऽजन्यम्. 2. पंथाः. देवऽयानाः. प्रतीची आ अ॰. 3. तानि इत्. उत्ऽइता. जारःऽइव आऽचरंती. यतीऽइव. 4. ते. सधऽमादः. ऋतऽवानः. सत्यऽमंत्राः. उपसम्. 5. समाने. सम्ऽगतासः. 6. उषःऽबुधः. सुऽभगे. तुस्तुऽवांसः. वाजऽपत्नी. उच्छ उ॰. सुऽजाते. 7. दीर्घऽश्रुतम्. अस्मे इति.

---

77.

1. उपो इति. प्रऽसुवंती. सम्ऽइधे. 2. सऽप्रथाः. हिरण्यऽवर्णा. सुदृशीकऽसंदृक्. नेत्री. 3. सुऽभगा. सुऽदृशीकम्. विऽअक्ता. चित्रऽमघा. प्रऽभूता. 4. अंतिऽवामा. उच्छ उ॰. कृधि. यवय. भर. 5. अस्मे इति. प्रऽतिरंती. विश्वऽवारे. अश्वऽवत्. रथऽवत्. 6. सुऽजाते. सा अ॰. धाः.

---

78.

2. सीम्. सम्ऽइंद्धः. उषाः. दुःऽहुता अप. 3. पुरस्तात् विऽभातीः. 4. विऽभातीम्. आ अ. सुऽयुजः. 5. त्वा अ°. सुऽमनसः. बुधंत अ°. विऽभातीः.

---

79.

1. वि उ°. सुसंदृक्ऽभिः. रोदसी इति. चक्षसा आवरित्यावः. 2. वि अं°. सविताऽइव. बाहू इति. 3. मघोनी. सुऽकृते. 4. वृषभस्य. 5. चोदयंती. विऽउच्छंती. धाः.

---

80.

1. वसिष्ठाः. विऽवर्तयंतीम्. रजसी इति. समंते इति सम्ऽअंते. आविःऽकृण्वतीम्. 2. ज्योतिषा उ°. अग्ने. प्र अ°. 3 = 41. 7.

---

81.

1. ऊँ इति आऽयती उ°. अपो इति. ज्योतिः. 2. सचा उत्ऽयत्. तव इत्. विऽउषि. 4. प्रऽख्यै. रत्नऽभाजः. 5. तत्. भर उ°. दीर्घश्रुत्ऽतमम्. मर्तऽभोजनम्. 6. सूनृताऽवती.

---

82.

1. दीर्घऽप्रयज्युम्. दुःऽध्यः. 2. सम्ऽराट्. स्वऽराट्. महावसू इति महाऽवसू. विऽओमनि. 3. ओजसा आ. प्रऽभुम्. मायिनः अ°. 4. प्रऽसवे. मितऽज्ञवः. सुऽहवा. 6. त्विषे. मिमाते इति. आ अ°. 7. दुःऽइतानि. परिऽह्वृतिः. 8. अर्वाक्. दैव्येन अवसा आ. 9. पुरःऽयोधा. कृष्टिऽओजसा. हवते. 10. अस्मे इति. सऽप्रथः. ऋतऽवृधः.

---

83.

1. पृथुऽपर्शवः. सुऽदासम्. इंद्रावरुणा अवसा अ°. 2. यत्र. (2). सम्ऽअयंते. कृतऽध्वजः. स्वःऽदृशः. तत्र. इंद्रावरुणा अ°. 3. अंताः. अदृक्षत इं°. आ अ. हवनऽश्रुता आ. 4. सुऽदासम्. पुरःऽहितिः. 5. अभि. मा अ°. राजथः अ°. स्म. 6. हवंते. निऽबाधितम्. सुऽदासम्. 7. सम्ऽइताः. सुऽदासम्. अघ्नऽसदाम्. उपऽस्तुतिः. देवऽहूतिषु. 8. परिऽयत्ताय. सुऽदासे. 9. सम्ऽइथेषु. सुवृक्तिऽभिः. अस्मे इति. 10.=82. 10.

---

84.

1. विषुऽरूपा. 2. युवोः. 3. प्रऽशास्ता. उपो इति. देवऽजूतः. नः. 4. अस्मे इति. विश्वऽवारम्. पुरुऽक्षुम्. 5. प्र आ°. सुऽरत्नासः. देवऽवीतिम्.

85.

1. घृत॒ऽप्रतीकाम्. 2. वै. दे॒व॒ऽहूये. 3. हि. स्व॒ऽयं-शसः. धुरि॒ति धुः. प्र॒ऽविक्ताः. 4. सु॒ऽक्रतुः. ऋ॒त॒ऽचित्-आ॒दि॒त्या. आ॒ऽव॒वर्तत्. 5=84. 5.

---

86.

1. तु अ॒°. रोद॑सी॒ इति॑. उ॒र्वी इति॑. प॒प्रथ॑त्. 2. नु अं॒°. सु॒ऽमनाः. 3. दि॒दृक्षु उपो॒ इति॑. वि॒ऽपृच्छम्. इत्. 4. तत्. दुः॒ऽद॒भ. स्व॒धा॒ऽवः अव॑. त्वा॒ अ॒नेनाः. 5. सृ॒ज. नः अव॑. च॒कृम. प॒शु॒ऽतृप॑म्. सृज. 6. वि॒ऽभीद॑कः. उ॒प॒ऽअ॒रे. च॒न इत्. प्र॒ऽयोता. 7. भूर्णये अ°. 8. उप॑ऽश्रितः.

---

87.

1. प्र अ°. ऋ॒त॒ऽयन्. 2. म॒ही इति॑. बृ॒ह॒ती इति॑. रोद॑सी॒ इति॑. इ॒मे इति॑. 3. स्मत्॒ऽइ॑ष्टाः. उ॒भे इति॑. रोद॑सी॒ इति॑. सु॒मेके॒ इति॑ सु॒ऽमेके॑. ऋ॒त॒ऽवा॑नः. य॒ज्ञ॒ऽधी॑राः. प्र॒ऽचे॑तसः. ये. 4. नाम॑ अ°. 5. नि॒ऽहि॑ताः. षट्॒ऽवि॑धानाः. च॒क्रे. प्र॒ऽई॒खम्. 6. ग॒म्भी॒र॒ऽशं॑सः. वि॒ऽमानः. सु॒पा॒र॒ऽक्ष॑त्रः.

---

88.

1. स॒हस्र॑ऽमघम्. 2. अध॑. नु अ॒°. स॒म्॒ऽदृशम्. अ॒धि॒ऽपाः. 3. प्र॒ऽई॒खे. 4. ना॒वि आ अ॒°. सु॒ऽअपाः. यात्. उ॒षसः

5. सचावहै इति. सहस्र ऽद्वारम्. जगम. 6. ते. स्म. विप्रः. 7. त्वा आसु. वि अ°. उप ऽस्थात्.

---

89.

1. मो इति सु. मृत् ऽमयम्. मृळ. सु ऽक्षत्र. 2. प्रस्फुरन् ऽइव. 3. प्रति ऽईपम्. जगम. 4. तृष्णा अविदत्. 5. च इ°. अभि ऽद्रोहम्. धर्म. रिरिषः.

---

90.

1. वायो इति. नि ऽयुतः. अच्छ. पिब. सुतस्य अं°. 2. प्र ऽहुतिम्. ते. शुचि ऽपाः. वायो इति. प्र ऽशस्तम्. वाजी अ°. 3. जज्ञतुः. रोदसी इति. इमे इति. नि ऽयुतः. वसु ऽधितिम्. 4. सु ऽदिनाः. प्र ऽदिवः. 5. इंद्रवायू इति. वीर ऽवाहम्. 6. नः. इंद्रवायू इति 7. इंद्रवायू इति सुस्तुति ऽभिः. सु.

---

91.

1. बाधिताय अ°. 2. इंद्रवायू इति. सु ऽस्तुतिः. 3. पीवः ऽअन्नान्. रयि ऽवृधः. सु ऽमेधाः. सिसक्ति. नि ऽयुताम्. अभि ऽश्रीः. स ऽमनसः. विश्वा इत्. सु ऽअपत्यानि. 4. यावत् न°. शुचि ऽपा. अस्मे इति. इंद्रवायू इति. आ इ°. 5. नि ऽयुवाना. नियुतः. स्पार्ह ऽवीराः. इंद्रवायू इति. स ऽरथम्. प्र ऽभृतम्. अस्मे इति. 6. याः. नि ऽयुतः. इंद्रवायू इति. विश्व ऽवाराः. आ आ°. सु ऽविदत्राभिः. प्रति ऽभृतस्य. 7=90. 7.

92.

1. वायो इति. शुचिऽपाः. निऽयुतः. विश्वऽवार. उपो इति. पूर्वऽपेयम्. 3. अच्छ. नियुत्ऽभिः. वायो इति. सुऽभोजसम्. 4. वायवे. इंद्रऽमादनासः. आऽदेवासः. निऽतोशनासः. स्याम. ससह्वांसः. 5. नियुत्ऽभिः. वायो इति.

---

93.

1. नवऽजातम्. अद्य इंद्राग्नी इति. वृत्रऽहना. सुऽहवा. 2. सानसी इति. साकम्ऽवृधा. 3. उपो इति. प्रऽमतिम्. 4. प्रऽमतिम्. पूर्वऽभाजम्. इंद्राग्नी इति. वृत्रऽहना. सुऽवज्रा. 5. यत्. मही इति. मिथती इति. स्पर्धमाने इति. तनूऽरुचा. शूरऽसाता. यतैते इति. सोमऽसुता. 6. सु. सोमऽसुतिम्. आ इंद्राग्नी इति. नु. हि. परिमम्नाथे इति परिऽमम्नाथे. 7. अग्ने. सम्ऽइद्धः. अच्छ. चकृम अर्यमा अ°. 8. अग्ने. सचा अभि अ°. मः इं°.

---

94.

1. इंद्राग्नी इति. पूर्व्यऽस्तुतिः. वृष्टिःऽइव अ°. 2. इंद्राग्नी इति 3. नरा इंद्राग्नी इति. मा अभिऽशस्तये. 4. सुऽवृक्तिम्. आ ई°. 5. ईळते. सऽबाधः. वाजऽसातये. 6. मेधऽसाता. 7. इंद्राग्नी इति अवसा आ. चर्षणिऽसहा. दुःऽशंसः. 8. इंद्राग्नी इति. 9. हिरण्यऽवत्. अश्वऽवत्. इंद्राग्नी इति. 10. सोमे. इंद्राग्नी इति. सप्तिऽवंता. 11.

वृत्रहन्ऽतमा. आऽविवासत:. 12. दु:ऽशंसम्. दु:ऽविद्वांसम्. आऽभोगम्. उद्ऽधिम्.

---

95.

1. सस्रे. प्रऽवावधाना. रथ्याऽइव. 2. एका अ°. 3. ववृधे. ममृजीत. 4. जुषाणा उप°. सुऽभगा. मितज्ञुऽभि:. 5. जुह्वाना:. 6. सुऽभगे. वि. आववरित्यावः.

---

96.

1. इत्. महय. सुवृक्तिऽभि:. रोदसी इति. 2. उभे इति अंधसी इति. अधिऽक्षियंति. मरुत्ऽसखा. 3. सरस्वती अकृवऽअरी. 4. जनिऽयंत:. नु. पुत्रिऽयंत:. सुऽदानव: 5. घृतऽश्चुत:. 6. सरस्वत:. विश्वऽदर्शत:. प्रऽजाम्.

---

97.

1. नृऽसदने. पृथिव्या:. गमत्. 2. वृणीमहे अ°. महे. अनागा:. पिताऽइव. 3. सुऽशेवम्. सिसक्तु. देवऽकृतस्य. 4. विश्वऽवार:. सुऽवीर्यस्य. पर्षत्. 5. पुराऽजा:. शुचिऽक्रंदम्. 6. अश्वा:. सहऽवाह:. सधऽस्थम्. 7. शतऽपत्र:. हिरण्यऽवाशी:. स्व:ऽसा:. सुऽअविश:. पुरु. आऽसुतिम्. 8. देवी इति. रोदसी इति. जनित्री इति. बबृधतु:. दक्षत. सुऽतरा. सुऽगाधा. 9. सुऽवृक्ति:. ब्रह्म इ°. पुरऽधी:. 10. दिव्यस्य ईशाथे इति.

98.

1. अव ऽपानम्. विश्वाहा इत्. सुत ऽसोमम्. 2. प्र ऽदिवि. हृदा उत. प्र ऽस्थितान्. 3. आ इं०. पप्रथ उरु अं०. 4. योधयाः. इंद्र अभि ऽयुध्याः. त्वया आजिम्. 5. प्र इं०. यदा इत्. अथ अ०. 6. तव इ०. गो ऽपतिः. प्र ऽयतस्य.

---

99.

1. उभे इति. रजसी इति. पृथिव्याः. विष्णो इति. 2. विष्णो इति. अस्तभ्नाः. 3. इरावती इतीरा ऽवती. धेनुमती इति धेनु ऽमती. सुयवसिनी इति सु ऽयवसिनी. वि अस्तभ्नाः. रोदसी इति. विष्णो इति एते इति. 4. उषसम्. वृष ऽशिप्रस्य. मायाः. 5. इंद्राविष्णू इति. अप्रति. 6. बृहंता उरु ऽ क्रमा. विष्णो इति. 7. तत्. शिपि ऽविष्ट. सु ऽस्तुतयः.

---

100.

1. नु. विष्णवे उरु ऽगायाय. यजाति. आ ऽविवासात्. 2. विष्णो इति. सु ऽमतिम्. विश्व ऽजन्याम्. अप्र ऽयुताम्. एव ऽयावः. अश्व ऽवतः. पुरु ऽ चंद्रस्य. 3. शत ऽअर्चसम्. हि अ०. 4. उरु ऽक्षितिम्. सु ऽजनिमा. 5. शिपि ऽविष्ट. नाम अ०. 6. विष्णो इति परि ऽचक्ष्यम्. शिपि ऽविष्टः. अन्य ऽरूपः. सम् ऽइथे.

---

101.

1. ज्योतिःऽअग्राः. मधुऽदोघम्. 2. त्रिऽधातु. त्रिऽवर्तु. सुऽअभिष्टि अस्मे इति. 3. सूते. यथाऽवशम्. चक्रे. 4. उपऽसेचनासः. मध्वः. विऽरप्शम्. 5. स्वऽराजे. तत्. मयःऽभुवः. अस्मे इति. सुऽपिप्पलाः. देवऽगोपाः. 6. रेतःऽधाः. तत्. मा. शतऽशारदाय.

102.

3. तस्मै. जुहोत. सम्ऽयतम्.

103.

1. शशयानाः. ब्राह्मणाः. व्रतऽचारिणः. पर्जन्यऽजिन्विताम्. 2. सरसी इति. अत्र. 3. अभि. आऽगतायाम्. अख्खलीकृत्य. 4. प्रऽसर्गे. अभिऽवृष्टः. कनिस्कन्. सम्ऽपृंक्ते. 5. शाक्तस्यऽइव. समृधाऽइव. सुऽवाचः. वदथन अ°. 6. गोऽमायुः. अजऽमायुः. विऽरूपाः. 7. अतिऽरात्रे. अहरिति. स्थ. यत्. 8. सिस्विदानाः. गुह्याः. 9. देवऽहितिम्. द्वादशस्य. आऽगतायाम्. तप्ताः. विऽसर्गम्. 10. हरितः. मंडूकाः. सहस्रऽसावे. तिरंते.

104.

1. नि अ°. तमःऽवृधः. नि ओ°. 2. अघऽशंसम्. अभि

अ॰ ब्रह्मऽद्विषे. क्रव्यऽअदे. घोरऽचक्षसे. 3. दुःऽकृतः. न
अ॰ चन उत्ऽअयत्. मन्युऽमत् श॰ 4. अवऽशंसाय.
वव्रऽधानम्. निऽजूर्वथः. 5. अग्निऽतप्तेभिः. अश्महन्मऽभिः.
तपुःऽवधेभिः. निऽस्वरम्. 6. कक्ष्या अश्वाऽइव. परि-
ऽहिनोमि. मेधया इमा. नृपती इवेति नृपतीऽइव. 7. भंगु-
रऽवतः. दुःऽकृते. सुऽगम्. आभऽदासति. 8. अभिऽचष्टे.
सम्ऽगृभीताः. असतः. 9. पाकऽशंसम्. विऽहरंते. प्रऽद-
दातु. निःऽऋतेः उपऽस्थे. 10. रिपुः स्तेनः स्तेयऽकृत्. सः
11. देवाः. 12. सुऽविज्ञानम्. सत् च असत्. वचसी इति.
पस्पृधाते इति. असत्. 13. वै. प्रऽसितौ. शयाते इति.
14. वा अ॰ अनृतऽदेवः. अपिऽऊहे. जातऽवेदः. द्रोघ-
ऽवाचः. निःऽऋथम्. 15. अद्य. यातुऽधानः. वा आ॰ पुरु-
षस्य. अध. यूयाः. यातुऽधान इति. 16. मा अ॰ अस्मिन्
इति. 17. खर्गलाऽइव. 18. विक्षु इ॰ 19. सोमऽशि-
तम्. 20. एते. श्वऽयातवः. दिप्सवः अ॰ 21. पराऽशरः.
हविःऽमथीनाम्. अभि.आऽविवासताम्. अभि इत्. पात्राऽइव.
22. उलूकऽयातुम्. शुशुलूकऽयातुम्. श्वऽयातुम्. कोक-
ऽयातुम्. सुपर्णऽयातुम्. गृध्रऽयातुम्. दृषदाऽइव. 23. या-
तुऽमावताम्. अप उ॰ 24. यातुऽधानम्. विऽग्रीवासः. मूर-
ऽदेवाः. उत्ऽचरंतम्. 25. चक्ष्व इंद्रः.

## *ERRATA IN PP. 161 TO 196, EXTRACTS FROM THE PADA TEXT.*

---

1, 8. न: need not have been given. 5, 7. जातऽवेदः. Add (8) to show that the form occurs also in v. 8. 13, 1. त्वे इति. Add (3) to show that the form recurs twice in the verse. 20, 10. Add सु. 23, 6. Add नः. 32, 5. Add वदंत्. 14. सिसासति. Add (20). 35, 13. Write देवऽगोपा. 42. Dele 7. एव. 59, 1. अवंसा Write 2. अवंसा 60, 10. Add हि, 65, 1. Write सूरं. 66, 18. Write आतुर्जी इत्याऽतुर्जी. 68, 4. Write सोमऽ, सुत्. 70, 7. Write सुऽवृक्तिम्. 71, 5. Write पेदेवं. 72, 4. Dele ऊर्ध्वम्. 73, 5. Write 5=72, 5. 86, 3. Write विवृक्षुं. 91, 5. Write निऽयुतः. 93, 3, Add इंद्राग्नी इति. 94, 8. Add नक्. 99, 6. विष्णो इति. Add (7). 103, 6. गोऽमायुः. Add (10). अजऽमायुः. Add (10). 104, 12 असंत्. Add (13). 15. यातुऽधान इति Add (16).

# *THE COMMENTARY OF SAYANA.*

---

अथ सप्तमं मंडलमारभ्यते । तस्मिन्मंडले षडनुवाकाः । प्रथमेऽनुवाके सप्तदश सूक्तानि । तत्राग्निं नर इति पंचविंशत्यृचं प्रथमं सूक्तम् । अत्रेयमनुक्रमणिका । अग्निं पंचाधिका विराजोऽष्टादशाद्या इति । सप्तमं मंडलं वसिष्ठोऽपश्यदित्युक्तत्वान्मंडलद्रष्टा वसिष्ठ ऋषिः । आदितो ऽष्टादश विराजस्त्र्येकादशकाः । शिष्टा अनादेशपरिभाषया त्रिष्टुभः । मंडलादिपरिभाषयाग्निर्देवता । विश्वजितीदं सूक्तमाज्यशस्त्रम् । सूत्रितं च । विश्वजितोऽग्निं नर इत्याज्यमिति । अत्रेश्चतुर्वीराख्ये चतूरात्रे चतुर्थेऽहनीदमेव सूक्तमाज्यशस्त्रम् । सूत्र्यते हि । अग्निं नर इति चतुर्थ इति । व्यूळ्हे दशरात्रे चतुर्थे ऽहनीदं सूक्तं जातवेदस्यनिविद्धानम् । सूत्रितं च । अग्निं नर इत्याग्निमारुतमिति । महाव्रतेऽपीदमाज्यशस्त्रम् । तथैव पंचमारण्यके सूत्र्यते । आज्यप्रउगे विश्वजित इति । अविवाक्ये ऽहनि प्रातरनुवाके त्वमग्ने वसूनित्यादीनामनुष्टुभां स्थाने आद्यास्तृचः प्रक्षेपणीयः । सूत्र्यते हि । दशमेऽहन्यनुष्टुभां स्थानेऽग्निं नरो दीधितिभिररण्योरिति तृचमाग्नेयं क्रताविति । आद्याः षडृचस्तस्मिन्नेवाहन्याग्निमारुते शस्त्रे स्तोत्रियानुरूपार्थाः । सूत्रितं च । अग्निं नरो दीधितिभिररण्योरिति स्तोत्रियानुरूपाविति । मंडलादिहोमेऽप्येषा । आधाने तृतीयायामिष्टौ प्रेद्ध इति स्विष्टकृतोऽनुवाक्या । सूत्रितं च । प्रेद्धो अग्न इमो अग्न इति संयाज्ये इति । एवमन्यत्रापि दीक्षणीयादिषु स्विष्टकृतोऽनुवाक्या । प्रायणीयेष्टौ सेदग्निरग्नींरित्यादिके द्वे स्विष्टकृतो याज्यानुवाक्ये । सूत्रितं च । सेदग्निरग्नीँरत्यस्त्वन्यानिति द्वे संयाज्ये इति । आधाने तृतीयायामिष्टाविमो अग्न इति स्विष्टकृतो याज्या । सूत्रितं च । इमो अग्न इति संयाज्ये इति । एवमन्यत्रापि दीक्षणीयादिष्वेषा सौविष्टकृती याज्या । प्रातरनुवाक आग्नेये क्रतौ त्रैष्टुभे छंदस्याश्विनशस्त्रे च त्वमग्ने सुहव इत्याद्याः पंचर्चः । सूत्रितं च । त्वमग्ने सुहवो रण्वसंदृगिति ॥

---

1.

१. नरो नेतार ऋत्विजः प्रशस्तं प्रकर्षेण स्तुत दूरेदृशं दूरे दृश्यमानं दूरे पश्यंतं वा गृहपतिं गृहाणां पालकं अथर्युं आगमनं सततवंतं वा अग्निमरण्योर्निर्मथितं जन-

च्युती हस्तप्रच्युत्या हस्तगत्या दीधितिभिरंगुलिभिः जनयंत । दीधितयो ऽंगुलयो भवंति धीयंते कर्मस्वरणी प्रत्यून एनं अग्निः समरणाज्जायत इति वा हस्तच्युती हस्तप्रच्युत्या जनयंत प्रशस्तं दूरेदर्शनं गृहपतिमतनवंतमिति ॥

२. योऽग्निरीमं गृहे इक्षाय्यः पूजनीयः हविर्भिः समर्धनीयो वा नित्योऽजस्रः आस बभूव तं सुप्रतिचक्षं सुप्रतिदर्शनमग्निं कुताश्चित् सर्वस्मादपि भयहेतोः अवसे रक्षणाय वसवो वासका ये वसिष्ठाः आस्ते गृहे न्यृण्वन् न्यदधुः ॥

३. यविष्ठ युवतम हे अग्ने प्रेद्धः प्रकर्षेण समिद्धस्त्वं अजस्रया सरणशीलया सूर्म्या ज्वालया नोऽस्मदर्थं पुरः पुरस्तादाहवनीयायतने दीदिहि दीप्यस्व । त्वां शश्वंतो बहवः वाजाः अन्नानि हवींषि उप यंति उपगच्छंति ॥

४. अग्निभ्यो लौकिकेभ्योऽग्निभ्यः वरमत्यंतं द्युमंतो दीप्तिमंतः सुवीरासः कल्याणपुत्रपौत्रयशः तेऽग्नयः प्र निः शोशुचंत प्रकर्षेण नितरां दीप्यंते । यत्र येष्वग्निषु सुजाताः सुजन्मानः नरः कर्मणां नेतारो यजमाना ऋत्विजो वा समासते सहासते ।

५. सहस्य अभिभवकुशल हे अग्ने सुवीरं शोभनपुत्रपौत्रोपेतं स्वपत्यं शोभनपौत्रोपेतं प्रशस्तं श्रेष्ठं रयिं धनं धिया स्तोत्रेण नो ऽस्मभ्यं दाः देहि । यं रयिं यावा अभिगंता शत्रुः यातुमावान् हिंसाया निर्गतः नलोपाभावश्छांदसः यद्वा हिंसायुक्तः परो वतिर्मत्वर्थीयः पूरकः न बाधते ॥

इति पंचमस्य प्रथमे त्रयोविंशो वर्गः ॥

(P. 4.) ६. सुदक्षं सुबलं यमग्निं हविष्मती हविषा युक्ता घृताची घृतमंचतीति घृताची जुहूः युवतिः अग्निना नित्ययुक्ता दोषा वस्तोः रात्रावहनि च उपैति उपगच्छति तमेनं स्वा स्वकीया अरमतिर्दीप्तिः वसूयुः स्तोतॄणां धनमिच्छंती उपैति ॥

७. हे अग्ने विश्वा विश्वान् अरातीः शत्रून् तपोभिस्तेजोभिः अप दह । येभिर्यैस्तपोभिः जरूथं परुषशब्दकारिणं राक्षसं गृणातेरूथन्प्रत्यये सति जरूथशब्दनिष्पत्तिः अदहः दहसि । किंच अमीवां रोगं निस्वरं न्यक्तोपतापं यथा भवति तथा स्वृ शब्दोपतापयोरिति धातुः प्र चातयस्व प्रकर्षेण नाशय । चततिर्गत्यर्थो वेति भट्टभास्करमिश्रः ॥

८. वसिष्ठ श्रेष्ठ शुक्र शुभ्र दीदिवो दीप्त पावक शोधक हे अग्ने ते तव अनीकं तेजः यः आ इधते समेधयति तस्यैव नोऽस्माकं उतो अपि च एभिः स्तवथैः स्तोत्रैः इहास्मिन्यज्ञे स्याः भव ॥

९. हे अग्ने ते तव अनीकं तेजः पित्र्यासः पितृहिता आर्षेया वा मर्ताः मनुष्याः नरः कर्मणां नेतारो ये यजमानाः पुरुत्रा बहुषु देशेषु वि भेजिरे विभजंते आदधुरिति यावत् तेषामिव नोऽस्माकं उतो अपि एभिः स्तुतैः सह स्तोत्रैर्वा सुमना अनुग्राहकमनाः सन् इह यज्ञे स्याः भव ॥

१०. य मनुष्याः मे मदीयां प्रशस्तां प्रकृष्टां धियं कर्म स्तुतिं वा पनयंत स्तुवंति ब्रुवंति वा त इमे मयि स्निग्धाः नरो मनुष्याः वृत्रहत्येषु संग्रामेषु शूराः अदेवीरासुरीः विश्वाः सर्वाः मायाः अभि संतु अभिभवंतु ॥

इति पंचमस्य प्रथमे चतुर्विंशो वर्गः ॥

११. हे अग्ने शून शून्ये पुत्रादिरहिते गृहे मा नि षदाम न निवसाम । तृणानस्येत्वरां च गृहे मा निवसाम । दुर्य गृहेभ्यो हित हे अग्ने अशेषसो ऽपुत्रा तोकम् शेष इति पुत्रनामसु पाठात् अवीरता अवीरतया पुत्राभावेन त्वा त्वां परिचरन्तः प्रजावतीष्वेव दुर्यासु गृहेषु निवसाम ॥

१२. यं यज्ञं यज्ञाश्रय अश्वी अश्ववानग्निः नित्यमुपयाति तं प्रजावन्तं भृत्यादिभिः सहितं स्वपत्यं शोभनसंतानोपेतं स्वजन्मना औरसेन शेषसा पुत्रेण ववृधानं वर्धमानं क्षयं गृहं नोऽस्मभ्यं । हे अग्ने देहीति शेषः ॥

(P. 5.) १३. हे अग्ने नोऽस्मान् अजुष्टात् अप्रीतिविषयात् रक्षसो राक्षसात् पाहि रक्ष । किंच अररुषः अदातुः अघायोः पापमिच्छतः धूर्तेर्हिंसकात् पाहि । अपि च त्वा त्वया युजा सहायभूतेन पृतनायून् पृतनाकामान् अभि ष्याम अभिभवेयम ।

१४. स इत् स एवाग्निः आहवनीयादिरूपः सोऽयं अन्यानितरानन्यदीयानग्नीन् अभ्यस्तु अभिभवतु । यत्र यस्मिन्नग्नौ वाजी अन्नवान् बलवान्वा बाहुपाणिर्दृढहस्तः वीळु च्योत्नमिति बलनामसु पाठात् सहस्रपाथाः बहुक्षो बहुस्थानो वा बहुदक्षो वा तनयोऽस्मत्पुत्रः अक्षरा अक्षरेण क्षयरहितेन स्तोत्रेण समेति सम्यक् परिचरति । समर्थपुत्रवत एवाग्निरन्यदीयानग्नीनभिभवतीति भावः ॥

१५. यः समेद्धारं प्रबोधकं सेदग्निर्यो वनुष्यतो हिंसकात् वनुष्यतिर्हन्तिकर्मेति यास्कः उरुष्यात् अधिकादंहसः पापाच्च निदाति अत्यन्तं रक्षति यं च सुजातासः सुजन्मान एव वीराः स्तोतारः सुता वा परि चरन्ति स इत् स एवाग्निः ॥

इति पंचमस्य प्रथमे पंचविंशो वर्गः ॥

१६. यमग्निं ईशानः समृद्धं ऐश्वर्यमिच्छन् वा हविष्मान् यजमानः समिधे सम्यक् दीपयति यं चाध्वरेषु हिंसारहितेषु यज्ञेषु होता देवानामाह्वाता परि एति परिगच्छति सोऽयमग्निः पुरुत्रा बहुषु देशेषु बहुषु यज्ञेषु वा आहुत आहुतिभिरभिहुतः ॥

१७. हे अग्ने त्वे त्वयि ईशानासः धनानामीश्वराः सन्तः नित्यानि अग्निहोत्रादीनि उभा उभौ वहतू वहनहेतू स्तोत्रं शस्त्रं च कृण्वन्तः कुर्वन्तः मियेधे यज्ञे भूरि बहूनि आहवनानि हवींषि आ जुहुयाम आजुहवाम ॥

१८. हे अग्ने त्वं अजस्रः अनवरतः सन् इमा इमानि वीततमानि अतिशयेन कान्तानि हव्या हव्यानि देवतानि देवानां समूहं अभि वक्षि वह अच्छ गच्छ च । नोऽस्मदीयानि सुरभीणि शोभनानि ईं एतानि हव्यानि देवाः प्रति व्यन्तु प्रत्येकं कामयन्ताम् ॥

१९. हे अग्ने नोऽस्मानवीरते अपुत्रताये मा परा दाः मा त्यज । दुर्वाससे दुष्टवस्त्राय च नो मा परादाः । अमत्ये अमतये [illegible] नोऽस्मान्मा परादाः । क्षुधे अशनायायै नोऽस्मान्मा परादाः । रक्षसे बलिने चास्मान्मा परादाः । हे ऋतावः सत्यवन्नग्ने नोऽस्मान् दमे गृहे मा जुहूर्थाः मा हिंसीः हुर्छा कौटिल्ये इति धातुः वने चास्मान्मा जुहूर्थाः ॥

(P. 6.) २०. हे अग्ने मे मम मदर्थं ब्रह्माणि अन्नानि नु क्षिप्रं उच्छशाधि उत्कर्षेण शोधितानि कुरु । किंच हे देव द्योतमानाग्ने मघवद्भ्यः हविष्मद्भ्यः अस्मभ्यं सुषूदः

अन्नानि प्रेरय। ते त्वदीयायां राती दाने उभयासः स्तोत्रिणः शस्त्रिणश्च अथवा स्तुवंतो यजमानाश्च वयं आ स्याम अत्यर्थं भवेम। नोऽस्मान् यूयं त्वत्परिवाराश्च सर्वे स्वस्तिभिरविनाशिभिर्मंगलैः तथा च यास्कः स्वस्तीत्यविनाशनामास्तिरभिपूजितः स्वस्तीति सदा पात रक्षत॥

इति पंचमस्य प्रथमे षड्विंशो वर्गः॥

२१. सहसः सूनो सहसः सुत हे अग्ने सुहवः स्वाह्वानः रण्वसंदृक् रमणीयसंदर्शनस्त्वं सुदीती शोभनया दीप्त्या दिदीहि दीप्यस्व। किंच तनये नित्ये औरसे पुत्रे त्वे त्वं सचा सहायभूतःमा आ धक् माभिधाक्षीः। अपि च अस्मत् पृथग्भूतः अस्माकं वा षष्ठ्यर्थे पंचमी वीरः पुत्रः नर्यो नरहितो मा वि दासीत् मोपक्षीयताम्॥

२२. हे अग्ने सचा सहायभूतस्त्वं देवेद्धेषु ऋत्विग्भिः समिद्धेषु अग्निषु दुर्भृतये कृच्छ्रभरणाय नोऽस्मान्मा प्र वोचः न ब्रूहि। त्वत्सहायभूता अग्नयो यथा मामकृच्छ्रेण बिभृयुस्तथा ब्रूहीत्यर्थः। किंच सहसः सूनो हे बलस्य पुत्राग्ने देवस्य द्योतमानस्य ते तव दुर्मतयो निग्रहबुद्धयः भृमाचित् भ्रमादपि अत्र संप्रसारणं छांदसं प्रमादादपीत्यर्थः। अस्मान्मा नशंत मा व्याप्नुवंतु। नशदिति व्याप्तिकर्मसु पाठात्॥

२३. स्वनीक सुतेजस्क हे अग्ने अमर्त्ये अमनुष्ये देवतात्मनि त्वयि हव्यं हविः यः आजुहोति स मर्तो मनुष्यो रेवान् धनवान्भवति। यं मर्त्यं सूरिः प्राज्ञः अर्थी धनादिकामः पृच्छमानः असावुदारः क्वास्त इति पृच्छन् एति अभिगच्छति स एव मनुष्यो देवता देवताभ्यः वसुवनिं धनपोषं दधाति धारयति। यद्वा स देवताग्निर्वसुवनिं यजमानं दधाति धारयति यमग्निं सूरिः स्तोता अर्थी प्रयोजनवान् पृच्छमानः कोऽसावग्निरिति पृच्छमान एति॥

२४. हे अग्ने नोऽस्मदीयस्य महो महतः सुवितस्य कल्याणस्य कर्मणः विद्वान् अस्मदीयं कल्याणं कर्म जानान्नित्यर्थः त्वं सूरिभ्यः स्तोतृभ्योऽस्मभ्यं बृहंतं महांतं रयिं धनं आ वह। रयिमेव विशिनष्टि। हे सहसावन् बलवन्नग्ने येन धनेन वयं स्तोतारः अविक्षितासः अविक्षीणाः आयुषा पूर्णायुषः सुवीराः कल्याणपुत्रपौत्राश्च संतः मदेम हृष्येम॥

(P. 7.) २५. इयमृक् प्रागेव व्याख्याता (२०.)॥

इति पंचमस्य प्रथमे सप्तविंशो वर्गः॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये

पंचमाष्टके प्रथमोऽध्यायः समाप्तः॥

2.

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरम् ॥

जुषस्व न इत्येकादशर्चं द्वितीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभम् । आप्रीशब्दोक्तत्वा-दिदं तनूनपाद्रहितम् । समिद्धाद्या अग्निविशेषाः प्रत्यृचं देवता उक्ताः । तथा चानु-क्रम्यते । जुषस्वैकादशाप्रीमिति । सौविष्टाविक्रमाप्रीसूक्तम् । सूत्रितं च । जुषस्व नः समिधमिति वसिष्ठानामिति । पत्नीसंयाजे त्वाष्ट्रयागस्य याज्या त्वाष्ट्रे पशावपि पुरोडाशस्यानुवाक्येयमिति पूर्वमुक्तम् ॥

१. हे अग्ने नोऽस्माकं समिधं अद्य जुषस्व सेवस्व । यजतं यजनीयं प्रशस्तं धूमं कृण्वन् प्रेरयन् बृहत् अत्यंतं शोच दीप्यस्व च । किंच दिव्यं अंतरिक्षभवं सानु समुच्छ्रितं स्तूपैः — — रश्मिभिः उप स्पृश । अपि च सूर्यस्य रश्मिभिस्तेजोभिः संततनः संगच्छस्व ॥

२. ये देवाः सुक्रतवः सुप्रज्ञाः सुकर्माणो वा शुचयः दीप्तिमंतः धियंधाः कर्मणां धारयितारः उभयानि सौमिकानि च हव्या हव्यानि स्वदंति स्वदयंति भक्षयंति तेषामेषां मध्ये यज्ञैर्हविर्भिः स्तोत्रैर्वा यजतस्य यजनीयस्य नराशंसस्य नरैः प्रशंसनीयस्याग्निविशेषस्य महिमानं महत्त्वं उप स्तोषाम वयमुपस्तुमः । तथा च यास्कः । नरा आसीनाः शंसंति अग्निरिति शाकपूणिर्नरैः प्रशस्यो भवति । तस्यैषा भवति । नराशंसस्य महिमानमेषामुप स्तोषाम यजतस्य यज्ञैर्ये सुकर्माणः शुचयो धियं धारयितारः स्वदयंतु देवा उभयानि हवींषि सोमं चेतराणि चेति ॥

३. हे अध्वर्यवः वो यूयं ईळेन्यं स्तुत्यं असुरं बलवंतं सुदक्षं सुप्रज्ञं रोदसी रोदस्योः अंतर्मध्ये दूतं देवानां हविर्वहनार्थं चरंतं सत्यवाचं मनुष्वत् मनुष्यवत् मनुना समिद्धं यथेदानीं मनुष्याः समिंधते तथा पूर्वं मनुना प्रजापतिना समिद्धं अग्निं अध्वराय यज्ञाय सदमित्सदैव सं महेम सं पूजयत । मध्यमपुरुषस्य व्यत्ययेनोत्तमपुरुषत्वम् ॥

(P. 8.) ४. सपर्यवः परिचरणमिच्छंतः अभिज्ञु अभिगतजानुकं भरमाणाः पादौ भरंतः बर्हिः नमसा हविषा सहाग्नौ प्र वृंजते प्रभरंति । तदेव विशदयति । हे अध्वर्यवः घृतपृष्ठं घृतसंसिक्तपृष्ठं पृषद्वत् स्थूलबिंदुभिर्युक्तं बर्हिः हविषा सह आजुह्वानाः मर्जयध्वं अग्निं परिचरत ॥

५. स्वाध्यः सुकर्माणः देवयंतः देवकामा यजमानाः रथयू रथकामाश्च जसि पूर्वसवर्णो ह्रस्वश्च देवताता देवतातौ यज्ञे दुरः यज्ञगृहद्वाराणि वि अशिश्रयुः आश्रितवंतः । किंच समनेषु यज्ञेषु पूर्वी प्राचीने प्रागग्रे जुहूपभृतौ शिशुं न वत्समिव मातरौ गावौ रिहाणे अग्निं लिहाने अग्रुवो न यथा नद्यः क्षेत्राण्युदकेन तद्वत् समंजन् अध्वर्यव आज्येन समंजंति ॥

इति पंचमस्य द्वितीये प्रथमो वर्गः ॥

६. उत अपि च योषणे युवत्यौ स्त्रीरूपे वा बर्हिषदा बर्हिषि सीदंत्यौ पुरुहूते बहुभिः स्तुते मघोनी धनवत्यौ यज्ञिये यज्ञार्हे उषासानक्ता अहोरात्रे सुदुघेव धेनुः कामदुग्धेनुरिव नोऽस्मान् सुविताय कल्याणाय आ श्रयेताम् ॥

७. हे दैव्यौ होतारौ विप्रा मेधाविनौ जातवेदसा जातधनौ मानुषेषु मनुष्यैः क्रियमाणेषु यज्ञेषु कारू कर्मणां कर्तारौ वां युवां यजध्यै यष्टुं मन्ये स्तौमि । किंच हवेषु हवनेषु स्तोत्रेषु सत्सु नोऽस्माकं अध्वरमकुटिलं यज्ञं ऊर्ध्वं देवाभिमुखं कृतं कुरुतं च। अपि च ता तौ युवां देवेषु विद्यमानानि वार्याणि धनानि वनथः संभजथः तान्यस्मभ्यं संप्रयच्छथ इत्यर्थः ॥

८. एतदादि ऋक्चतुष्टयं द्वितीयाष्टमाध्याये यद्यपि व्याख्यातं तथापि व्यवधानात्संक्षेपतोऽत्रापि व्याख्यायते । भारती भरतस्यादित्यस्य पत्नी भारतीभिः सजोषाः सहिता इळा मनुष्येभिः मनुष्यलोकभवैर्देवैः सार्धं अग्निः आगच्छतु । सरस्वती सारस्वतेभिः सारस्वतैर्मध्यमस्थानैर्देवैः सार्धं अर्वाक् अस्मदभिमुखमागच्छतु । आगत्य तिस्रो देवीर्देव्यः प्रथमार्थे द्वितीया बर्हिरिदं आसदंतु ॥

(P. 9.) ९. देव द्योतमान हे त्वष्टः रराणो रममाणस्त्वं नोऽस्माकं तुरीपं त्वरितमाप्नुवत् पोषयित्नु पोषकरं तद्रेतो वि स्यस्व विशेषेणावसानं प्रापय विमोचयेत्यर्थः । यतो रेतसः कर्मण्यः कर्मसु साधुः सुदक्षः सुबलः युक्तग्रावा सोमसुत् देवकामः वीरः पुत्रो जायते ॥

१० हे वनस्पते देवान् उपावसृज । अथ परोक्षस्तुतिः । अग्निर्वनस्पतिः शमिता शामित्ररूपः सन् हविः सूदयाति प्रेरयतु । सेत् स एव वनस्पतिर्होता देवानामाह्वाता सत्यतरो ऽपि सन् यजाति यजतु । देवानां जनिमानि जनान् यथा स्वयं वेद तथा ॥

११. हे अग्ने समिधानः अर्वागस्मदभिमुखस्त्वं इंद्रेण तुरेभिस्त्वरितैर्देवैश्च सरथं समानरथं यथा भवति तथा आ याहि आगच्छ नो ऽस्मान् बर्हिः अध्यास्तां अदितिश्च सुपुत्रा कल्याणपुत्रा । स्वाहा देवाश्च सर्वे अमृताः संतो मादयंतामिति ॥

इति पंचमस्य द्वितीये द्वितीयो वर्गः ॥

---

## 3.

अग्निं वो देवमिति दशर्चं तृतीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाग्नेयम् । अत्रेयमनुक्रमणिका । अग्निं वो दशेति । अग्निं वो देवमित्येतदादीनि दश सूक्तानि तृतीयचतुर्थवर्जितानि प्रातरनुवाक आग्नेये क्रतौ त्रैष्टुभे छंदस्याश्विनशस्त्रे च विनियुक्तानि । सूत्रितं च । अग्निं वो देवमिति दशानां तृतीयचतुर्थे उद्धरेदिति । व्यूळ्हे दशरात्रेऽष्टमेऽहनीदं सूक्तमाज्यशस्त्रम् । सूत्र्यते हि । द्वितीयस्याग्निं वो देवमित्याज्यमिति ॥

१. हे देवाः वो यूयं देवं द्योतमानं अग्निभिरन्यैरग्निभिः सजोषाः सजोषसं सहितं द्वितीयार्थे प्रथमा यजिष्ठं यष्टृतमं अग्निं अध्वरे कौटिल्यरहिते यज्ञे दूतं कृणुध्वं कुरुत । योऽग्निर्देवोऽपि सन् मर्त्येषु निध्रुविः नितरां ध्रुवस्तिष्ठति ऋतावा यज्ञवान् सत्यवान्वा तपुर्मूर्धा तापकतेजाः घृतान्नः पावकः शोधकश्च भवति ॥

२. यवसे घासे आविष्यन् भक्षयन् प्रोथत् शब्दं कुर्वन् संचरन्वा अश्वो न अश्व इव महो महतः संवरणान्निरोधात् दावरूपोऽग्निः यदा व्यस्थात् सततेषु वृक्षेषु वितिष्ठते

जात तदा अस्य अग्नेः शोचिरर्चिः अनु वातो वाति । अथ प्रत्यक्षस्तुतिः । अध अनंतरं हे अग्ने ते तव व्रजनं वर्त्म कृष्णमस्ति भवति । स्मेति पूरणः ॥

(P. 10.) ३. हे अग्ने नवजातस्य नवप्रादुर्भावस्य वृष्णो वर्षितुः यस्य ते तव अजराः जरारहिता ज्वालाः इधानाः उच्चरंति उद्गच्छंति अस्य अरुषः आरोचमानः धूमो द्यामच्छ दिवमभि एति गच्छति । हे अग्ने त्वं दूतः सन् देवान् समीयसे हि संप्राप्नोषि च ॥

४. हे अग्ने यस्य दावरूपस्य ते तव पाजस्तेजः पृथिव्यां भूम्यां तृषु क्षिप्रं व्यश्रेत् विश्रयति यद्यदा अन्नानि काष्ठादीनि जंभैर्दंतैः ज्वालाभिरित्यर्थः समवृक्त वृंक्ते खादति तथा सेनेव सृष्टा उत्सृष्टा ते तव प्रसितिर्ज्वाला एति गच्छति । दस्म हे दर्शनीयाग्ने त्वं यवं न यवमिव जुह्वा ज्वालया विवेक्षि काष्ठादीनि भक्षयसि व्याप्नोषि वा ॥

५. यविष्ठं युवतमं अतिथिवत्पूज्यं तमित्तमेवाग्निं दोषा दोषायां रात्रौ उषसि वासरेऽपि तमेव अस्य अग्नेर्योनौ स्थाने आहवनीयायेति धिष्ण्ये वा निशिशानाः दीपयंतो नरो मनुष्याः अत्यं न सततगमनयुक्तं वोढारमश्वमिव मर्जयंत परिचरंति । आहुतस्य च वृष्णः कामानां वर्षितुरग्नेस्तस्य शोचिर्ज्वाला दीदाय दीप्यते ॥

इति पंचमस्य द्वितीये तृतीयो वर्गः ॥

६. स्वनीक हे सुतेजस्काग्ने त्वं यद्यदा रुक्मो न सूर्य इव सुवर्णमिव वा उपाके अंतिके वि रोचसे विशेषेण दीप्यसे तदा ते तव प्रतीकं रूपमंगं वा सुसंदृक् सुसंदर्शनं भवति । किंच ते तव शुष्मो दिवोऽतरिक्षात्तन्यतुर्न अशनिरिव एति निर्गच्छति । चित्रो दर्शनीयः सूरो न सूर्य इव भानुं स्वां दीप्तिं प्रति चक्षि प्रदर्शयासि ॥

७. हे अग्ने अग्नये अग्रस्य नेत्रे वः तुभ्यं स्वाहा स्वाहुतं हविः । किंच यथा वयं इळाभिः गोभिः गोविकारैः क्षीरादिभिः घृतवद्भिः घृतसहितैः हव्यैः पुरोडाशादिभिश्च दाशेम परिचरेम तथा त्वमपि तेभिः प्रसिद्धैः अमितैः अपरिमितैः महोभिस्तेजोभिः शतमपरिमिताभिः आयसीभिर्हिरण्मयीभिः रुक्ममय इति हिरण्यनामसु पाठात् पूर्भिर्नगरीभिरिव नोऽस्मान् नि पाहि नितरां रक्ष ॥

(P. 11.) ८. सहसः सूनो हे बलस्य पुत्र जातवेदोऽग्ने दाशुषे दाशुषः ते तव या वा याश्च ज्वालाः संति अधृष्टाः रक्षोभिरप्रधृषिताः गिरो वा गिरश्च संति याभिर्गीर्भिः नृवतीः पुत्रवतीः प्रजाः उरुष्याः रक्ष ताभिरुभयीभिर्नोऽस्मान् स्मादिति प्रशस्तवचनः प्रशस्तान् सूरीन् हविषां प्रेरकान् जरितॄन् नि पाहि नितरां रक्ष ॥

९. यद्यदा शुचिरग्निः स्वया स्वकीयया तन्वा ततया कृपा कृपया दीप्त्या रोचमानः धूतेव स्वधितिः तीक्ष्णीकृता स्वधितिरिव निर्गात् काष्ठान्निर्गच्छति तदानीं देवयज्याय भवति । तदेव विशदयति । योऽग्निः उशेन्यः कमनीयः सुक्रतुः सुकर्मा पावकः शोधकश्च मात्रोररण्योः आ जनिष्ट आजायत स देवयज्याय भवतीति ॥

१०. हे अग्ने एता एतानि परिदृश्यमानानि सौभगा सौभगानि शोभनानि धनानि नोऽस्मभ्यं दिदीहि दीपय देहि वा । अपि अपि च क्रतुं कर्म यज्ञानां कर्तारं वा सुचेतसं शोभनप्रज्ञानयुक्तं सुप्रज्ञानं पुत्रं वा वतेम संभजेमहि । वतेः संभजनार्थस्य

वर्णांतरागमे सति रूपम्। विश्वा विश्वानि धनानि स्तोतृभ्य उद्गातृभ्यो गृणते शंसते च संतु। यूयं त्वत्परिवाराश्च सर्वे यूयं नोऽस्मान् स्वस्तिभिः क्षेमैः सदा सर्वदा पात रक्षत ॥

इति पंचमस्य द्वितीये चतुर्थो वर्गः ॥

---

4.

प्र वः शुक्रायेति दशर्चं चतुर्थं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाग्नेयम्। प्र व इत्यनुक्रांतम्। प्रातरनुवाकाश्विनशस्त्रयोर्दशसूक्तमध्ये द्वितीयं तेनोक्तः सूक्तविनियोगः। एकादशिन आग्नेये पशौ प्र वः शुक्रायेत्येषा वपाया याज्या। सूत्रितं च। प्र वः शुक्राय भानवे भरध्वं यथा विप्रस्य मनुषो हविर्भिरिति ॥

१. हे हविषां वोढारः वो यूयं शुक्राय शुभ्राय भानवे दीप्तायाग्नये सुपूतं सुशुद्धं हव्यं मतिं स्तुतिं च प्र भरध्वम्। यो ऽग्निः दैव्यानि मानुषाः मानुषाणि च विश्वा विश्वानि जनूंषि जातानि अंतरंतरा विद्मना प्रज्ञानेन मार्गेण वा जिगाति गच्छति देवान्मनुष्यांश्चांतरा हवींषि नेतुं वर्तत इत्यर्थः ॥

२. स चित्स एव गृत्सो मेधावी। तथा च यास्कः। गृत्स इति मेधाविनाम। अग्निस्तरुणस्तारको भवति। तदा यतो यदा मातुररण्याः यविष्ठो युवतमः सन् अजनिष्ट। योऽग्निः शुचिदन् दीप्तदंतः वना वनानि सं युवते आत्मना सं योजयति। किंच भूरि चित् भूरीण्यपि अन्ना स्वीयान्यन्नानि सद्य इत्सद्य एव समत्ति सम्यग्भक्षयति ॥

(P. 12.) ३. अस्य देवस्याग्नेः अनीके मुख्ये संसदि स्थाने श्येतं श्वतं शुभ्रं यमग्निं मर्तासो मनुष्याः जगृभ्रे परिगृह्णंति यश्चाग्निः पौरुषेयीं पुरुषैः क्रियमाणां गृभं गृभीतं न्युवोच अत्र वचिः सेवार्थे वर्तते निषेवत इत्यर्थः सोऽग्निरायवे मनुष्यार्थं द्रुह्यव आयव इति मनुष्यनामसु पाठात् दुरोकं सपत्नैर्दुःसेवं यथा भवति तथा शुशोच दीप्यते ॥

४. कविः क्रांतदृक् प्रचेताः प्रकाशकः अमृतो मरणधर्मरहितः अयमग्निः अकविषु अक्रांतदृक्षु मर्तेषु मरणधर्मकेषु नि धायि निहितः। अथ प्रत्यक्षस्तुतिः। सहस्वो बलवन्नग्ने त्वे यस्मिन् त्वयि सदा वय सुमनसः सुमतयः स्याम स त्वमत्रास्मिँल्लोके नोऽस्मान्मा जुहुरः मा हिंसीः ॥

५ योऽग्निः देवकृतं देवैः कल्पितं योनिं स्थानं आ ससाद अध्यास्ते। किमर्थं देवाः स्थानं कल्पयंत्यग्नेरित्यत आह। हि यस्मात्कारणात् अग्निः क्रत्वा प्रज्ञया अमृतान्देवान् अतारीत्। विश्वधायसं विश्वस्य धारकं ओषधीरोषधयः वनिनश्च वृक्षाश्च गर्भं गर्भे संतं तं बिभ्रति भूमिश्च बिभर्ति। श्रुतमेव बिभर्तीति पदं बहुवचनांततया विपरिणते सत् ओषधीभिर्वनिभिश्च संबध्यते ॥

इति पंचमस्य द्वितीये पंचमो वर्गः ॥

६. अमृतस्य अन्नमुदकं वा द्वितीयार्थे षष्ठी भूरेरधिक दातोर्दातुमग्निः ईशे ईष्टे हि सुवीर्यस्य शोभनवीर्ययुक्तं रायो धनं दातुं ईशे ईष्टे। अथ प्रत्यक्षस्तुतिः।

सहसावन् हे बलवन्नग्ने वयं वसिष्ठाः अवीराः पुत्रादिरहिताः संतो मा परि षदाम मा पर्युपविशाम । अप्सवो रूपरहिताश्च संतो मा परिषदाम । तथा च यास्कः । प्सु इति रूपनामेति । अदुवः परिचरणहीनाश्च मा परिषदाम ॥

७. अरणस्य अनृणस्य रेक्णो धनं परिषद्यं पर्याप्तं भवति हि अतः नित्यस्य अपुनर्देयस्य रायो धनस्य पतयः स्याम । यद्वा अरणस्य अरममाणस्य रेक्णो धनं परिषद्यं परिहर्तव्यं भवति अतो नित्यस्य औरसस्य रायः पुत्राख्यस्य धनस्य पतयः स्याम । हे अग्ने अन्यजातं अनौरसं शेषोऽपत्यं नास्ति न भवति । अचेतानस्य अविदुषः पथो मार्गान् पुत्रोत्पादनप्रमुखान्मार्गान् मा वि दुक्षः मा विदूदुषः । दुष वैकृत्ये इति धातुः । तथा च यास्कः । परिहर्तव्यं हि नोपसर्तव्यमरणस्य रेक्णोऽरणोऽपार्णो भवति रेक्ण इति धननाम रिच्यते प्रयतः । नित्यस्य रायः पतयः स्याम । न शेषो अग्ने अन्यजातमस्ति । शेष इत्यपत्यनाम शिष्यते प्रयतोऽचेतयमानस्य तत्प्रमत्तस्य भवति मा नः पथो विदूदुष इति ॥

( P. 13. ) ८. पूर्वस्यामृच्युक्त एवार्थोऽत्र प्रपंच्यते । अरणोऽरममाणः अन्योदर्यः सुशेवः सुखतमः सन् ग्रभाय पुत्रत्वेन ग्रहणाय मनसा मंतवा उ मनसापि मंतव्यो न भवति हि अध चित् अपि च सोऽन्योदर्यः ओक इत संस्थानमेव पुनरेति प्राप्नोति । अतो वाजी अन्नवान् अभीषाट् शत्रूणामभिभविता नव्यो नवजातः पुत्रो नोऽस्मान् आ एतु आगच्छतु ॥

९. हे अग्ने त्वं वनुष्यतो हिंसकान् नोऽस्मान्नि पाहि । त्वा त्वां ध्वस्मन्वत ध्वस्तदोषं पाथोऽन्नं हविः समश्येतु सम्यक् प्राप्नोतु । अपि चास्मान् स्पृहयाय्यः स्पृहणीयः सहस्री सहस्रसंख्याको रयिरभ्येतु ॥

१०. एषा ऋग्व्याख्याता ( ३.१०. ) ॥

इति पंचमस्य द्वितीये षष्ठो वर्गः ॥

---

5.

प्राग्नये तवस इति नवर्चं पंचमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वैश्वानराग्निदेवताकम् । तथा चानुक्रांतम् । प्राग्नये नव वैश्वानरीयं त्विति । विनियोगो लैंगिकः ॥

१. हे स्तोतारः तवसे प्रवृद्धाय दिवोऽन्तरिक्षस्य पृथिव्याश्च अरतये गंत्रे अग्नये वैश्वानरसंज्ञकाय अग्नये गिरं स्तुतिं प्र भरध्वम् । यो वैश्वानरो विश्वनरहितोऽग्निः विश्वेषां सर्वेषाममृतानां देवानां उपस्थे उपस्थाने यज्ञे जागृवद्भिः प्रबुद्धैर्देवैः सहितः सन् ववृधे स्तुतिभिर्हविर्भिश्च वर्धते ॥

२. सिंधूनां नदीनां नेता स्तियानां अपाम् । स्तिया आपो भवंति स्त्यायनादिति यास्कवचनात् । वृषभो वर्षिता पृष्टोऽर्चितस्तेजसा संपृक्तो वा योऽग्निर्दिव्यंतरिक्षे पृथिव्यां च धायि न्यधायि स वैश्वानरो विश्वनरहितोऽग्निः वरेण श्रेष्ठेन हविषा तेजसा वावृधानो वर्धमानः सन् मानुषीर्विशोऽभि मानुषीः प्रजाः प्रति वि भाति ।

(P. 14.) ३. हे वैश्वानर विश्वनरहिताग्ने त्वत्त्वत्तो भिया भीत्या असिक्नीः असिक्नवर्णा राजस्यः । प्रथमार्थे द्वितीया । विशः प्रजाः असमनाः परस्परमसमेताः भोजनानि धनानि जहतीः त्यजंत्यः आयन् आगच्छन् । कदेत्यत आह । यद्यदा पूरवे राज्ञे शोशुचानो दीप्यमानः पुरस्तस्य शत्रूणां पुरो दरयन् दारयन् अदीदेः अज्वलः । तथा च निगमः । अंहो राजन्वरिवः पूरवे करिति ॥

४. हे वैश्वानर विश्वेषां नराणां नेतरग्ने । तथा च यास्कः । वैश्वानरः कस्माद्विश्वान्नरान्नयति विश्व एनं नरा नयंतीति वेति । तव व्रतं त्वत्प्रीतिकरं कर्म त्रिधातु अंतरिक्षं पृथिवी च उत अपि च द्यौरिति त्रयो लोकाः सचंत सेवंते । त्रैलोक्यवर्तिन्यः प्रजास्त्वदर्थं कर्म कुर्वंतीत्यर्थः । अपि च त्वं अजस्रेण शोचिषा प्रकाशेन शोशुचानो दीप्यमानो भासा दीप्त्या रोदसी द्यावापृथिव्यौ च आ ततंथ विस्तारयसि ॥

५. हे अग्ने कृष्टीनां प्रजानां क्षितयः कृष्टय इति मनुष्यनामसु पाठात् पतिं स्वामिनं रयीणां धनानां रथ्यं नेतारं उषसां अह्नां महांतं केतुं प्रज्ञापकं वैश्वानरं विश्वनरहितं त्वां हरितो हरणादश्वाः वावशानाः कामयमानाः सचंते सेवंते । तथा गिरो नृणां स्तुतिरूपा वाचः धुनयः पापं धुन्वानाः घृताचीः घृतमंचंत्यः हविषा सहिता इत्यर्थः सचंते ॥

इति पंचमस्य द्वितीये सप्तमो वर्गः ॥

६. हे मित्रमहः मित्राणां पूजयितरग्ने त्वे त्वयि वसवो वासका देवा असुर्यं बलं न्यृण्वन् न्यगमयन् । ते क्रतुं त्वत्प्रीतिकरं कर्म जुषंत सेवंते हि । किंच त्वं आर्याय कर्मवते जनाय उरु ज्योतिः अधिकं तेजो जनयन् दस्यून् कर्महीनान् ओकसः स्थानात् आजः निरगमयः ॥

७. हे वैश्वानर स प्रसिद्धः त्वं परमे दूरस्थे व्योमन्नंतरिक्षे जायमानः सूर्यरूपेण प्रादुर्भवन् वायुर्न यथा वायुः द्विदेवत्यग्रहेषु प्रथमं सोमं पिबति तथा पाथः सोमं सद्यः परि पासि परिपिबसि । यद्वा वायुरिव पाथो जलं परि पासि परिपिबसि शोषयसीत्यर्थः । किंच हे जातवेदः जातधनाग्ने त्वं भुवना भुवनानि उदकानि । भूतं भुवनमित्युदकनामसु पाठात् । जनयन् अपत्याय अपत्यवत्पालनीयाय यजमानाय दशस्यन् कामान्दत्वा यच्छन् अभि क्रन् वैद्युतात्मना अभिक्रंदसि अभिगर्जसि वा ॥

(P. 15.) ८. हे जातवेदः जातप्रज्ञ वैश्वानर विश्वनरहिताग्ने तामिषं एषणीयां वृष्टिं द्युमतीं दीप्तिमतीं अस्मे अस्मभ्यं आ ईरयस्व प्रेरयस्व । वृष्ट्या त्रैलोक्यं द्योतते हि । यद्वा द्युमतीं नामिषमन्नमिषमेरयस्व । तथा च श्रूयते । तस्माद्यस्यैवेह भूयिष्ठमन्नं भवति स एव भूयिष्ठं लोके विराजतीति । अथवा इषमेषणीयां तां द्युमतीं भास्वतीं दीप्तिमेरयस्व । यया इषा राधो धनं पिन्वसि पालयसि । अपि च हे विश्ववार विश्वैर्वरणीयाग्ने पृथु विस्तीर्णं श्रवो यशः दाशुषे मर्त्याय यजमानाय पिन्वसि ॥

९. हे अग्ने मघवद्भ्यो धनवद्भ्यो हविष्मद्भ्य इत्यर्थः । नोऽस्मभ्यं पुरुक्षुं बह्वन्नं बहुयशस्कं वा तं प्रसिद्धं रयिं श्रुत्यं श्रवणीयं वाजं बलं च नि धुवस्व नितरां मिश्रयस्व । किंच हे वैश्वानर विश्वनरहिताग्ने त्वं रुद्रेभिः रुद्रैर्वसुभिश्च देवैः सजोषाः सहितश्च सन् नोऽस्मभ्यं महि महत् शर्म सुखं यच्छ प्रयच्छ ॥

इति पंचमस्य द्वितीयेऽष्टमो वर्गः ॥

## 6.

प्र सम्राज इति सप्तर्चं षष्ठं सूक्तं वसिष्ठस्यार्षम्। अनुक्रम्यते च। प्र सम्राजः सप्त वैश्वानरीयं त्वित्युक्तत्वादस्यापि वैश्वानरोऽग्निर्देवता। विनियोगो लैंगिकः ॥

१. दारुं पुरां भेत्तारं वंदे वंदमानः सन् सम्राजः सर्वस्य भुवनस्येश्वरस्य असुरस्य बलवतः पुंसो वीरस्य पौंस्यमिति वीर्यमुच्यते। तथा च यास्कः। पुमान् पुंसमना भवति पुंसतेर्वेति। कृष्टीनां जनानां अनुमाद्यस्य स्तुत्यस्य तवसो बलवतः इंद्रस्येव तस्य वैश्वानरस्य प्रशस्तिं स्तुतिं कृतानि कर्माणि च प्र विवक्मि प्रब्रवीमि ॥

२. कविं प्राज्ञं केतुं विश्वस्य प्रज्ञापकं धासिं अंतर्भर्तारं अत्तुः स्तोतुर्वा भानुं भासकं शं सुखकरं रोदस्योः द्यावापृथिव्योः राज्यं राजानं वैश्वानरमग्निं हिन्वंति महीयाः प्रीणयंति प्रेरयंति वा देवाः। अहं च पुरंदरस्य पुरां दारयितुरग्नेः पूर्व्या पूर्व्याणि पुरातनानि महानि महांति व्रतानि कर्माणि गीर्भिराविवासे परिचरामि ॥

३. अक्रतून् अयज्ञान् ग्रथिनो जल्पकान् मृध्रवाचो हिंसितवचस्कान् पणीन् पणिनामकान्वार्धुषिकान् अश्रद्धान् यज्ञादिषु श्रद्धारहितान् अवृधान् स्तुतिभिरग्निमवर्धयतः अयज्ञान् यज्ञहीनान् तान्दस्यून् वृथा कालस्य नेतृन् अग्निः प्रप्र अत्यंतं नि विवाय नितरां गमयेत्। तदेवाह ॥

(P. 16.) ४. नृतमो नेतृतमो योऽग्निः अपाचीने अप्रकाशमाने तमसि निमग्नाः प्रजाः मदंतीः स्तुवतीः शचीभिस्ताभ्यो दत्ताभिः प्रज्ञाभिः प्राचीः ऋजुगामिनीश्चकार। यद्वा नेतृतमो योऽग्निः अपाचीने तमसि निशायां मदंतीर्माद्यंतीरुषसः शचीभिः प्रज्ञाभिः प्राचीश्चकारेत्यर्थः। तं वस्वो धनस्येशानं अनानतमप्रह्वं पृतन्यून् युद्धकामांश्च दमयंतमग्निं गृणीषे स्तौमि ॥

५. योऽग्निर्देह्यो देहीरुपचिता आसुरीर्विद्याः वधस्नैः वधैरायुधैर्वा अनमयत् हीना अकरोत्। यश्च अर्यपत्नीः अर्यः सूर्यः पतिर्यासां ता अर्यपत्न्यः ता उषसश्चकार अकरोत्। स यह्वो महानग्निर्विशः प्रजाः सहोभिर्बलैः निरुध्य नहुषो राज्ञो बलिहृतः करप्रदाश्चक्रे ॥

६. विश्वे सर्वे जनासो जनाः शर्मन् शर्मणि सुखनिमित्तं यस्य वैश्वानरस्य सुमतिं भिक्षमाणाः प्रार्थमानाः एवैः कर्मभिर्हविर्भिर्वा उपतस्थुः यमेवोपतिष्ठंते स वैश्वानरो विश्वनरहितोऽग्निः सूर्यः सन् पित्रोर्मातापित्रोः रोदस्योः द्यावापृथिव्योर्वरमुत्कृष्टं उपस्थं मध्यमंतरिक्षं आ ससाद आगच्छत् ॥

७. वैश्वानरो विश्वनरहितोऽग्निर्देवो द्योतमानः बुध्न्या बुध्न्यानि अंतरिक्षाणि। बुध्नमंतरिक्षम। तथा च यास्कः। बुध्नमंतरिक्षं बद्धा अस्मिन्धृता आप इति वेति। वसूनि आच्छादकानि तमांसि। वस आच्छादने इति धातुः। सूर्यस्य उदिता उदितौ उदये सति आददे समुद्रादंतरिक्षात्। सगरं समुद्र इत्यंतरिक्षनामसु पाठात्। अवरात्पृथिव्याः

तमांसि आददे । समुद्रात्परस्माद्दिवोऽपि तमांस्याददे । तदेव दर्शयति । अग्निर्दिवस्तमांस्याददे पृथिव्याश्च तमांस्याददे ॥

इति पंचमस्य द्वितीये नवमो वर्गः ॥

---

## 7.

प्र वो देवमिति सप्तर्चं सप्तमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाग्नेयम् । प्र वो देवमित्यनुक्रांतम् । प्रातरनुवाकाश्विनशस्त्रयोर्दशसूक्त उक्तो विनियोगः ॥

१. हे अग्ने वस्त्वां देवं द्योतमानादिगुणयुक्तं सहसानं राक्षसानभिभवंतं बलमाचरंतं वा अग्निमग्रस्य नेतारं अश्वं न अश्वमिव वाजिनं वेगवंतं बलवंतं वा नमोभिः स्तुतिभिर्हविर्भिर्वा प्र हिषे चित् प्रहिणोम्येव । किंच हे अग्ने त्वं विद्वान् जानन् नोऽस्माकं अध्वरस्य यज्ञस्य दूतो भव । अथ परोक्षस्तुतिः। त्मना आत्मना स्वयमेव देवेषु मितद्रुः दग्धद्रुमोऽग्निरिव विविदे प्रज्ञायते ॥

(P. 17.) २. हे अग्ने त्वं मंद्रो मदयिता स्तुत्यो वा देवानां सख्यं देवैः सह सख्यमित्यर्थः । जुषाणः सेवमानः पृथिव्याः सानु समुच्छ्रितं तृणगुल्मादिकं शुष्मैः शोषकैर्दाहकैस्तेजोभिः नदयन् शब्दायमानः । दह्यमानं हि शब्दायते । जंभेभिर्दंष्ट्राभिः ज्वालाभिरित्यर्थः । विश्वं विश्वानि वनानि उशधक् कामयमानो दहन् स्वाः पथ्याः अनु स्वैर्मार्गैरित्यर्थः । आ आयाहि । आकारस्य पुनर्वचनमादरार्थम् ॥

३. अयं यज्ञः प्राचीनः सम्यगनुष्ठीयत इत्यर्थः । यद्वा यज्ञो यष्टा होता प्राचीनः। यद्वा यज्ञो हविः प्राचीनः प्राचीनं प्राङ्मुखमासन्नम् । बर्हिर्हि बर्हिश्च सुधितं सुनिहितम् । ईळितः स्तुतोऽग्निः प्रीणीते तृप्तश्च भवति । होता न होता च । नेति चार्थे । विश्ववारे विश्वैर्वरणीये मातरा द्यावापृथिव्याविडायां आहुवानो भवति । कदेत्यत आह । यतो यदा यविष्ठ हे युवतमाग्ने त्वं सुशेवः सुसुखः जज्ञिषे जायसे ॥

४. विचेतसो विविक्तप्रज्ञाः मानुषासो मनुष्याः अध्वरे यज्ञे रथिरं रथिनं नेतारमग्निं सद्यो जनंत जनयंति । य एषां हविर्वहति सोऽयमग्निर्विश्पतिः विशां पतिः विश्वस्य पतिर्वा मंद्रो मदयिता मधुवचाः मादयितृवचस्कः ऋतावा यज्ञवान् विशां मनुष्याणां दुरोणे गृहे अधायि आहितः ॥

५. वृतो होतृत्वेन वह्निर्हविषां वोढा ब्रह्मा परिवृढः विधर्ता विश्वस्य धारकोऽग्निः आजगन्वान् द्युलोकादागत आगमनशीलो वा नृषदने होतुः स्थाने असादि उपविष्टः। यमग्निं द्यौश्च पृथिवी च उभे वव्रधाते वर्धयतः यं च विश्ववारं विश्वैर्वरणीयं होता मनुष्यः आयजाति ॥

६. एते मदीयाः पुरुषाः द्युम्नेभिरन्नैः विश्वं पोष्यवर्गं आतिरंत वर्धयंति । अथवा द्युम्नेभिर्यशोभिः विश्वं जगदातिरंत अभ्यगच्छन्नित्यर्थः । क इत्यत आह । ये नर्या मनुष्याः मंत्रं स्तोत्रं स्तुत्यं वा अरं पर्याप्तं अतक्षन् समस्कुर्वन् । वेति समुच्चये । ये च विशो जनाः श्रोषमाणाः । शृणोतेः सन्यङोरिति द्वित्वमिको झलिति सनः कित्त्वं च सर्वे विधयश्छंदसि विकल्प्यंत इति न भवतः । ज्ञाश्रुस्मृदृशां सन इत्यात्मनेपदं

च । अनिरंत वर्धयंति । मे मदीया ये वा ऋतस्याग्य सत्यमिममाग्निम । कर्माणि षष्ठी । मानुषाणामश्नीयादितिवत् । आ दीधयन् आदीपयन् ॥

(P. 18.) ७. सहसः सूनो बलस्य पुत्राग्ने वसिष्ठा वयं वसूनामीशानं त्वां अस्मदीयेभ्यः स्तोतृभ्यो मघवद्भ्यो हविष्मद्भ्यश्च इषमन्नं नु क्षिप्रं अद्य वा आनट प्रापयः । नशेर्व्याप्तिकर्मणोऽन्तर्णीतण्यर्थाल्लुङि छंदस्यपि दृश्यत इत्याडागमः । यूयं त्वत्परिचाराश्च सर्वे यूयं नोऽस्मान् सदा स्वस्तिभिः पातेत्येवमीमहे याचामहे ॥

इति पंचमस्य द्वितीये दशमो वर्गः ॥

---

## 8.

इंधे राजेति सप्तर्चमष्टमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाग्नेयम् । इंधे राजन्यनुक्रांतम् । प्रातरनुवाकाश्विनशस्त्रयोर्विनियोगः । आतिथ्यायां प्रशायमग्निरिति स्विष्टकृतो याज्या । सूत्रितं च । प्रशायमग्निर्भरतस्य शृण्व इति संयाज्ये इति ॥

१ राजा दीप्तः अर्यः स्वामी हविषां प्रेरको वा अग्निः नमोभिः स्तुतिभिः सह समिंधे समिध्यते । यस्याग्नेः प्रतीकं रूपं घृतेन आहुतं भवति । यं च नरोऽस्मदीयाः सबाधः संश्लिष्टाः संजातबाधा वा हव्येभिर्हव्यैः सार्धं ईळते स्तुवंति सोऽग्निरुषसामग्रे आ अशोचि आदीप्यते ॥

२. स्यः सोऽयं होता देवानामाह्वाता मंद्रो मदयिता यह्वो महानग्निः मनुषो मनुष्यस्य सुमहानवेदि सुमहत्त्वेन प्रज्ञायते । अपि च सोऽयं भाः दीप्तीः व्यक्तः विकरोति अंतरिक्षे । किंच सोऽयं कृष्णपविः कृष्णमार्गोऽग्निः पृथिव्यां सस्रजानः सृज्यमानः सन् ओषधीभिर्ववक्षे वर्धते ॥

३. हे अग्ने त्वं कया स्वधया हविषा नोऽस्माकं सुवृक्तिं स्तुतिं विवसः व्याप्नुषे आच्छादयसि वा । कामु कां च स्वधां शस्यमानः स्तूयमानः त्वं ऋणवः प्राप्नुयाः । हे सुदत्र शोभनदानाग्ने । तथा च यास्कः । सुदत्रः कल्याणदान इति । वयं कदा दुष्टरस्य शत्रुभिर्दुर्हिंसकस्य साधोः समीचीनस्य रायो धनस्य पतयः स्वामिनो भवेम वंतारः संभक्तारश्च कदा भवेम ॥

४. अयं प्रसिद्धोऽग्निर्भरतस्य यजमानस्य मम प्रप्र अत्यंतं शृण्वे प्रथितो भवति । कदेत्यत्राह । यद्यदा सूर्यो न सूर्य इव बृहद्भाः बृहद्भासमानो वि रोचते प्रकाशते । किंच योऽग्निः पृतनासु संग्रामेषु पूरुं पूरुनामकमसुरं अभि तस्थौ अभिबभूव सोऽयं द्युतानो दीप्यमानो दैव्योऽतिथिर्देवानामतिथिवत्पूज्यः सन् शुशोच जज्वाल ॥

(P. 19.) ५. हे अग्ने त्वे त्वयि आहवनानि हवींषि आहुतयो वा भूरि बहूनि असंचित् भवंत्येव । त्वं च विश्वेभिर्विश्वैरनीकैः तेजोभिः स्वाद्गभूतिभिः अग्निभिर्वा सह सुमनाः शुभो भव । हे अग्ने स्तुतः स्तोतुः । स्तौतीति स्तुत् । स्तोत्रं शृण्विषे शृणु । हे सुजात कल्याणप्रादुर्भावाग्ने गृणानः स्तूयमानस्त्वं स्वयं स्वयमेव तन्वं स्वां तनुं मम तनुं वा वर्धस्व वर्धयस्व ॥

६. शतसाः गवां शतस्य संभक्ता संसहस्रं गवां सहस्रेण च संयुतः द्विबर्हा द्वाभ्यां विद्याकर्मभ्यां बृहन् वसिष्ठः द्वयोः स्थानयोर्द्युलोकयोः महान्वा । तथा च यास्कः । द्विबर्हा द्वयोः स्थानयोः परिवृढ इति । इदं वचः इदं स्तोत्रं अग्नय उज्ज्वनिर्मितं उदजीजनत् । किं तदित्यत आह । यद्वचः द्युमत् दीप्तिमत् यशस्करमित्यर्थः । अमीवचातनं रोगाणां निवारकं रक्षोहा रक्षसां हंतृ च स्तोतृभ्य आपये तद्बंधवे पुत्रादिकायापि शं सुखदं भवाति भवेत् ॥

७. इयमृक् प्रागेव व्याख्याता (७. ७.) ॥

इति पंचमस्य द्वितीय एकादशो वर्गः ॥

---

9.

अबोधि जार इति षडृचं नवमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाग्नेयम् । अबोधि षडित्यनुक्रांतम् । प्रातरनुवाकाश्विनशस्त्रयोर्दशसूक्तमध्य उक्तो विनियोगः ॥

१. जारः सर्वेषां प्राणिनां जरयिता होता देवानामाह्वाता मंद्रो मदयिता स्तुत्यो वा कवितमः प्राज्ञतमः पावकः शोधकोऽग्निः उषसामुपस्थात् मध्ये अबोधि अबुध्यत । किंच उभयस्य द्विपदश्चतुष्पदश्च दैव्यस्य मानुषस्य वा जंतोः प्राणिनः केतुं प्रज्ञानं दधाति विदधाति । देवेषु च हव्या हव्यानि दधाति । सुकृत्सु यजमानेषु च द्रविणं धनं दधाति ॥

२. सोऽग्निः सुक्रतुः सुकर्मा सुप्रज्ञो वा भवति योऽग्निः पणीनामसुराणां दुरो द्वाराणि गवां पिधानानि विवृतवान् । पुरुभोजसं बहुक्षीरं अर्कमर्चनीयं गवां संघं नोऽस्मदर्थं पुनानः शोधयन् हरन्नित्यर्थः । होता देवानामाह्वाता मंद्रो मदयिता स्तुत्यो वा दमूनाः दांतमनाः दानमना वा शम्याणां रात्रीणां रमयित्रीणां वा विशां जनानां यजमानानां वा तमोऽंधकारं तिरस्कुर्वन् ददृशे दृश्यते च । यद्वा तमस्तिरो ददृशे नाशयतीत्यर्थः ॥

(P.20.) ३. योऽग्निरमूरोऽमूढः कविः प्राज्ञः अदितिः अदीनः विवस्वान्दीप्तिमान् सुसंसत् शोभनसदनः शोभनसंवेदनो वा मित्रः प्रमीतेस्त्राता सर्वेषां अतिथिरतिथिवत्पूज्यः शिवः शिवकरो जगतः चित्रभानुः चित्रदीप्तिः उषसामग्रे मुखे भाति सोऽयमपां गर्भः सन् प्रस्वः जायमानाः ओषधीराविवेश ॥

४. हे अग्ने वस्त्वम् । अत्र विभक्तिवचनव्यत्ययः । मनुषो मनुष्यस्य युगेषु यागकालेषु सर्वेष्वपि दिवसेषु वा ईळेन्यः स्तुत्यः । अतः परं परोक्षस्तुतिः । योऽग्निर्जातवेदाः जातधनः समनगाः युद्धेषु संगंता सन् अशुचत् दीप्यते । सुसंदृशा सुसंदर्शनेन भानुना तेजसा विभाति च । तमग्निं समिधानं समिध्यमानं गावः स्तुतयः प्रति बुधंत प्रतिबोधयंति ॥

५. वैश्वदेवे पशावग्ने याहीति हविषो याज्या । सूत्रितं च । अग्ने याहि दूत्यं मा रिषण्य इंद्रं नरो नेमधिता हवंत इति तिस्र इति ।

हे अग्ने दूत्यं दूतस्य कर्म हविर्वहनादि याहि देवानच्छाभिगच्छ। गणेन संघेन सह ब्रह्मकृता ब्रह्मकृतोऽस्मानस्मदीयांश्च तव स्तोतॄन्मा रिषण्यः मा हिंसीः। सरस्वतीं मरुतोऽश्विना अश्विनौ अपश्च एतान्देवान रत्नधेयायास्मभ्यं रत्नदानाय यक्षि च॥

६. हे अग्ने त्वां वसिष्ठ ऋषिः समिधानो भवति। तं च जरूथं परुषभाषिणं जरणीयं वा रक्षोगणं हन् जहि। राये धनवते यजमानाय पुरंधिं बहुधियं देवगणम्। तथा च यास्कः। पुरंधिर्बहुधीरिति। यक्षि यज। किंच हे जातवेदोऽग्ने पुरुणीथा पुरुनीथेन बहुना स्तोत्रेण जरस्व देवान् स्तुहि। यद्वा पुरुणीथानेकमार्गाणि रक्षांसि जरयेत्यर्थः॥

इति पंचमस्य द्वितीये द्वादशो वर्गः॥

---

## 10.

उषो न जार इति पंचर्चं दशमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाग्नेयम्। तथा चानुक्रांतम्। उषो न पंचेति। प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः॥

१. अग्निः उषो न जारः उषसो जारः सूर्यः तद्वत् पृथु विस्तीर्णं पाजस्तेजः अश्रेत् श्रयति। किंच दविद्युतत् दीद्यत् शोशुचान इति त्रयोऽपि शब्दा यद्यपि दीप्तिकर्माणस्तथापि दीप्तेर्भूयस्त्वज्ञापनाय प्रयुक्ता इति न पुनरुक्तिः। अत्यंतं दीप्यमान इत्यर्थः। वृषा कामानां वर्षिता हरिर्हविषां प्रेरकः शुचिः शुद्धिकृदग्निः धियः कर्माणि जिन्वानः प्रेरयन् भासा दीप्त्या आ भाति प्रकाशते। अपि च उशतीः कामयमानाः अजीगः जागरयति। तमसा तिरोहिताः प्रजा उद्गिरति वा॥

(P. 21.) २. अग्निर्वस्तोरहनि। वस्तोः द्युरित्यहर्नामसु पाठात्। उषसामग्रे स्वर्ण आदित्य इव। तथा च यास्कः। स्वरादित्यो भवति सु अरणः सु ईरण इति। अरोचि दीप्यते। उशिजो न ऋत्विजश्च यज्ञं तन्वानाः विस्तारयंतः मन्म मन्मानि मननीयानि स्तोत्राणि पठंतीति शेषः। नेति संप्रत्यर्थे। अपि च जन्मानि विद्वान् जानन् दूतो देवानां देवयावा देवान्प्रति गच्छन् वनिष्ठो दातृतमोऽग्निः व्याद्रवत् विविधमाद्रवति॥

३. मतयः स्तुतिरूपाः देवयंतीर्देवानिच्छंत्यो द्रविणं धनं भिक्षमाणा याचमाना गिरो वाचः सुसंदृशं कल्याणसंदर्शनं सुप्रतीकं सुरूपं शोभनांगं वा स्वंचं सुष्ठु गच्छंतं हव्यवाहं हव्यानां वोढारं मानुषाणामरतिं स्वामिनमग्निमच्छ अभियंति अभिगच्छंति॥

४. हे अग्ने वसुभिर्देवैः सजोषाः संगतस्त्वं नोऽस्मदर्थं इंद्रमावह। रुद्रेभिः रुद्रैर्देवैः संगतो बृहंतं महांतं रुद्रं चावह। आदित्येभिरादित्यैर्देवैः संगतो विश्वजन्यां विश्वजनहितामदितिं चावह। ऋक्वभिः स्तुत्यैः अंगिरोभिर्देवैः संगतो विश्ववारं विश्वैः संभजनीयं बृहस्पतिं चावह॥

५. उशिजः कामयमानाः विशो मनुष्याः मंद्रं स्तुत्यं होतारमाह्वातारं यविष्ठं युवतममग्निं अध्वरेषु यागेषु ईळते स्तुवंति। हि यस्मात्कारणात्सोऽग्निः क्षपावान् रात्रिमान्। रात्रौ खल्वस्यैऽग्निहोत्रं हूयते। रयीणां रयिमतां हविष्मतां यजमानानां

देवान् यजथाय यष्टुं अतंद्रस्तंद्रारहितोऽभवत्। तथा च श्रूयते। यस्माद्धूतोऽभवत्तस्माद्विशस्तमध्वर ईळत इति॥

इति पंचमस्य द्वितीये त्रयोदशो वर्गः॥

---

## 11.

महाँ असीति पंचर्चमेकादशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाग्नेयम्। महानित्यनुक्रांतम्॥ प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः॥

१. हे अग्ने त्वं अध्वरस्य प्रकेतः प्रज्ञापनः सन् महानसि। त्वदृते त्वया विना अमृता देवा न मादयंते न माद्यंति। विश्वेभिर्विश्वैर्देवैः सरथं यथा भवतु आ याहि च। इह स्तीर्णे बर्हिषि प्रथमो मुख्यो होता आह्वाता सन् निषद निषीद च॥

(P. 22.) २. वाजपेये बार्हस्पत्यचरोः स्विष्टकृतोऽनुवाक्या। सूत्रितं च। त्वामीळते अजिरं दूत्यायाग्निं सुदीतिं सुदृशं गृणंत इति॥

हे अग्ने अजिरं क्षिप्रगामिनं त्वां मानुषासो मानुषाः हविष्मंतो यजमानाः सदमित् सदैव दूत्याय दूतकर्मणे हविर्वहनाय ईळते याचते। किमर्थं इत्यत आह। यस्य हविष्मतो बर्हिर्देवैः सार्धं आसदः त्वमधितिष्ठासि अस्मै हविष्मते अहानि सुदिना सुदिनानि शोभनदिनानि भवंति॥

३. हे अग्ने त्वे त्वयि अंतर्मध्ये अक्तोः अह्नः। यद्यप्यक्तुरिति रात्रेर्नाम तथाप्यत्र अज्यंते व्यज्यंते रूपाणीन्यस्मिन्नित्यह्नो नाम। त्रिस्त्रिवारं त्रिषु सवनेषु वसूनि हवींषि दाशुषे हविषां प्रदात्रे मर्त्याय मनुष्याय तदर्थमित्यर्थः। प्रचिकितुः प्रवेदयंति ऋत्विजः। यद्वा अक्तोरह्नि त्रिः त्रीनग्निमध्यमर्जं च त्वय्यंतर्निहितानि प्रचिकितुरविदन्नित्यर्थः। अपि च मनुष्वत् मनोरिव इह मनास्मिन् यज्ञे दूतस्त्वं देवान् यक्षि यज। नोऽस्माकमभिशस्तिपावा अभिशंसकात् शात्रवात्पावा रक्षिता भव॥

४. बृहतो महतः अध्वरस्य कौटिल्यरहितस्य यज्ञस्य अग्निरीशे ईष्टे। विश्वस्य सर्वस्य कृतस्य संस्कृतस्य हविषश्चाग्निरेवेष्टे। हि यस्मादस्याग्नेः क्रतुं कर्म वसवो देवा जुषंत सेवंते। अथापि च देवाः अग्निं हव्यवाहं हव्यानां वोढारं दधिरे चाक्रिर इत्यर्थः॥

५. हे अग्ने हविरद्याय हविषां भक्षणाय देवान् आवह। किमित्यत आह। इहास्मिन्यज्ञे इंद्रज्येष्ठास इंद्रप्रमुखा देवाः मादयंताम्। इमं यज्ञं यष्टव्यं हविर्दिवि स्थितेषु देवेषु धेहि निधेहि। देवान्वा इह नय इदं हविर्वा देवेषु नयेति भावः। अंतिमः पादो व्याख्यातचरः॥

इति पंचमस्य द्वितीये चतुर्दशो वर्गः॥

---

## 12.

अगन्म महेति तृचात्मकं द्वादशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाग्नेयम्। तथा चानुक्रांतम्। अगन्म तृचमिति। प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः। व्यूळ्हे दशरात्रे नवमेऽहनीदं सूक्तमाज्यशस्त्रम्। सूत्रितं च। तृतीयस्यागन्म महेत्याज्यमिति॥

१. योऽग्निः स्वे दुरोणे स्वे स्थाने आहवनीये समिद्धः काष्ठैः समिद्धः सन् दीदाय दीप्यते तमिमं यविष्ठं युवतमं उर्वी विस्तीर्णे रोदसी रोदस्योर्द्यावापृथिव्योरंतर्मध्ये अंतरिक्षे चित्रभानुं चित्रज्वालं स्वाहुतं सुष्ठ्वाहुतिभिर्हुतं संतं विश्वतः सर्वतः प्रत्यंचं प्रतिगच्छंतमग्निं महा महता नमसा नमस्कारेण अगन्म वयमुपगच्छाम॥

(P. 23.) २. योऽग्निर्मह्ना महत्त्वेन विश्वा विश्वानि दुरितानि साह्वान् अभवत् जातवेदाः जातधनो जातप्रज्ञो वा दमे यज्ञगृहे स्तवे अस्माभिः स्तूयते सोऽग्निरस्मान् दुरितात् पापात् अवद्यात् निंदिताच्च कर्मणो रक्षिषत् रक्षतु। अस्मान् गृणतः स्तुवतोऽपि रक्षिषत्। उत अपि च सोऽग्निर्नो मघोनो हविष्मतो रक्षिषत्॥

३. हे अग्ने त्वं वरुणोऽसि। उत अपि च त्वं मित्रोऽसि जगतः प्रमीतेस्त्रातासि। त्वां वसिष्ठाः मतिभिः स्तुतिभिर्वर्धयंति। त्वे त्वयि विद्यमानानि वसु वसूनि सुसनतानि सुसंभजनानि संत्विति। स्पष्टमन्यत्॥

इति पंचमस्य द्वितीये पंचदशो वर्गः॥

---

## 13.

प्राग्नय इति तृचं त्रयोदशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वैश्वानराग्निदेवताकम्। तथा चानुक्रांतम्। प्राग्नये वैश्वानरीयमिति। विनियोगो लैंगिकः॥

१. हे सखायः विश्वशुचे विश्वं यो दीपयति तस्मै धियंधे धियां कर्मणां यो धाता तस्मै असुरघ्ने असुराणां यो हंता तस्मै अग्नये मन्म मननीयं स्तोत्रं धीतिं कर्म च प्र भरध्वम्। मतीनामभिमतानां कामानां यतये दात्रे वैश्वानराय विश्वनरहिताय अग्निविशेषाय बर्हिषि यज्ञे हविर्न हविरिव स्तुतिं प्रीणानः प्रीयमाणोऽहं भरे भरामि। यद्वा हविः प्रीणानः प्रीणयन्नहं बर्हिषि बर्हिर्भरे संभरामि। नेति संप्रत्यर्थे॥

२. हे अग्ने त्वं शोचिषा दीप्त्या शोशुचानो दीप्यमानो जायमानो जायमान एव रोदसी द्यावापृथिव्यौ आपृणाः आपूरयः। अपि च जातवेदो जातप्रज्ञ जातधन वा वैश्वानर विश्वनरहित हे अग्ने त्वं देवान् महित्वा महत्त्वेन अभिशस्तेः अभिशंसकाच्छत्रोरमुंचः अमोचयः॥

३. हे अग्ने जातः सूर्यात्मना जातः त्वं इर्यः स्वामी प्रेरयन्वा परिज्मा परितो गंता सन् पशून् गोपाः। यथा गवां पालकः पशून्रक्षयति तद्वत्। यदा भुवनानि व्यख्यः रक्षार्थं पश्यसि तदा ब्रह्मणे ब्रह्म स्तोत्रं तदर्थं गातुं गतिं फल-

प्राप्तिं विंद। यद्वा ब्रह्मणे ब्राह्मणार्थं गातुं विंद। येन ब्रह्मणोपद्रवान्निर्गच्छंति तं गातुं विंदेत्यर्थः। स्पष्टमन्यत्॥

इति पंचमस्य द्वितीये षोडशो वर्गः॥

---

## 14.

(P. 24.) समिधा जातवेदस इति तृचं चतुर्दशं सूक्तं वसिष्ठस्यार्षमाग्नेयम्। आद्या बृहती द्वितीयातृतीये त्रिष्टुभौ। तथा चानुक्रम्यते। समिधा बृहत्यादीति विनियोगो लैंगिकः॥

१. जातवेदसे जातवेदसं जातप्रज्ञं अग्नयेऽग्निं समिधा वयं वसिष्ठा दाशेम परिचरेम। देवाय देवं स्तुत्यमग्निं देवहूतिभिर्देवस्तुतिभिर्दाशेम। शुक्रशोचिषे शुक्रशोचिषं शुभ्रदीप्तिं नमस्विनो हविष्मंतो वयं हविर्भिर्दाशेम। अत्र दाशतियोगात्कर्मणि चतुर्थी। प्रायेण सर्वत्र दाशतियोगे कर्मणि चतुर्थी दृश्यते॥

२. हे अग्ने ते त्वां वयं वसिष्ठाः समिधा विधेम परिचरेम। हे यजत्र यष्टव्याग्ने वयं सुष्टुती शोभनया स्तुत्या दाशेम त्वां परिचरेम। अध्वरस्य यज्ञस्य होतरग्ने वयं घृतेनाज्येन त्वां दाशेम। हे भद्रशोचे कल्याणज्वाल देव द्योतमानाग्ने त्वां वयं हविषा दाशेम॥

३. हे अग्ने नोऽस्माकं देवहूतिं स्तोत्रं यज्ञं वा देवेभिः देवैः सार्धं वषट्कृतिं हविः जुषाणः सेवमानस्त्वं उप आयाहि। देवाय द्योतमानाय तुभ्यं वयं दाशतः परिचरंतः स्याम भवेम। सिद्धमन्यत्॥

इति पंचमस्य द्वितीये सप्तदशो वर्गः॥

---

## 15.

उपसद्यायेति पंचदशर्चं पंचदशं सूक्तं वसिष्ठस्यार्षं गायत्रमाग्नेयम्। तथा चानुक्रांतम्। उपसद्याय पंचोना गायत्रमिति। प्रातरनुवाक आग्नेये क्रतौ गायत्रे छंदस्याश्विनशस्त्रे चेदं सूक्तम्। सूत्रितं च। उपसद्याय त्वमग्ने यज्ञानामिति तिस्र उत्तमा उद्धरेदिति। उपसदि पौर्वाह्णिक्यामुपसद्यायेत्याद्यास्तिस्र ऋचः सामिधेन्यः। सूत्र्यते च। उपसद्याय मीळ्हुष इति तिस्र एकैकां त्रिरनवानमिति। पवित्रेष्ट्यामग्ने रक्षांसीत्येषा प्रथमाज्यभागानुवाक्या। सूत्रितं च। पावकवंतावाज्यभागावग्नी रक्षांसि सेधतीति। अन्वारंभणीयायामग्नेर्भागियाज्या। सूत्रितं च। आ सवं सवितुर्यथा स नो राधांस्या भरेति। स्वस्त्ययन्यामिष्टावग्ने रक्षा ण इति प्रथमाज्यभागानुवाक्या। सूत्रितं च। स्वस्त्ययन्यां रक्षितवंतावग्ने रक्षा णो अंहस इति॥

१. हे अध्वर्यवः उपसद्याय उपसदनीयाय मीळ्हुषे कामानां वर्षित्रेऽग्नये तत्प्रीत्यर्थं आस्ये तस्यैव मुखे हविर्जुहुत। योऽग्निर्नेदिष्ठमासन्नतमं आप्यं भवति। आसन्नतमो बंधुर्भवतीत्यर्थः। आप्यमिति स्वार्थिकस्ताद्धितः॥

२. योऽग्निः कविः प्राज्ञो गृहपतिर्गृहाणां पालयिता युवा नित्यतरुणः सन् पंच चर्षणीः पंच जनान् मनुष्यान् अभि अभिमुखं दमे दमे गृहे गृहे निषसाद निषीदति। उत्तरया वाक्यपरिसमाप्तिः ॥

३. सोऽग्निर्नोऽस्माकं वेदो धनं अमात्यं अंतिके भवं सहभूतं वा विश्वतः सर्वतो बाधकाद्रक्षतु। उत अपि चास्मान्वासिष्ठानंहसः पापात्पातु रक्षतु ॥

(P. 25.) ४. दिवो द्युलोकस्य श्येनाय श्येनसदृशाय नु क्षिप्रं गंत्रेऽग्नये यस्मै नवं नूतनं स्तोमं जीजनं अजीजनं जनयामि सोऽग्निर्नोऽस्मभ्यं कुविद् बहु वस्वो वसु धनम्। कर्मणि षष्ठी। वनाति ददात्वित्यर्थः ॥

५. यज्ञस्याग्रे पुरस्ताद्भागे शोचतो दीप्यमानस्य यस्याग्नेः श्रियो दीप्तयः वीरवतः पुत्रवतो रयिर्धनं यथा तद्वत् दृशे द्रष्टुं चक्षुषे वा स्पार्हाः स्पृहणीया भवंति तस्मै नवं स्तोमं जीजनमित्यनुषंगः। उत्तरत्र संबंधो वा ॥

इति पंचमस्य द्वितीयेऽष्टादशो वर्गः ॥

६. यजिष्ठो यजनीयतमो यष्टृतमो वा हव्यवाहनो हव्यानां हविषां वोढा सोऽग्निरिमां वषट्कृतिमस्माभिरीर्यमाणामाहुतिं वेतु कामयतां भक्षयतु वा। नोऽस्माकं गिरः स्तुतीश्च जुषत सेवताम् ॥

७. नक्ष्य उपगंतव्य। नक्षतिर्व्याप्तिकर्मा। विशपते विशां पते देव द्योतमान आहुत सर्वैर्यजमानैरभिहुत हे अग्ने द्युमंतं दीप्तिमंतं सुवीरं कल्याणस्तोतृकं त्वा त्वां वयं नि धीमहि निहितवंतः ॥

८. हे अग्ने त्वं क्षपो रात्रीः उस्रः अहानि च सर्वदेति यावत् दीदिहि दीप्यस्व। दीप्यमानेन त्वया वयं वसिष्ठाः स्वग्नयः शोभमानाग्नयो भवाम। अस्मयुः अस्मान् कामयमानः। सुप आत्मनः क्यजिति क्यचि कृते क्याच्छंदसीत्युप्रत्ययः। इका-रलोपश्छांदसः। तथा च यास्कः। अस्मयुरस्मान् कामयमान इति। त्वं सुवीरः सुस्तोतृको भव ॥

९. हे अग्ने त्वा त्वां नरो नेतारो यजमानाः विप्रासो विप्राः मेधाविनः धीतिभिः कर्मभिः सातये धनाय कामानां लाभाय वा उपयंति उपगच्छंति। सहस्रिणी सहस्र-संख्याका अक्षरा क्षयरहिता स्तुतिरूपा अस्मदीया वाक् त्वामुपयाति च ॥

१०. शुक्रशोचिः शुभ्रज्वालः अमर्त्यः मरणरहितो देवतात्मा शुचिः स्वयं शुद्धः पा-वकः अन्येषामपि शोधक ईड्यः स्तुत्योऽग्निः रक्षांसि राक्षसान् सेधति बाधताम्।

इति पंचमस्य द्वितीय एकोनविंशो वर्गः ॥

११. हे सहसो यह्वो बलस्य पुत्राग्ने स प्रसिद्धस्त्वं ईशानः सर्वस्य जगत ईश्वरः सन् नोऽस्मभ्यं राधांसि धनानि आ भर आहर। भगश्च भगो देवोऽपि वार्यं धनं दातु अस्मभ्यं ददातु अभ्यासलोपश्छांदसः। भगोऽत्र सूक्ते निपातभागिनी देवता ॥

१२. हे अग्ने त्वं वीरवत पुत्रपौत्रोपेतं यशोऽन्नं देहीति शेषः। देवश्च सविता सविता देवोऽपि वार्यं वरणीयं धनं दाति ददातु। भगश्च देवोऽपि ददातु। दितिश्च दितिरपि देवी ददातु। सवित्रादिः सूक्ते निपातभागिनी देवता ॥

(P. 26.) १३. हे अग्ने त्वं नोऽस्मान् अंहसः पापात् रक्ष पाहि । संहितायां दीर्घश्छांदसः । अपि च हे देव द्योतमानाग्ने अजरो जरारहितस्त्वं रिषतो हिंसतः शत्रून् तपिष्ठैरतिशयेन तापकैस्तेजोभिः दह भस्मीकुरु ॥

१४. अधा अधुना हे अग्ने अनाधृष्टः अप्रतिधर्षणीयः त्वं नोऽस्माकं नृपीतये नृणां रक्षणार्थं मही महती आयसी अयसा निर्मिता शतभुजिः अत्यंतं विस्तृता शतगुणा पूः पुरी । तद्रक्षासाधनभूतप्राकारादिर्वा पूरुच्यते । भव । यथा अयसा निर्मिता पुरी तद्रक्षासाधनभूतप्राकारादिर्वा शत्रुभ्यो भीतान्रक्षति तद्वद्राक्षसेभ्यो भीतानस्मान् पाहीत्यर्थः ॥

१५. हे अदाभ्य अहिंस्य दोषावस्तः रात्रेराच्छादयितः तमसो वारयितरित्यर्थः । अग्ने त्वं नोऽस्मान् अंहसः पापात् अघायतः पापमिच्छतः शत्रोश्च दिवा नक्तं अहनि रात्रौ च सर्वदा पाहि रक्ष ॥

इति पंचमस्य द्वितीये विंशो वर्गः ॥

---

## 16.

एना व इति द्वादशर्चं षोडशं सूक्तं वसिष्ठस्यार्षमग्निदेवताकम् । अयुजो बृहत्यो युजः सतोबृहत्यः । तथा चानुक्रांतम् । एना वो द्वादश प्रागाथमिति । प्रातरनुवाके आग्नेये क्रतौ बार्हते छंदस्याश्विनशस्त्रे चेदं सूक्तम् । सूत्रितं च । एना वो अग्निं प्र वो यह्वमिति । आग्निमारुतशस्त्रे देवो वो द्रविणोदा इति प्रगाथोऽनुरूपः । सूत्रितं च । देवो वो द्रविणोदा इति प्रगाथौ स्तोत्रियानुरूपाविति ॥

१. ऊर्जो बलस्य नपातं पुत्रम् । सूनुर्नपादित्यपत्यनामसु पाठात् । प्रियं प्रियमस्माकं चेतिष्ठं अतिशयेन ज्ञातारं प्रज्ञापकं वा अरतिं गंतारं स्वामिनं वा स्वध्वरं सुयज्ञं विश्वस्य सर्वस्य यजमानस्य दूतममृतं नित्यमग्निमेना एनेन नमसा स्तोत्रेण । यद्यप्यत्रान्वादेशो नास्ति तथापि छांदसत्वादिदंशब्दस्यैनादेशः । यद्वा एना एनमित्यग्नेर्विशेषणम् । समानार्थत्वात्पूर्वेषु सूक्तेष्वादिष्टत्वाद्वसिष्ठेनान्वादिश्यते । वो युष्मदर्थमाहुवे आह्वयामि ॥

२. सोऽग्निररुषा आरोचमानौ विश्वभोजसा विश्वस्य पालयितारावश्वौ योजते रथे युनक्तु । यद्वा सोऽरुषा आरोचमानेन तेजसा विश्वभोजसा विश्वस्य रक्षकेण योजते अयुज्यत । किंच सोऽग्निर्दुद्रवत् आनेतुं देवान् प्रति भृशं द्रवतु द्रवति वा । स्वाहुतः सुष्ठ्वाहुतः सुब्रह्मा सुस्तुतिः शोभनान्नो वा यज्ञो यष्टव्यः सुशमी सुकर्मा च भवति । तमिमं देवं द्योतमानं वसूनां वासकानां जनानां वसिष्ठानां राधो हविरभिगच्छत्विति शेषः । यद्वा एवंगुणविशिष्टोऽग्निः वसूनां धनानां मध्ये देवमत्यंतप्रकाशमानं राधो धनं जनानां यजमानानां धनवत् प्रियतम इत्यर्थः ॥

३. मीळ्हुषः कामानां वर्षितुः आजुह्वानस्याभिहूयमानस्याग्नेः शोचिस्तेज उदस्थात् उत्तिष्ठति । अरुषास आरोचमाना दिविस्पृशोऽतरिक्षस्पृशो धूमासो धूमाश्च उदस्थुः । अस्थादित्येकवचनांतं बहुवचनांततया विपरिणतं सदत्रान्वेति । तमिममग्निं नरः कर्मणां नेतार ऋत्विजः समिंधते सम्यक् दीपयंति ॥

(P. 27.) ४. हे सहसः सूनो बलस्य पुत्राग्ने यशस्तमं अतिशयेन यशस्विनं तं प्रसिद्धं यं त्वा त्वां दूतं कृण्महे कुर्मः स त्वं देवान् वीतये हविषां भक्षणाय आवह । किंच यद्यद्य त्वा त्वां ईमहे याचामहे तदेव विश्वा विश्वानि मर्तभोजनानि मनुष्याणां भोग्यानि कल्याणानि धनानि रास्व अस्मभ्यं देहि ॥

५. हे विश्ववार विश्वैर्वरणीयाग्ने त्वं नोऽस्माकमध्वरे यागे गृहपतिरसि यजमानोऽसि । त्वं होता देवानामाह्वाता । त्वं त्वमेव पोतासि । अतः प्रचेताः प्रकृष्टमतिस्त्वं वार्यं वरणीयं हविः यक्षि यज वेषि च कामयस्व भक्षय वा ॥

६. हे सुक्रतो शोभनकर्मन्नग्ने यजमानाय मह्यं रत्नं धनम् । चात्रं रत्नमिति धननामसु पाठात् । कृधि कुरु देहीत्यर्थः । हि यस्मात्त्वं रत्नधा रत्नस्य दातासि । नोऽस्माकमृते यज्ञे विश्वं सर्वं ऋत्विजं आशिशीहि तीक्ष्णीकुरु । किंच यः सुशंसः सुस्तुतिरस्मत्पुत्रो इक्षते वर्धते तं वर्धय । यद्वा सुशंसो होता वर्धते तं वर्धयेत्यर्थः । होतुः पृथगुपादानमादरार्थम् ॥

इति पंचमस्य द्वितीये एकविंशो वर्गः ॥

७. हे अग्ने स्वाहुत यजमानैः सुष्ठु आहुत त्वे तव सूरयः प्रेरकाः स्तोतारो वा प्रियासः प्रियाः संतु भवंतु । किंच ये मघवानो धनवंतो यंतारः प्रदातारः जनानामस्मदीयानामूर्वान् समूहान् गोनां गवां च ऊर्वान् दयंत प्रयच्छंति ते च तव प्रियाश्च संत्विति पूर्वेणान्वयः ॥

८ येषां दुरोणे गृहे घृतहस्ता । घृतयुक्तो हस्तो यस्या असौ घृतहस्ता । घृतेनामिश्रितेत्यर्थः । इळान्नरूपा हविर्लक्षणा देवी । इरा इळेत्यन्ननामसु पाठात् । प्राता पूर्णा निषीदति आसीदति । अपीति पूरणः । तान्हविष्मतो यजमानान् हे सहस्य सहसे बलाय हिताग्ने द्रुहो द्रोग्धुर्निदो निंदकाच्च शत्रोस्त्रायस्व । नोऽस्मभ्यं दीर्घश्रुत् दीर्घकालं श्रोतव्यं शर्म सुखं गृहं वा यच्छ च देहि ॥

(P. 28.) ९. हे अग्ने मंद्रया च मोदयित्र्या देवानामास्या आस्यस्थानीयया जिह्वया ज्वालया वह्निर्हविषां वोढा विदुष्टरो विद्वत्तरः स प्रसिद्धस्त्वं मघवद्भ्यो हविष्मद्भ्यो नोऽस्मभ्यं रयिं धनं आवह च । हव्यदातिं हव्यानि ददातीति हव्यदातिर्यजमानः तम् । तथा च वाजसनेयिन आमनंति । यजमानो वै हव्यदातिरिति । सुदय च कर्मसु प्रेरय च ॥

१०. हे यविष्ठ्य युवतमाग्ने त्वं ये यजमानाः महो महतः श्रवसो यशसः कामेन इच्छया यशस्कामाः संत इत्यर्थः । राधांसि साधकानि अश्व्या अश्वात्मकानि मघा मघानि ददति तान्दातॄन् अंहसः पापात् शत्रोर्वा पर्तृभिः रक्षासाधनभूतैः शतं अपरिमिताभिः पूर्भिर्नगरीभिश्च पिपृहि पालय ॥

११. द्रविणोदाः धनानां दाता देवोऽग्निः वो युष्मदीयां पूर्णां हविषा आसिचं आसिक्तां स्रुचं विवष्टि कामयते । अत उत्सिंचध्वं वा सोमेन पात्रमुपपृणध्वं वा सोमम् वाशब्दौ समुच्चयार्थौ । ध्रुवग्रहेण होतृचमसं पूरयत च अग्नये सोमं यच्छत चेत्यर्थः । आदिदनंतरमेव देवोऽग्निर्वो युष्मान् आहते वहति ॥

१२. देवाः प्रचेतसं प्रकृष्टमतिमग्निमध्वरस्य यज्ञस्य वह्निं वोढारं होतारं चाक्रण्वन् अकुर्वन् । किमर्थमित्यत आह । स चाग्निर्विधते परिचरते दाशुषे हविषां

प्रदात्रे जनाय सुवीर्यं शोभनवीर्योपेतं रत्नं रमणीयं धनं दधाति ददात्वित्यर्थः ॥

इति पंचमस्य द्वितीये द्वाविंशो वर्गः ॥

---

## 17.

अग्ने भव सुषमिधेति सप्तर्चं सप्तदशं सूक्तं वसिष्ठस्यार्षमग्निदेवताकम् । सप्तापि द्विपदास्त्रिष्टुभः । तथैवानुक्रम्यते । अग्ने भव सप्त द्वैपदं त्रैष्टुभमिति । अतिरात्रे षष्ठेऽहनि तृतीयसवने मैत्रावरुणशस्त्रेऽग्ने भवेति तृचोऽनुरूपः । सूत्र्यते हि । अग्ने त्वं नोऽन्तमोऽग्ने भव सुषमिधा समिद्ध इति स्तोत्रियानुरूपाविति ॥

१. हे अग्ने सुषमिधा शोभनया समिधा समिद्धो भव सम्यक् दीप्तो भव । उत अपि च बर्हिरुर्विया विस्तीर्णमुपस्तृणीतमध्वर्युः ॥

२. उत अपि च उशतीर्देवान् कामयमाना द्वारो यज्ञगृहस्य देव्यो वा । तथा च यास्कः । द्वारो जवतेर्वा द्रवतेर्वा वारयतेर्वेति । विश्रयंताम् । उत अपि च उशतो यज्ञं कामयमानान्देवानिह यज्ञ आवह ॥

(P. 29.) ३. हे जातवेदः जातधनाग्ने वीहि देवानभिगच्छ हविषा देवान्यक्षि यज च । स्वध्वरा स्वध्वरान् शोभनयज्ञांश्च कृणुहि कुरु ॥

४. जातवेदाः जातधनः अग्निरमृतान्मरणरहितान्देवान् स्वध्वरा स्वध्वरान् शोभनयज्ञान् करति करोतु । यक्षत् हविषा यजतु च । पिप्रयत् स्तोत्रैः प्रीणयतु च ॥

५. हे प्रचेतः प्रकृष्टमतिमन्नग्ने विश्वा विश्वानि वार्याणि वरणीयानि धनानि वंस्व अस्मभ्यं देहि । नोऽस्माकमाशिषोऽद्य सत्या यथार्था भवंतु ॥

६. हे अग्ने ऊर्जो बलस्य नपातं पुत्रम् । सूनुर्नपादित्यपत्यनामसु पाठात् । त्वामु त्वामेव ते प्रसिद्धा देवासो देवाः हव्यवाहं हविषो वोढारमादधिरे अकुर्वन्नित्यर्थः ॥

७. हे अग्ने देवाय द्योतमानाय ते तुभ्यं ते प्रसिद्धा वसिष्ठा वयं दाशतः हवींषि ददतः स्याम भवेम । अतो महो महांस्त्वमियानः उपगम्यमानो याच्यमानो वा नोऽस्मभ्यं रत्ना रत्नानि रमणीयानि धनानि वि दधः विधत्स्व ॥

इति पंचमस्य द्वितीये त्रयोविंशो वर्गः ॥

इति सप्तमे मंडले प्रथमोऽनुवाकः ॥

---

## 18.

द्वितीयेऽनुवाके षोडश सूक्तानि । तत्र त्वे ह यत्पितर इति पंचविंशत्यृचं प्रथमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमिंद्रदेवताकम् । द्वाविंशादिभिश्चतसृभिः सुदासनाम्नो राज्ञो दानं स्तूयते । अतस्तास्तद्देवताकाः । अनुक्रम्यते हि । त्वे ह यत्पंचाधिकैंद्रं सुदासः पैजवनस्य चतस्रोऽंत्या दानस्तुतिरिति । महाव्रत आदितः पंचदशर्चः शंसनीयाः । तथैव पंचमारण्यके सूत्रितम् । त्वे ह यत्पितरश्चिन्न इंद्रेति पंचदशेति ॥

१. हे इंद्र त्वे ह त्वय्येव नोऽस्माकं पितरश्चित् पितरोऽपि जरितारः स्तोतारः संतः यद्यस्मात्कारणात् विश्वा विश्वानि वामा वामानि वननीयानि धनानि । तथा च

वामकः । वामं वननीयं भवतीति । असन्वन् अलभंत तस्माद्वयमपि धनकामास्त्वां स्तुमः । तदुच्यते । हि यस्मात्कारणात्त्वे त्वयि गावः सुदुघाः दोग्धुं सुशकाः संति त्वे त्वयि अश्वाः संति त्वं वसु धनं देवयते देवं त्वामिच्छते यजमानाय वनिष्ठो दातृतमो भवसि ॥

२. हे इंद्र त्वं जनिभिर्जायाभि राजेव द्युभिर्दीप्तिभिः सह क्षेष्यव निवसस्येव । हीति पूरणः । किंच हे मघवन् धनवन्निंद्र विदुर्विद्वान् कविः क्रांतकर्मा क्रांतप्रज्ञो वा त्वं गिरः स्तोतॄनस्मान् पिशा रूपेण हिरण्यादिना वा गोभिरश्वैश्च अभि अभितो रक्ष । त्वायतः त्वत्कामानस्मान् राये शिशीहि धनार्थं च संस्कुरु ॥

(P. 39.) ३. हे इंद्र त्वा त्वां अत्र यज्ञे स्तोतरि वा प्रवर्तमानाः पस्पृधानासः स्पर्धमानाः मंद्रा मोदमानाः इमा गिरः स्तुतयः उप स्थुः उपतिष्ठंति । अतस्ते तव रायो धनस्य पथ्या सृतिर्मार्गो अस्मदभिमुखी एतु गच्छतु । हे इंद्र वयं च ते सुमतौ सुष्टुतौ वर्तमानाः शर्मन् शर्मणि सुखे स्याम भूयास्म ॥

४. हे इंद्र सुयवसे सुतृणे गोष्ठे वर्तमानां धेनुं न धेनुमिव सुहविष्के यज्ञगृहे । दृष्टांतसामर्थ्याद्दार्ष्टांतिकलाभः । वर्तमानं त्वां दुधुक्षन् । संहितायां व्यत्ययेन ढकारः । कामान् दोग्धुमिच्छन्वसिष्ठो ब्रह्माणि वत्सस्थानीयानि स्तोत्राणि उप ससृजे उपसृजते । मे मम विश्वः सर्वो जनः त्वामित्त्वामेव गोपतिं गवां स्वामिनमाह ब्रवीति । अथ परोक्षस्तुतिः । नोऽस्माकं सुमतिं सुष्टुतिमच्छाभि इंद्र आगंतु आगच्छतु ॥

५. नव्यः स्तुत्य इंद्रः अर्णांसि शत्रुभिर्विदारितायाः परुष्ण्या उदकानि पप्रथाना चित् प्रथमानान्यपि सुदासे राज्ञे गाधानि सुपारा सुपाराणि पारयितुं तर्तुं योग्यानि चाकृणोत् अकरोत् । अपि च शर्धन्तमुत्सहमानं शिम्युं बाधमानं शापं विश्वरूपाद्रवमात्मनोऽभिशापं अशस्तीरभिशस्तींश्च उचथस्य स्तोतुः सिंधूनां नदीनामकृणोत् अकरोत् ॥

इति पंचमस्य द्वितीये चतुर्विंशो वर्गः ॥

६. यक्षुर्यज्ञकुशलः । यजेः सन्प्रत्ययो न तु सन्नंतः । अतो न द्विर्भावः । पुरोळाः पुरोगामी पुरोदाता वा । इदिति पूरणः । तुर्वशो नाम राजासीत् । स तुर्वशो राये धनप्राप्तये इंद्रस्य सखायं सुदासं जगाम । मत्स्यासः इव जालनिहिता मत्स्या इव निशिता नियंत्रिता अपि भृगवो द्रुह्यवश्च योधाश्च सुदासस्तुर्वशस्य च श्रुष्टिं आशुप्राप्तिं चक्रुः । विषूचः विष्वगंचतोरुभयोर्मध्ये सखा सुदासश्चेंद्रः सखायं सुदासमतरत् अतारयत् । तुर्वशं चावधीदित्यर्थः । यद्वा यक्षुर्यज्ञशीलः पुरोळाः पुरोदाता तुर्वशो नाम राजासीत् । तेन मत्स्यासो मत्स्यजनपदा निशिता बाधिता आसन् । अपि च भृगवो द्रुह्यवश्च श्रुष्टिं सुखं तुर्वशस्य चक्रुः । विषूचोर्विष्वगंचतोरुभयोर्मध्ये सखा तुर्वशस्य सखेंद्रः सखायं राजानमतरत् अतारयत् ॥

७. पक्थासः पक्थाः हविषां पाचकाः भलानसः भद्रमुखाः । भलेति भद्रवाची । अलिनासः अलिनाः तपोभिरप्रवृद्धा इत्यर्थः । विषाणिनः कंडूयनार्थं कृष्णविषाणहस्ताः दीक्षिता इत्यर्थः । शिवासः शिवाः यागादिना सर्वस्य लोकस्य शिवकराः । यागेन हि शिवं भवति लोकस्य । आ भनंत अभिष्टुवंति तमिंद्रम् । भनतिः शब्दकर्मा नौति भनतीति शब्दकर्मसु पाठात् । य इंद्रः सधमाः । सोमपानेन सह माद्यतीति सधमादः सधमाद् एव सधमाः । आर्यस्य कर्मशीलस्य गव्या गोसंघान् तृत्सुभ्यो

हिंसकेभ्यः आनयत् । अजगन् अजगत् स्वयं च गोसंघान् लेभे । युधा युद्धेन तान्नॄन् शत्रून् जघान चेति शेषः ॥

(P.31.) ८. दुराध्यो दुष्टाभिसंधयोऽचेतसो मंदमतयः सुदासः शत्रवः अदितिमदीनां परुष्णीं नदीं स्रवयंतः वि जगृभ्रे । विग्रहः कूलभेदः । तमकुर्वन् । परुष्ण्याः कूलं बिभिदुरित्यर्थः । स सुदासो मह्ना इंद्रप्रसादलब्धेन महिम्ना पृथिवीमविव्यक् तदैव व्याप्नोत् । न पुनरुदकेनाबाध्यत । ततः सुदासः शत्रुः चायमानःचयमानस्य पुत्रः कविः कविनामा पत्यमानः पलायमानः पशुर्यागे संज्ञप्तः पशुरिव आशयत् अशेत सुदासा निहत इत्यर्थः ॥

९. अथेंद्रः परुष्ण्या विच्छिन्नानि पर्वाणि संदधे । ततः परुष्ण्या आपो यथापूर्वमर्थं गंतव्यमेव प्रवणदेशं प्रति परुष्णीमीयुः आययांचक्रुः । इण् गताविति धातोरंतर्भावितण्यर्थात् लिटीयुरिति । अतो द्विकर्मकमाख्यातम् । न्यर्थमगंतव्यं परुष्ण्याः पार्श्वयोः स्थितं निम्नं देशं प्रति परुष्णीं नेयुः । आशुश्चन राज्ञः सुदासः अश्वोऽपि अभिपित्वमभिप्राप्तव्यमेव जगाम । इंद्रश्च सुदासे राज्ञे मानुषे लोके वध्रिवाचो जल्पकानमित्रान् शत्रून् सुतुकान् सुतोकमानान् । तुक् तोकमित्यपत्यनामसु पाठात् । अरंधयत् वशमानयत् ॥

१० यदेंद्रः सुदासो रक्षणार्थमागच्छति तदा पृश्निनिप्रेचितासः पृश्निनिप्रेषिताः पृश्न्या मात्रा नितरां प्रहिताः चितासः संहताः जानंतो वा पृश्निगावः । पृश्निवर्णा गावोऽश्वा येषां ते पृश्निगावो मरुतः यथाकृतमिंद्रस्य साहाय्यं करवामेति यथा पूर्वं समयः कृतस्तं समयमनतिक्रम्य मित्रमिंद्रं यवसात् । निमित्तार्थे पंचमी । यवसं निमित्तीकृत्य अगोपाः गोपालेनारक्षिता गावो न गाव इव अभीयुः अभिजग्मुः । रंतयो रममाणा नियुतो मरुतामश्वाश्च श्रुष्टिं शीघ्रप्राप्तिं चक्रुः । तस्मिन्युद्धे मरुत इंद्रं साहाय्यार्थमभ्यगच्छन्नित्यर्थः ॥

इति पंचमस्य द्वितीये पंचविंशो वर्गः ॥

११. यः सुदासो राजा श्रवस्या यशस इच्छयान्नेच्छया वा परुष्ण्याः पार्श्वस्थयोर्वैकर्णयोर्जनपदयोर्विद्यमानानेकं च विंशतिं च जनान् न्यस्तः आत्मना अहन् स राजा दस्मो न दर्शनीयो युवाध्वर्युरिव सद्मन् यज्ञगृहे बर्हिर्यस्मिन्युद्धे शूर इंद्र एषां मरुतां सर्गं प्रसवमकृणोत् सुदासः साहाय्यार्थमकरोत् ॥

१२. अध अपि च वज्रबाहुरिंद्रः श्रुतं कवषं च वृद्धं च त्रीन् तथा द्रुह्युमनु आनुपूर्व्येणाप्सूदकेषु नि वृणक् न्यमज्जयदित्यर्थः । अत्रास्मिन्नवसरे ये त्वायंतः त्वत्कामाः त्वा त्वामन्वमदन् अस्तुवन् ते सखायः सख्याय सख्यार्थं त्वां वृणानाः सख्यं लेभिर इति शेषः ॥

(P.32.) १३. एषां कवषादीनां विश्वा विश्वानि दृंहितानि दृढानि दुर्गाणि पुरो नगरीश्च तद्रक्षासाधनभूतान् सप्त प्रकारांश्चेंद्रः सहसा बलेन सद्य एव वि दर्दः विदारयामास । अपि च आनवस्य अनोः संबंधिनो बलस्य अनोः पुत्रस्य वा गय गृहं धनं वा तृत्सवे तृत्सुनामकाय राज्ञे तृत्सूनां गणाय वा वि भाक् व्यभजत् । अदादित्यर्थः । इत्थमिंद्रं स्तुवंतो वयं विदथे युद्धे गृध्रवाचं बाधवाचं पूरुं मनुष्यं जेष्म जयेम ॥

१४. गव्यवो गोकामा अनवोऽनोः संबंधिनः द्रुह्यवो द्रुह्योः संबंधिनश्च वीरासो वीराः षष्टिः शता शतानि सहस्राणीत्यर्थः । षट् सहस्रा सहस्राणि च षष्टि-

श्रान्ति पञ्चाधिकाः षट् च दुध्यू दुर्योधुवे। चतुर्थी लुक्। परिचरणकामाय सुदासे। तत्स्यानि दुवस्यतीति परिचरणकर्मसु पाठात्। नि ससुपुः नितरां शेरते निहता इत्यर्थः। तान्येतानि विश्वा विश्वानि कृतानि कार्याणि इंद्रस्यैव इंद्रस्यैव वीर्या वीर्याणीति ॥

१५. कदाचिदिंद्रेण रक्षिता अप्यत्यल्पा ते नैव बाधंते। एते तृत्सवो दुर्मित्रासो दुर्मित्राः प्रकलवित् अजानंत इंद्रेण वेविषाणाः युद्धाय संगताः सृष्टाः पलायनार्थमुत्सृष्टाः नीचा नीचीना आपो न आप इव अधवंत अधावंत। ततो निमानाः सुदासा बाध्यमाना विश्वा विश्वानि भोजना भोग्यानि धनानि सुदासे राज्ञे जहुः ॥

इति पंचमस्य द्वितीये षड्विंशो वर्गः ॥

१६. इंद्रोऽपि क्षां भूमिमानि भूम्यामित्यर्थः वीरस्य वीर्ययुक्तस्य सुदासः अर्द्धं हिंसकम्। अर्द्धेर्हिंसाकर्मणोऽर्द्धशब्दस्य निष्पत्तिः। अनिंद्रं यस्य बुद्ध्या इंद्रो नास्त्यसावनिंद्रः तं इंद्रमगणयंतमित्यर्थः। शृतपां शृतस्य क्षीरादेः हविषः पातारं शर्धंतं उत्सहमानं परा नुनुद्र। किंच मन्युर्मन्युकर्तुः मन्युना मिमतो हिंसतो वा शत्रोर्मन्युं क्रोधं निमाय ववाधे। अथ सुदासः शत्रुः पथो मार्गान् पत्यमानो गच्छन् वर्तनिं पलायनमार्गं भेजे प्राप ॥

१७. इंद्रः तत्तदा आध्रेण चित् दरिद्रेणापि सुदासा एकं मुख्यं दानकर्म चकार कारयामास। सिंह्यं चित् प्रबलाः सिंहः सिंह्यं तमपि पेत्वेन छागेन जघान घातयामास। वेद्या वेदीं सूचीं तया स्रक्तीः यूपादीनवृश्चत् अवव्रश्चत् अवृक्णवान्। वाद्यादेः कृत्यं सूच्यैवाकरोदित्यर्थः। तान्येतानि त्रीणि कर्माणि असंभावितानीति नाशंकनीयानींद्रस्य महिम्नः अधिकत्वात् विश्वा विश्वानि भोजना भोजनानि भोग्यानि धनानि सुदासे राज्ञे प्रायच्छत् अदाच ॥

(P. 33.) १८. हे इंद्र ते तव शत्रवोऽरयः शश्वंतो बहवः सस्नुः वशमीयुः। चिदपि च शर्धत उत्सहमानस्य भेदस्य मिनन्ति मर्यादा इति भेदो नास्तिकः तस्य। यद्वा भेदो नाम सुदासः शत्रुः कश्चित् तस्येत्यर्थः। रंधिं वशीकारं विंद लभ। यो भेदः स्तुवतस्त्वां स्तुवतो मर्तान्मर्त्यान् एनः पापं कृणोति करोति तस्मिन् भेदे तिग्मं निशितं वज्रमुत्साहकमलम्। तथा च यास्कः। तिग्मं तेजतेरुत्साहकर्मण इति। वज्रम् वर्जति गच्छत्येव शत्रुं न प्रतिहन्यत इति वज्रः तम्। वज्रशब्दो वर्जेर्ऋज्रेंद्राग्रवज्रविप्रेत्यादिना रन्प्रत्ययांतो निपातितः तं जहि। वज्रेण भेदं प्रहरेत्यर्थः ॥

१९. अत्रास्मिन् सर्वताता सर्वतातौ युद्धे इंद्रो भेदं नास्तिकं भेदनामकं वा सुदासः शत्रुं प्रमुषायत् प्रामुष्णात् अवधीदित्यर्थः। तमिंद्रं यमुना आवत् अतोषयत् तत्तीरवासी जनः सर्वोऽप्यतोषयदित्यर्थः। तृत्सवश्च तृत्सवः पुरुषाश्चावन्। आवदित्येकवचनं बहुवचनांततया विपरिणतं सदत्र संबध्यते। किंचाजासोऽजा जनपदाः शिग्रवो जनपदाः यक्षवश्च जनपदाः अश्व्यान्यश्वसंबंधीनि शीर्षाणि शिरांसि युद्धे हतानामश्वानां शिरांसीत्यर्थः। बलिमुपहारं तस्मा इंद्रायापि जभ्रुः उपजह्रुः। यद्वा अश्व्यानि शीर्षाणि युद्धे मृतानाममुष्यानश्वानिंद्रायोपहारं जह्रुरित्यर्थः ॥

२०. हे इंद्र ते तव पूर्वाः पुरातनाः सुमतयः शोभनमतयो रायो धनानि च उषसो न उषस इव संचक्षे संख्यातुं न शक्याः। न नूत्ना नूतनाश्च सुमतयो रायश्च न संचक्षे। किंच त्वं मान्यमानं मन्यमानस्य पुत्रकं देवकं देवकनामानं शत्रुं जघंथ अवधीः। त्मना स्वयमेव बृहतो महतः शैलात् शंबरं च अवभेत् अवाभेत्सीरिति ॥

इति पंचमस्य द्वितीये सप्तविंशो वर्गः ॥

२१. हे इंद्र पराशरः शतयातुः बहुरक्षाः। बहूनि रक्षांसि बाधितुं यं कामयंते स शतयातुः बहूनां रक्षसां शातयिता वा। शक्तिः वसिष्ठश्चैवमादयो ये ऋषयः त्वाया त्वदिच्छया गृहाद्गृहं प्राप्य। ल्यब्लोपे द्वितीयार्थे पंचमी। यद्वा गृहात् गृहे। सप्तम्यर्थे पंचमी। प्रममदुः त्वां प्रतुष्टुवुः प्रकर्षेण तर्पितवंतो वा ते पराशरप्रभृतयः भोजस्य भोजकस्य पालस्य ते तव सख्यं सख्युः कर्म स्तोत्रं यजनं वा न मृषंति न विस्मरंति। मृष मर्षे। मर्षो मर्षणं तन्न कुर्वंतीत्यर्थः। यतो न विस्मरंति अध अतो हेतोः सूरिभ्यः सूरीणां स्तोतृणामिषाम्। अत्र विभक्तिव्यत्ययः। सुदिना सुदिनानि युच्छान् व्युच्छंति निवसंति अपगच्छंतीत्यर्थः ॥

२२. देववतो राज्ञो नप्तुः पौत्रस्य पैजवनस्य पिजवनपुत्रस्य सुदासो राज्ञो गोमतीं द्वे शते वधूमंता वधूसंयुक्तौ द्वा द्वौ रथा रथौ च देयं दानं दानभूतान् रेभन् इंद्रः स्तुवन् अत एवार्हन्योग्योऽहं वसिष्ठो हे अग्ने सद्म यज्ञगृहं होतेव वषट्कर्तेव पर्येमि। अत्राग्नेः संबोधनं सर्वदेवमुख्यत्वप्रतिपादनार्थं न तु देवतात्वज्ञापनार्थं अतस्तद्देवताकत्वादस्य सूक्तस्य ॥

(P. 34.) २३. पैजवनस्य पिजवनपुत्रस्य सुदासो राज्ञः स्मद्दिष्टयः प्रशस्तातिसर्जनश्रद्धादिदानांगयुक्ताः कृशनिनो हिरण्यालंकारवंतो निरेके दुर्गतौ सत्यां ऋज्रासो ऋजुगामिनः पृथिविष्ठाः पृथिव्यां सुप्रतिष्ठिताः दाना देयभूताश्चत्वारोऽश्वास्तोकं पुत्रवत्पालनीयं मां वसिष्ठं रथं स्थितं तोकाय तोकस्य पुत्रस्य। षष्ठ्यर्थे चतुर्थी। श्रवसे अन्नाय यशसे वा वहंति। पुनर्मेति पूरणः ॥

२४. यस्य सुदासः श्रवो यश उर्वी विस्तीर्णे रोदसी द्यावापृथिव्यौ अंतः विस्तीर्णयोर्द्यावापृथिव्योर्मध्ये वर्तत इत्यर्थः। यश्च सुदाः विभक्ता धनस्य प्रदाता शीर्ष्णेशीर्ष्णे श्रेष्ठाय श्रेष्ठाय विबभाज धनं प्रददौ तं सुदासं सप्तेत् सप्तैव लोकाः इंद्रं न इंद्रमिव गृणंति स्तुवंति। किंच स्रवतो नद्यः अभीके युद्धे युध्यामधिं युध्यामधिनामकं सपत्नं वि अशिशात न्यहन् ॥

२५. हे नरो नेतारो मरुतः इमं सुदासं राजानं सुदासो राज्ञः पितरं दिवोदासं न दिवोदासमिव। दिवोदास इति पिजवनस्यैव नामांतरम्। अनु सश्चत अनुसेवध्वम्। किंच दुवोयु परिचरणकामस्य। षष्ठ्या लुक्। पैजवनस्य पिजवनपुत्रस्य सुदासः क्षेत्रं मंदं गृहं वा अविद्रन रक्षत। अपि चास्य सुदासः क्षत्रं बलं दूणाशं दुर्नशं अविनाशि अजरं अशिथिलं चास्तु ॥

इति पंचमस्य द्वितीयेऽष्टाविंशो वर्गः ॥

हरी अश्वौ युनज्मि रथे योजयामि । ब्रह्माण्यस्मदीयानि स्तोत्राणि वाजं बलिनं त्वां व्यंतु गच्छंतु ॥

७. हे सहसावन् बलवन् हरिवो हरिवन्निंद्र ते तव अस्यां स्तोत्रेणास्माभिः क्रियमाणायां परिष्टावन्वेषणायां पराहै परादानाय अघाय अहंत्रे वयं मा भूम । किंच नोऽस्मान् अवृकेभिः अबाधकैर्वरूथैः वारयंत्युपद्रवेभ्य इति वरूथानि रक्षणानि तैस्त्रायस्व पाहि । तव सूरिषु स्तोतृषु मध्ये वयं प्रियासः प्रियाः स्याम भूयास्म ॥

(P. 36.) ८. हे मघवन् धनवन्निंद्र ते तव अभिष्टावभ्येषणे नरः स्तोत्राणां नेतारो वयं सखायः समानख्यानाः प्रियासः प्रियाश्च संतः शरण इत् गृह एव मदेम मोदेम । किंच अतिथिग्वाय पूज्यानतिथीन् गच्छतीत्यतिथिग्वः तस्मै सुदासे दिवोदासाय वा नर्यायाव्र राज्ञे शंस्यं शंसनीयं सुखं करिष्यन् कुर्वन् तुर्वशं राजानं नि शिशीहि वशं कुरु । याद्वं च राजानं निशिशीहीत्यर्थः ॥

९. हे मघवन् धनवन्निंद्र ते तव नु अद्य अभिष्टावभ्येषणे ये नरः उक्थशासः उक्थानां शंसितारः उक्था उक्थानि शस्त्राणि सद्यश्चित् सद्य एव शंसंति । किंच ते तव हवेभिः स्तोत्रैः पणीन् अप्रदानशीलान् वणिजोऽपि व्यदाशन् । धनानि विशेषेणादापयन्नित्यर्थः । तानस्मान् तस्मै युज्याय सख्याय तत्सख्यमनुवर्तयितुं वृणीष्व परिगृहाण ॥

१०. हे नृतम नेतृतमेंद्र तुभ्यं नरां नेतॄणां ये एते स्तोमाः संघाः मघानि मंहनीयानि हवींषि ददतो ददतोऽस्मदंचोऽस्मदभिमुखाः अभूवन्निति शेषः । तेषां नृणां वृत्रहत्ये संग्रामे शिवः कल्याणकृत् भूः भव । सखा च भूः अविता रक्षिता च भूः ॥

११. हे शूरेंद्र नु अद्य स्तवमानः स्तूयमानो ब्रह्मजूतो ब्रह्मणा स्तोत्रेण प्रेरित तन्वा शरीरेण वावृधस्व । अपि च नोऽस्मभ्यं वाजानन्नान्युप मिमीहि प्रयच्छेत्यर्थः । स्तीन् गृहांश्चोपमिमीहि । स्पष्टमन्यत् ॥

इति पंचमस्य द्वितीये त्रिंशो वर्गः ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये

पंचमाष्टके द्वितीयोऽध्यायः समाप्तः ॥

---

20.

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरम् ॥

उग्रो जज्ञ इति दशर्चं तृतीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैंद्रम् । तथा चानुक्रम्यते । उग्रो दशोति । आभिप्लविके चतुर्थेऽहनि निष्केवल्य एतत्सूक्तं निविद्धानम् । सूत्रितं च । चतुर्थस्याग्नि जज्ञ इति निष्केवल्यमिति । महाव्रतेऽपि निष्केवल्य एतत्सूक्तम् । तथैव पंचमारण्यके सूत्रितम् । उग्रो जज्ञे वीर्याय स्वधावानितु ब्रह्माण्यैरत श्रवस्येति । नैमित्तिकचातुर्मास्येषु वैश्वदेवस्य स्थाने प्रथमं पृष्ठ्यमहः । तत्रापि निष्केवल्ये एतत्सूक्तं निविद्धानम् । सूत्रितं च । जनिष्ठा उग्र उग्रो जज्ञ इति माध्यंदिन इति ॥

१. स्वधावान् बलवान् उग्रः ओजस्वी उद्गूर्णो वेन्द्रः वीर्याय वीर्यं कर्तुं जज्ञे बभूव । नर्यो नरहितः सन् यत्कर्म करिष्यन् भवति तदपः कर्म चक्रिः कर्तैव । चक्रिरिति क्रिन्प्रत्ययस्य लिड्वद्भावात् लोकाव्ययनिष्ठाखलर्थतृनामिति षष्ठीप्रतिषेधः । अपि च नृषदनं यज्ञगृहं युवा नित्यतरुणः सन् अवोभी रक्षणैः सार्धं जग्मिर्गंता महश्चिन्महतोऽप्येनसः पापान्नोऽस्माकं त्राता रक्षिता च भवेति ॥

(P. 37.) २. इंद्रः शूशुवानो वर्धमानः सन् वृत्रमसुरं हंता भवति । तृन्नंतत्वादत्र षष्ठ्यभावः । वीरो वीरः सन् जरितारं स्तोतारं तु क्षिप्रमूती ऊत्या रक्षया प्रावीत् प्ररक्षत् । सुदासे राज्ञे लोकं जनपदं कर्ता च । यद्वा सुदासे कल्याणदानाय यजमानाय लोकं कर्ता च भवति । इहाप्युत्तरत्रापि तृन्नंतत्वात्षष्ठ्यभावः । अह वा उ इति त्रयः पूरणाः । दाशुषे यजमानाय वसु धनं मुहुर्भूयोभूयो दाता च भूत् अभूत् । आ इति चार्थे ॥

३. युध्मो योद्धा अनर्वा अभिगंतृरहितो युद्धेष्वपराङ्मुखो वा खजकृत् युद्धकृत । खले खजे इति युद्धनामसु पाठात् । समद्वा समत् कलहः तद्वान् । शूरः शौर्योपेतो जनुषा जन्मना स्वभावत एव सत्राषाट् बहूनामभिभविता अषाळ्हः स्वयं च केनाप्यनभिभूतः स्वोजाः सुबलः ईमयमिंद्रः पृतनाः शत्रूणां सेना व्यासं विक्षिपति । अध अपि च शत्रूयंतं शात्रवमाचरंतं विश्वं सर्वं जघान हंति ॥

४. हे तुविष्मो बहुधनेंद्र महित्वा महत्त्वेन तविषीभिर्बलैश्च उभे चित् उभे अपि रोदसी द्यावापृथिव्यौ आ पप्राथ आपूरितवानसि । अथ परोक्षस्तुतिः । हरिवानश्ववानिंद्रो वज्रं नि मिमिक्षन् शत्रुषु पातयन् मदेषु यज्ञेषु निवित्सु वा अंधसा सोमेन समुवोच संसेव्यते संगच्छते वा । उच समवाये इति धातुः । वा इति पूरणः ॥

५. वृषा सेक्ता पिता कश्यपो वृषणं कामानां वर्षितारमिंद्रं रणाय युद्धार्थं जजान । जन जनन इति धातुः । नर्यं नरहितं तमु तमेवेंद्रं नारी चित् अदितिरपि ससूव सुषुवे । अथापि च य इंद्रो नृभ्यो नृणां सेनानीः सेनानां नेता सन् प्रास्ति प्रभवति स इंद्र इनः सर्वस्य जगतः ईश्वरो भवति । इन इतीश्वरनामसु पाठात् । सत्वा शत्रूणां सादकश्च गवेषणो गवामन्वेष्टा च धृष्णुः शत्रूणां धर्षकश्च भवतीति शेषः ॥

इति पंचमस्य तृतीये प्रथमो वर्गः ॥

६. यो जनोऽस्येंद्रस्य घोरं शत्रूणां बाधकं मनो यज्ञैराविवासात् परिचरति स जनः । नु इति प्रतिषेधे वर्तते । चिदित्येवकारार्थे । नूचित् नैव भ्रेषते स्थानात् न भ्रश्यति । न रेषत् नैव क्षीयते । अपि च यो जनो दुवांसि परिचरणसाधनानि स्तोत्रशस्त्राणींद्रे दधते निधत्ते तस्मै जनाय ऋतपाः यज्ञपाता ऋतेजा यज्ञे जातश्च स इंद्रो राये धनाय क्षयत् निवसति भवेदित्यर्थः ॥

(p. 38.) ७. हे चित्र चायनीयेंद्र यद्धनं पूर्वः पिता ज्येष्ठो भ्राता वा अवराय पुत्राय कनीयसे वा शिक्षन् प्रयच्छन् । शिक्षतिर्दानकर्मा प्रीणाति शिक्षतीति दानकर्मसु पाठात् । भवतीति शेषः । यच्च देष्णं देयं धनं ज्यायान् ज्येष्ठः कनीयसोऽवरान् प्राशुयात् । यच्चापि धनं पितृतो लब्ध्वा पुत्रोऽमृत इत् अमृत एव सन् पितृगृहं विहाय दूरः पर्यासीत आस्ते तत् त्रिविधं चित्र्यं चायनीयं रयिं धनं नोऽस्मभ्यमाभर आहर ॥

८. हे इंद्र ते तुभ्यं प्रियः सखा जनो ददाशत हवींषि दद्यात् हे अद्रिवः स सखा ते तव निरेके दानेऽवस्थितः स्यात् । वयं च वसिष्ठाः अघ्नतोऽहिंसतस्ते तव अस्यां सुमतावनुग्रहबुद्धौ वर्तमानाश्चनिष्ठाः स्तुतिमत्तराः अतिशयेनान्नवंतो वा ॥ चनोऽन्नम् । नृपीतौ नृणां रक्षके वरूथे गृहे वरणीये वा धने स्याम वसेम भवेम वा ॥

९. हे मघवन् धनवन्निंद्र ते त्वदर्थं वृषा सेक्ता एष स्तोम सोमः सूयमानोऽचिक्रदत् क्रंदति । उतापि च स्तामुः स्तोता अक्रपिष्ट । अस्तौत् । अपि च हे शक्र ते तव जरितारं स्तोतारं मां राया धनस्य कामोऽभिलाष आगन् आगतः । अतस्त्वं वस्वो धनम् । कर्मणि षष्ठी । नोऽस्मभ्यं अंग क्षिप्रं आशकः धेहि ॥

१०. हे इंद्र स त्वं त्वयतायै इषे त्वया दत्तमन्नं भोक्तुं नोऽस्मान् धाः धारय । ये च मघवानो हविष्मंतः त्मना स्वयमेव जुनंति हवींषि त्वां प्रति प्रेरयंति तानपि त्वयताया इषे धाः । अपि च वस्वीषु अत्यंतं प्रशस्तासु स्तुतिषु ते तव जरित्रे स्तोत्रे मह्यं शक्तिः सामर्थ्यमस्तु । यद्वा जरित्रे मह्यं ते तव वस्वी षु प्रशस्ता शक्तिर्दानमस्तु । स्पष्टमन्यत् ।

इति पंचमस्य तृतीये द्वितीयो वर्गः ॥

---

## 21.

असावि देवमिति दशर्चं चतुर्थं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैंद्रम् । तथा चानुक्रांतम् । असावीति । माध्यंदिनसवने मैत्रावरुणस्योन्नीयमानमिदं सूक्तम् । असावि देवमिहोप यातेत्यनुसवनमिति । इंद्रस्य वृत्रघ्नः पशावभि क्रत्वेति वपाया अनुवाक्या । सूत्रितं च । अभि क्रत्वेंद्र भूरध ज्मन् त्वं महाँ इंद्र तुभ्यं ह क्षा इति ॥

१. देवं दीप्तं गोऋजीकं गोभिः संस्कृतं गव्येन मिश्रितमित्यर्थः । अंधः सोमरूपमन्नमसावि अभिषुतम् । ईमयमिंद्रोऽस्मिन्नभिषुते सोमरूपेऽधसि जनुषा स्वभावत एव अभ्युवोच नितरां संगतो भवति । अथ प्रत्यक्षस्तुतिः । हे हर्यश्व त्वा त्वां यज्ञैः स्तोत्रैर्हविर्भिर्वा बोधामसि बोधयामः । अंधसः सोमस्य मदेषु नोऽस्माकं स्तोमं स्तोत्रं बोध बुध्यस्व च ॥

(P. 39.) २. यज्ञं प्रयंति यष्टारः बर्हिश्च विषयंति स्तृणंति विषिः स्तरणकर्मा विदथे यज्ञे सोममादो ग्रावाणश्च दुध्रवाचो दुर्धरवाचः भवंति । अपि च यशसो यशस्विनो दूरउपब्दः दूरे उपब्दिः शब्दो येषां ते दूरउपब्दः । नृषाचः नॄन्नेतॄनृत्विजः सचंत इति नृषाचः । वृषणो ग्रावाणो गृभाद्गृहात् गृहमध्यमग्रावा तस्मात् । आ इति चार्थे । निभ्रियंते अभिषववेलायां निगृह्यंते । उ इति पूरणः ॥

३. हे शूरेंद्र त्वं अहिना वृत्रेण परिष्ठिता आक्रांताः पूर्वीर्बह्वीरप उदकानि स्रवितवै स्रवितुं कः अकार्षीः। धेना नद्यश्च त्वत्तो हताः रथ्यो न रथिन इव वावक्रे निर्गच्छंति। वकि कौटिल्य इति धातुः। विश्वा विश्वानि कृत्रिमाणि भुवनानि च भीषा त्वत्तो भीत्या रेजंते कंपंते ॥

४. इंद्रो नर्याणि नरहितानि विश्वा विश्वानि अपांसि कर्माणि विद्वान् जानन् आयुधेभिरायुधैः भीमो भयंकरः सन् एषाम्। कर्मणि षष्ठी। एतानसुरान् विवेष व्याप्तवान्। पुरश्च तेषां वि दूधोत् अकंपयत्। अपि च जर्हृषाणः हृष्यन् महिना महिम्ना युक्तो वज्रहस्तः सन् तान् विजघान ॥

५. हे इंद्र यातवो राक्षसाः नोऽस्मान् जूजुवुः न हिंस्युः। जूजुवुरिति हिंसाक्रियः पृथक्करणक्रिया वा। अपि च हे शविष्ठ बलवत्तमेंद्र वंदना वंदनानि रक्षांसि वेद्याभिः वेद्याभ्यः प्रजाभ्यः नोऽस्मान् जूजुवुः न पृथक्कुर्वंतु। किंच अर्यः स्वामी स इंद्रः विषुणस्य विषमस्य जंतोः प्राणिनः शासने शर्धत् उत्सहेत। अथ च शिश्नदेवाः। शिश्नेन दीव्यंति क्रीडंति इति शिश्नदेवाः अब्रह्मचर्या इत्यर्थः। नोऽस्माकं ऋतं यज्ञं सत्यं वा मा अपि गुः मा निगमन्। तथा च यास्कः। स उत्सहतां यो विषुणस्य जंतोर्विषमस्य मा शिश्नदेवा अब्रह्मचर्याः। शिश्नं श्नथतेः। अपिगुर्ऋतं नः सत्यं वा यज्ञं वेति ॥

इति पंचमस्य तृतीये तृतीयो वर्गः ॥

६. हे इंद्र त्वं क्रत्वा कर्मणा क्ष्मन् पृथिव्यां वर्तमानान् जंतून् अभि अभूः अभ्यभूः। अथ अपि च ते तव महिमानं रजांसि सर्वे लोका न विव्यक्र। व्यचिर्व्याप्तिकर्मा। न व्याप्नुवन्नित्यर्थः। स्वेना आत्मीयेन च शवसा बलेन वृत्रं जघंथ त्वमवधीः। शत्रुश्च युधा युद्धेन ते तव अंतं हिंसां न विविदत् न लब्धवान् ॥

( P. 40 ) ७. पूर्वे देवाश्चिदसुरा अपि असुर्याय बलाय क्षत्राय। क्षदिर्हिंसाकर्मा। बलं हिंसां चोभे कर्तुमित्यर्थः। हे इंद्र ते तव सहांसि बलानि अनु ममिरे। हीने इत्यनुः कर्मप्रवचनीयः। तव बलेभ्यो हीना ममिर इत्यर्थः। तथा च निगमांतरम्। अनु ते द्यौर्बृहती वीर्यं ममेति। अथ परोक्षस्तुतिः। इंद्रः शत्रून्विषह्य मघानि मंहनीयानि धनानि दयते भक्तेभ्यः प्रयच्छति। अपि चेंद्रं वाजस्यान्नस्य सातौ लाभार्थं जोहुवंत स्तुवंति स्तोतार आह्वयंति वा ॥

८. हे इंद्र ईशानं त्वां कीरिः स्तोता। कारुः कीरिरिति स्तोतृनामसु पाठात्। वसिष्ठः अवसे रक्षणाय जुहाव हि स्तौति हि ह्वयति वा। चिदिति पूरणः। अपि च हे शतमूते बह्वूतींद्र अस्मे अस्माकं भूरेः प्रभूतस्य भोगगम्य धनस्य अवो रक्षा बभूथ बभूविथ। अभिक्षत्तुरभिहिंसकस्य त्वावतः त्वत्सदृशस्य वरूता वारयिता च भव ॥

९. हे इंद्र ते तव नमोवृधासो नमसा स्तुत्या हविषा वा वर्धयितारो वयं विश्वह सर्वदा सखायः स्याम भवेम। महिना महिम्ना तरुत्र अत्यंतं तारकेंद्र ते तव अवसा रक्षणेन समीके संग्रामे अर्योऽभीतिमभिगमनं वनुषां हिंसकानां शवांसि बलानि च वन्वंतु स्तोतारो हिंसंतु ॥

१०. इयमृक् व्याख्यातचरी (२०. १०.) ॥

इति पंचमस्य तृतीये चतुर्थो वर्गः।

## 22.

पिबा सोममिंद्र मंदतु त्वेति नवर्चं पंचमं सूक्तम् । अनुक्रम्यते च । पिब नव वैराजमृते ऽत्यामिति । वसिष्ठ ऋषिः । आदितोऽष्टौ विराजो नवमी त्रिष्टुप् । इंद्रो देवता। दशरात्रे चतुर्थेऽहनि निष्केवल्यशस्त्रे पिबा सोममिंद्रेति षट् स्तोत्रियानुरूपौ । सूत्रितं च । वैराजं चेत्पृष्ठं पिबा सोममिंद्र मंदतु त्वेति षट् स्तोत्रियानुरूपाविति । महाव्रतेऽपि निष्केवल्य आद्याः षडृचः । सूत्रितं च । पिबा सोममिंद्र मंदतु त्वेति षडिति । आद्या निष्केवल्यशस्त्रयाज्या । सूत्रितं च । पिबा सोममिंद्र मंदतु त्वेति याज्येति । चतुर्थेऽहनि माध्यंदिनसवने होत्रकशस्त्रेषु सप्त विराजस्त्रींस्तृचान् कृत्वैकैकस्तृचः शंसनीयः । तत्र न ते गिर इत्याद्यश्चतस्र ऋचः । सूत्रितं च । न ते गिरो अपि मृष्ये तुरस्य प्र वो महे महिवृधे भरध्वमिति ॥

१. हे इंद्र सोमं पिब । स सोमः त्वा त्वां मंदतु मादयतु । हे हर्यश्व ते त्वदर्थं सोतुरभिषवकर्तुः बाहुभ्यामर्वा न रश्मिभ्यामश्व इव सुयतः सुष्ठु परिगृहीतः अद्रिर्ग्रावा यं सोमं सुषाव ॥

(P. 41.) २. हे हर्यश्व ते तव यो युज्यो युग्यः चारुः समीचीनो मदो मदकरः सोमोऽस्ति विद्यते । येन च पीतेन सोमेन वृत्राणि हंसि हे प्रभूवसो प्रभूतधनेंद्र त्वां स सोमो ममत्तु मादयतु ॥

३. हे मघवन् धनवन्निंद्र ते तव प्रशस्तिं स्तुतिरूपां यां वाचं वसिष्ठः अर्चति वदति तामिमां मे वसिष्ठस्य संबंधिनीं वाचं सु आ बोध सुष्ठुभिबुध्यस्व । किंच इमा इमानि ब्रह्म ब्रह्माणि सधमादे यज्ञे जुषस्व सेवस्व ॥

४. हे इंद्र विपिपानस्य विपीतवतो विपिबतो वा ममाद्रेर्ग्राव्णो हवमाह्वानं श्रुधि शृणु । तथा च निगमांतरम् । ग्रावभ्यो वाचं वदता वदद्भ्य इति । विप्रस्य प्राज्ञस्य वसिष्ठस्य अर्चतः स्तुवतो मनीषां स्तुतिं बोध बुध्यस्व च । इमा इमानि क्रियमाणानि दुवांसि परिचरणानि अंतमा अंतिकतमानि बुद्धिस्थानि सचा सह सहायभूतः सन्त्वा कृष्व कुरु च ॥

५. हे इंद्र तुरस्य शत्रूणां हिंसकस्य ते तव गिरः स्तुतीः अनुर्यस्य । द्वितीयार्थे षष्ठी । त्वदीयमसुर्यं बलं विद्वान् जानन्नहं नापि मृष्ये मृषिर्मार्जनकर्मा न मार्जयामि न परित्यजामीत्यर्थः । सुष्टुतिं शोभनां स्तुतिं च नापिमृष्ये । मृषेर्मार्जनकर्मत्वमन्यत्रापि दृश्यते । तद्यथा। मा नो अग्ने सख्या पित्र्याणि प्र मर्षिष्ठा इति । किंतु स्वयशोऽसाधारणयशः ते तव नाम स्तोत्रं सदैव विवक्मि ब्रवीमि ॥

इति पंचमस्य तृतीये पंचमो वर्गः॥

६. हे मघवन् ते तव सवना सवनानि सोमाभिषवणानि भूरि भूरीणि मानुषेष्वस्मासु। वर्तंत इति शेषः । मनीषी स्तोता त्वामित्त्वामेव भूरि हवते नितरां स्तौति । अतोऽस्मदस्मत्त आरे दूरे ज्योक् चिरकालं मा कः आत्मानं मा कार्षीः । क्षिप्रमात्मानमस्मदासन्नं कुर्वित्यर्थः ॥

नक्षन् व्याप्नुवन् । अपि च त्वं नोऽस्मान् नियुतो वायुर्न वायुरिव अच्छ याहि अभियाहि । त्वं हि धीभिः प्रज्ञाभिः कर्मभिर्वा वाजानन्नानि विदयसे स्तोतृभ्यः प्रयच्छसि ॥

(P. 43.) ५. हे इंद्र त्वा त्वां त एते मदा मदकराः सोमाः मादयंतु । अपि च जरित्रे स्तोत्रे शुष्मिणं बलवंतं तुविराधसं बहुधनं पुत्रं प्रयच्छतीति शेषः। हे शूर त्वं देवत्रा देवेषु एक एव मर्तान्मनुष्यान् दयसे दयतिरनुकंपार्थः । अस्मिन् सवने यज्ञे मादयस्व॥

६. वसिष्ठासो वसिष्ठाः वज्रबाहुं वज्रकल्पनाहुं वृषणं कामानां वर्षितारमिंद्रं एवेत्त उक्तेन प्रकारेणैव अर्कैरर्चनीयैः स्तोत्रैः अभ्यर्चंति अभिपूजयंति । स्तुतः स इंद्रो नोऽस्मभ्यं वीरवत्पुत्रादियुक्तं गोमद्गोयुक्तं च धनं धातु ददातु । स्पष्टमन्यत् ॥

इति पंचमस्य तृतीये सप्तमो वर्गः ॥

---

## 24.

योनिष्ट इंद्र सदने अकारीति षडृचं सप्तमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैंद्रम् । अनुक्रम्यते च । योनिरिति । महाव्रते निष्केवल्य एतत्सूक्तम् । सूत्रितं च । योनिष्ट इंद्र सदने अकारीत्येतस्य चतस्रः शस्त्वोत्तमामुपसंतत्योपोत्तमया परिदधातीति ॥

१. हे इंद्र ते तव सदने सदनार्थं योनिः स्थानमकारि । हे पुरुहूत नृभिर्मरुद्भिः सार्धं तं योनिं आप्रयाहि । नोऽस्माकं यथाविता रक्षिता असः भवसि । नोऽस्माकं वृधे वर्धनाय चासः। तथा च वसूनि ददः अस्मभ्यं देहि । सोमैरस्मदीयैः ममदः मादय च ॥

२. हे इंद्र द्विबर्हाः । षष्ठ्यर्थे प्रथमा । द्विबर्हसः द्वयोः स्थानयोः परिवृढस्य ते तव मनो गृभीतमस्माभिः परिगृहीतम् । सोमश्च सुतोऽभिषुतः । मधूनि च परिषिक्ता पात्रेषु परिषिक्तानि । विसृष्टधेना विसृष्टजिह्वा मध्यमस्वरेणोचार्यमाणा सुवृक्तिः सुसमाप्तिरियं मनीषा स्तुतिरिंद्रं जोहुवती भृशमाह्वयंती भरते संभ्रियते च ॥

३. हे ऋजीषिन्निंद्र नोऽस्माकमिदं बर्हिरिमं यज्ञं सोमपेयाय दिवः स्वर्गाद् आयाहि आगच्छ पृथिव्या अंतरिक्षाच । आपः पृथिवीत्यंतरिक्षनामसु पाठात् । आयाहि । अपि च तवसं प्रवृद्धं बलवंतं वा मद्र्यंचं मदभिमुखं त्वा त्वां आंगूषं स्तोत्रं अच्छाभि मदाय मदार्थं हरयोऽश्वा वहंतु ॥

(P. 44.) ४. हे हर्यश्व हरिनामकाश्व सुशिप्र शोभनहनो इंद्र विश्वाभिः सर्वाभिः ऊतिभी रक्षाभिः सजोषाः संगतः स्थविरेभिर्वृद्धैर्मरुद्भिः सह वरीवृजत् शत्रून् भृशं हिंसन् अस्मे अस्मभ्यं वृषणं कामानां वर्षितारं शुष्मं बलवंतं पुत्रं दधत् प्रयच्छन् ब्रह्म स्तोत्रं जुषाणः सेवमानः नोऽस्मानायाहि ॥

५. महे महत उग्राय उद्गूर्णाय ऊर्जस्विने वा वाहे विश्वस्य वोढ्रे इंद्राय धुरीव रथस्य अत्यो न अश्व इव वाजयन् बलं कुर्वन् एष स्तोमः अधायि व्यधायि । अथ प्रत्यक्षस्तुतिः । हे इंद्र यं त्वां अयमर्कः स्तोता वसूनां वसूनि धनानि ईट्टे याचते स त्वं नोऽस्मासु द्यां दिवीव श्रोमतं श्रवणीयमन्नं पुत्रं वा अधिधाः अभिधेहि ॥

६. हे इंद्र नोऽस्मान् एव एवं वार्यस्य । तृतीयार्थे षष्ठी । वरणीयेन धनेन पृधि पूरय । ते तव महीं महतीं सुमतिमनुग्रहबुद्धिं वेविदाम भृशं लभेमहि । मघवद्भ्यो हविष्मद्भ्योऽस्मभ्यं सुवीरां शोभनपुत्रादियुतां इषमन्नं पिन्व प्रयच्छेत्यर्थ । स्पष्टमन्यत् ॥

इति पंचमस्य तृतीयेऽष्टमो वर्गः ॥

---

25.

आ ते मह इंद्रेति षडृचमष्टमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैंद्रम् । आ त इत्यनुक्रांतम् । महाव्रते निष्केवल्य इदमादीनि पंच सूक्तानि । सूत्रितं च । आ ते मह इंद्रोत्युग्रेति पंच सूक्तानीति ॥

१. हे उग्र उद्गूर्णौजस्विन्निंद्र यत् यदा समन्यवः समो मन्युरभिमानो यासां ताः समन्यवः सेनाः समरंत युध्यंते युद्धार्थं संगच्छंते वा तदा नर्यस्य नरहितस्य महो महतः ते तव बाह्वोः स्थिता दिद्युत् आयुधम् । दिद्युत् हेतिरिति वज्रनामसु पाठात् । ऊती ऊत्यै अस्मद्रक्षायै आ पतात् आपततु । तव विष्वद्र्यक् विष्वग्गंतृ मनश्च मा विचारीत् अस्मास्वेव स्थिरं भवतु ॥

२. हे इंद्र दुर्गे युद्धे ये मर्तासो मर्ताः अभि अभिमुखाः । संतो नोऽस्मान् अमंति अभिभवंति तानमित्रान् शत्रून् निश्नथिहि निजहि । अपि च निनित्सोः अस्मान्निंदितुमिच्छतो नरस्य तं शंसमाशंसनं आरे दूरे कृणुहि कुरु । अपि च नोऽस्मभ्यं वसूनां धनानां संभरणं समूहं आ भर आहर ॥

(P. 45.) ३. हे शिप्रिन् उष्णीषिन्निंद्र ते त्वदीयाः शतं बह्व्यः ऊतयो रक्षाः सुदासे शोभनदानाय मह्यं संतु । सहस्रं शंसाः शंसनीयाः कामाश्च संतु । उत अपि च रातिर्धनमस्तु । वनषो हिंसकस्य मर्त्यस्य वधः हिंसासाधनमायुधं च जहि । अपि चास्मे अधि अस्मासु द्युम्नं दीप्तिमदन्नं यशो वा रत्नं च धेहि । तथा च यास्कः । द्युम्नं द्योततेर्यशो वान्नं वा । अस्मे द्युम्नमधि रत्नं च धेहि अस्मासु द्युम्नं च रत्नं धेहीति ॥

४. हे इंद्र त्वावतः त्वत्सदृशस्य क्त्वे कर्मणे अस्मि भवामि हि । हे शूर अवितुः विश्वस्य रक्षितुः त्वावतस्त्वत्सदृशस्य रातौ दाने च अस्मीति शेषः । हे तविषीवो बलवन् उग्र ओजस्विन्निंद्र विश्वेत् विश्वान्येव अहानि ओकोऽस्माकं स्थानं कृणुष्व कुरु । हे हरिवो हरिवन् न मर्धीः अस्मान्न हिंस्याः ॥

५. एते वयं वसिष्ठाः हर्यश्वाय हरिनामकाश्वायेंद्राय शूषं सुखकरं स्तोत्रं कुत्साः कुर्वाणाः । करोतेः कुत्सशब्दनिष्पत्तिः । इंद्रे देवजूतं देवैः प्रेरितं सहो बलं इयानाः याचमानाः तरुत्राः दुर्गाणि तीर्णाः संतो वाजं बलं सनुयाम लभेमहि । अपि च हे शूर वृत्रा वृत्राणि शत्रून् सुहना हंतुं सुशकानि सत्रा सर्वदा कृधि कुरु ॥

६. इयं व्याख्यातचरी (२४. ६). ॥

इति पंचमस्य तृतीये नवमो वर्गः ॥

---

## 26.

न सोम इंद्रमिति पंचर्चं नवमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैंद्रम्। तथा चानुक्रम्यते। न सोमः पंचेति। महाव्रत उक्तो विनियोगः॥

१. मघवानं धनवंतमिंद्रं असुतो न अनभिषुतः सोमो न ममाद न तर्पयति। सुतासोऽभिषुता अपि सोमाः अब्रह्माणः स्तोत्रहीना न ममदुः। ममादेत्येतदाख्यातं बहुवचनांततया विपरिणतं सदत्र संबध्यते। अत एव त्रिष्वपि सवनेषु पावमानैः स्तोत्रैः स्तुता एव सोमा हूयंते। अपि च नोऽस्मदीयं यदुक्थमिंद्रो जुजोषत् सेवेत। यथा च नृवत् राजेव आदरेण शृणवत् शृणुयात् तथा नवीयो नवतरं उक्थं शस्त्रं तस्मा इंद्राय जनये पठामीत्यर्थः॥

(P. 46.) २. यद्यस्मात् उक्थ उक्थे शस्त्रे शस्त्रे क्रियमाणे सोमो मघवानमिंद्रं ममाद मादयति। नीथे नीथे स्तोत्रे स्तोत्रे क्रियमाणे सुतासोऽभिषुताः सोमा मादयंति। तस्मात् ईमेनमिंद्रं सबाधः परस्परं मिलिताः समानदक्षाः समानोत्साहा ऋत्विजः पुत्राः पितरं न पितरमिव अवसे तर्पणाय रक्षणाय वा हवंते शस्त्रैः स्तोत्रैश्च स्तुवंति॥

३. वेधसः स्तोत्राणां विधातारः सुतेषु सोमेष्वभिषुतेषु यानि कर्माणि ब्रुवंति तानि वृत्रवधादीनि कर्माणींद्रः पूर्वस्मिन्काले चकार। नूनं संप्रति अन्या अन्यानि कर्माणि कृणवत् कुर्यात्। अपि च स इंद्रः सर्वाः पुरः शत्रुनगरीः समानः समवृत्तिः पतिर्जनीरिव जाया इव सु निमामृजे सम्यक् शोधयेत्॥

४. यस्येंद्रस्य मिथः परस्परं तुरो बाधमानाः संश्लिष्टा वा पूर्वीः पूर्व्यो बह्व्यः ऊतयो रक्षाः संति। तं एव एवंगुणकमाहुः पूर्वं ऋषयः। उत अपि चाद्यापि स इंद्रो मघानां मंहनीयानां धनानां विभक्ता दातेति तरणिरापदस्तारयितेति वृण्वे श्रूयते। तस्य च प्रसादादस्मे अस्मान् प्रियाणि भद्राणि कल्याणानि सचंत सेवंताम्॥

५. वसिष्ठो नृन् नृणाम्। षष्ठ्यर्थे द्वितीया। ऊतये रक्षायै कृष्टीनां प्रजानां वृषभं कामानां वर्षितारं इंद्रं एव एवं पूर्वोक्तप्रकारेण गृणाति स्तौति। अथ प्रत्यक्षस्तुतिः। हे इंद्र नोऽस्मभ्यं सहस्रिणः सहस्रसंख्याकान्वाजानन्नान्युप माहि प्रयच्छेत्यर्थः। स्पष्टमन्यत्॥

इति पंचमस्य तृतीये दशमो वर्गः॥

---

## 27.

इंद्रं नर इति पंचर्चं दशमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैंद्रम्। इंद्रं नर इत्यनुक्रांतम्। महाव्रते निष्केवल्य एतत्सूक्तमुक्तं तृतीयत्वेन। ऐंद्रे पशौ वपापुरोडाशहविषामाद्या-

ज्जिनः कर्मणामनुष्ठात्रा । सूचितं च । इंद्रं नरो नेमधिता हवंत इत्युक्तं नो लोकमनु नेषि विद्वानिति ॥

१. यद्यदा पार्या युद्धतरणनिमित्ताः प्रसिद्धाः धियः कर्माणि युनजते प्रयुंजते तदा नरो नेतारो ऽमित्रं नेमधिता नेमधितौ संग्रामे हवंते ह्वयंति स त्वं शूरो नृषाता नृणां संभक्ता च शवसो बलस्य बलं चकानः कामयमानश्च सन् गोमति गावः संत्यस्मिन्निति गोमति तस्मिन् व्रजे गोष्ठे गोसमूहे नो ऽस्मानाभज प्रापय ॥

(P. 47.) २. हे पुरुहूत बहुभिराहूतेंद्र ते तव यः शुष्मो बलमस्ति तं शुष्मं सखिभ्यः स्तोतृभ्यो नृभ्यः शिक्ष देहि । अपि च हे मघवन् हि यस्माद्दृळ्हा दृढानि । पुरां द्वाराणि बिभेदिथेति शेषः । तस्मात्त्वं विचेताः विविक्तप्रज्ञः सन् परिवृतं तिरोहितं राधो धनमपवृधि अस्मभ्यमपवृणु । नेति संप्रत्यर्थे ॥

३. स इंद्रो जगतो जंगमस्य पश्वादेः यतो राजेश्वरो भवति । चर्षणीनां मनुष्याणां च राजा भवति । अधि क्षमि क्षमायां विषुरूपं नानारूपं यद्धनमस्ति तस्यापि राजा भवति । ततो दाशुषे यजमानाय वसूनि धनानि ददाति । स इंद्रोऽस्माभिरुपस्तुत एव सन् राधो धनं अर्वागस्मदभिमुखं चोदत् प्रेरयतु ॥

४. मघवा धनवान् दानो ददानः स इंद्रो नोऽस्माकं सहूती सहूत्या मरुद्भिः सहाह्वानेन वाजमन्नं नोऽस्मभ्यं ऊती ऊत्यै रक्षायै नू चित् क्षिप्रमेव नियमते प्रयच्छतु । यस्येंद्रस्य अनूना संपूर्णा अभिवीता अभिप्राप्ता दक्षिणा दानं सखिभ्यः स्तोतृभ्यो नृभ्यो वामं वननीयं धनं पीपाय दोग्धि ॥

५. हे इंद्र नोऽस्मभ्यं राये धनप्राप्तये नु क्षिप्रं वरिवो धनम् । वेदो वरिव इति धननामसु पाठात् । त्वं कृधि देहि । वयं ते तव मनो मघाय मंहनीयाय स्तुत्या आववृत्याम आवर्तयाम । स्पष्टमन्यत् ॥

इति पंचमस्य तृतीय एकादशो वर्गः ॥

---

28.

ब्रह्मा ण इंद्रेति पंचर्चमेकादशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैंद्रम् । ब्रह्मा ण इत्यनुक्रांतम् । महाव्रते निष्केवल्ये पंचमत्वेनास्य सूक्तस्य विनियोग उक्तः । अष्टमेऽहनि प्रउगशस्त्र आद्यस्तृच ऐंद्रः ॥

१. हे इंद्र त्वं विद्वान् जानन् नोऽस्माकं ब्रह्म स्तोत्रं उप याहि । ते तव हरयोऽश्वा अर्वांचोऽस्मदभिमुखाः युक्ताः संतु । हे विश्वमिन्व विश्वप्रीणयितरिंद्र त्वा त्वां विश्वे सर्वे मर्ता मनुष्याः चिद्धि यद्यपि विह्वंत पृथक् ह्वयंते तथाप्यस्माकमित् अस्माकमेव हवं शृणुहि शृणु ॥

(P. 48.) २. हे शवसिन् बलवन्निंद्र यद्यदा ऋषीणां ब्रह्म स्तोत्रं पासि रक्षसि स्तोत्रस्य रक्षणं नाम फलप्रदानम् । तदा ते तव महिमा हवं हवः स्तोता तं व्यानट् व्याप्नोतु । हे उग्र ओजस्विन्निंद्र यद्यदा हस्ते पाणौ वज्रं आ दधिषे धारयसि तदा

कृत्वा शत्रुवधादिना कर्मणा घोरः सन् अषाळ्हः शत्रुभिरनभिभूतो जनिष्ठाः अजनिष्ठाः अभवः ॥

३. हे इंद्र यत् यस्त्वं तव प्रणीती प्रणीत्या प्रणयनेन जोहुवानान् भृशं स्तुवतो नॄन् रोदसी द्यावापृथिव्यौ संनिनेथ संगमयसि। दिवि पृथिव्यां च स्तोतॄन् प्रतिष्ठापयसीत्यर्थः। स त्वं महे महते क्षत्राय धनाय। रयिः क्षत्रमिति धननामसु पाठात्। शवसे बलाय च। यजमानेभ्यो महद्धनं बलं च दातुमित्यर्थः। जज्ञे जज्ञिषे। हीति हेत्वर्थे। यत एवमतः कारणात् अतूतुजं अदातारमयजमानं तूतुजिर्दाता यजमानोऽशिश्नत्।श्नथतिर्हिंसाकर्मा तस्माल्लङर्थे लुङ्। हिनास्ति। चिदित्येवकारार्थे ॥

४. हे इंद्र दुर्मित्रासो दुष्टमित्रभूता बाधकाः क्षितयो जनाः पवंते अभिगच्छंति। पवतिर्गतिकर्मा। तेभ्यो धनमाच्छिद्य नोऽस्मभ्यमेभिः सात्त्विकैः अहभिरहोभिर्देशस्य देहि। किंच अनेनाः एनसां निहंता मायी प्रज्ञावान् वरुणो यदनृतं नोऽस्मासु प्रतिचष्टे अभिपश्यति तदनृतं हे इंद्र त्वत्प्रसादात् द्विता द्विधा अवसात् अवस्यतु विमोचयतु। तथा च यास्कः स्यतिरुपसृष्टो विमोचन इति ॥

५. यत् य इंद्रो महो महतो राधसः संराधकस्य रायो धनस्य। द्वितीयार्थे षष्ठी। संराधकं महद्धनं नोऽस्मभ्यं ददत् प्रायच्छत्। यश्चेंद्रोऽर्चतः स्तुवतो ब्रह्मकृतिं।क्रियमाणं ब्रह्म स्तोत्रं अविष्टोऽतिशयेन रक्षिता गंता भवति तमेनं मघवानं धनवंतमिंद्रं वोचेमेत् स्तुवेमैव। स्पष्टमन्यत् ॥

इति पंचमस्य तृतीये द्वादशो वर्गः ॥

---

## 29.

अयं सोम इंद्रेति पंचर्चं द्वादशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैंद्रम्। अयं सोम इत्यनुक्रांतम्। व्यूळ्हे दशरात्रे नवमेऽहन्ययं सोम इंद्रेति प्रउगशस्त्र ऐंद्रस्तृचः। सूत्रितं च। अयं सोम इंद्र तुभ्यं सुन्व आ तु ब्रह्मा ण इति। षोडशिशस्त्रे ब्रह्मन्वीर इत्येषा त्रिष्टुप्। सूत्रितं च। ब्रह्मन्वीर ब्रह्मकृतिं जुषाण इति त्रिष्टुबिति ॥

१. हे इंद्र तुभ्यं त्वदर्थमयमेष सोमः सुन्वे अभिषुतोऽभवत्। हे हरिवो हरिवन्निंद्र तदोकाः सेवनीयो यस्यासौ तदोकाः। नु क्षिप्रं आ याहि सुषुतस्य सम्यगभिषुतस्य चारोः शोभनस्यास्य सोमस्य। द्वितीयार्थे षष्ठी। सम्यगभिषुतं शोभनमित्यर्थः। नु क्षिप्रं पिब च। अपि च हे मघवन् इयानः उपगम्यमानो याच्यमानो वा त्वं मघानि धनानि ददः अस्मभ्यं देहि ॥

(P. 49.) २. हे ब्रह्मन् परिवृढ वीरेंद्र ब्रह्मकृतिं क्रियमाणं स्तोत्रं जुषाणः सेवमानः अर्वाचीनो ऽस्मदभिमुखः सन् हरिभिरश्वैः तूयं क्षिप्रं याहि। अस्मिन्नु अस्मिन्नेव सवने यज्ञे सु सुष्ठु मादयस्व च। नोऽस्मदीयानि इमा इमानि ब्रह्माणि स्तोत्राणि चोपशृणवः उपशृणु ॥

३. हे इंद्र ते तव सूक्तैरस्माभिः क्रियमाणैः स्तोत्रैः अरंकृतिः अलंकृतिः कास्ति कीदृशी भवति। हे मघवन् ते तव कदा नूनं कदा खलु दाशेम प्रीतिमुत्पादयेम। त्वाया

त्वत्काम नयैव विश्वा मतीः सर्वाः स्तुतीः आततनं करोमि। अध अतः कारणात् हे इंद्र मे मदीयानि इमा इमानि हवा हव्यानि स्तोत्राणि शृणवः शृणु॥

४. उत अपि च। घेति पूरणः। हे मघवन् येषां पूर्वेषामृषीणां स्तुतीरशृणोः ते पूर्वे ऋषयः पुरुष्या इत् पुरुषेभ्यो हिता एवासन्। अध अतो ऽहं त्वा त्वां जोहवीमि भृशं स्तौमि। अपि च हे इंद्र त्वं नो ऽस्माकं पितेव जनक इव प्रमतिः बंधुरसि॥

५. इयं व्याख्यातचरी ( २८. ५. )॥

इति पंचमस्य तृतीये त्रयोदशो वर्गः॥

---

30.

आ नो देवेति पंचर्चं त्रयोदशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैंद्रम्। आ नो देवेत्यनुक्रांतम्। प्रथमे छंदोमे प्रउगशस्त्र आ न इत्ययमैंद्रस्तृचः। सूत्र्यते हि। आ नो देव शवसा याहि शुष्मिन् प्र वो यज्ञेषु देवयंतो अर्चन्निति॥

१. हे देव द्योतमान शुष्मिन् बलवन्निंद्र नोऽस्मान् शवसा बलेन सार्धं आ याहि। अस्यास्मभ्यं देयस्य रायो धनस्य वृधो वर्धयिता च भव। हे नृपते सुवज्र महे महते नृम्णाय बलाय च भव। बाधो नृम्णमिति बलनामसु पाठात्। हे शूर महे महते क्षत्राय शत्रूणां हिंसकाय। क्षदिर्हिंसाकर्मा। पौंस्याय वीर्याय च भव॥

( P. 50.) २. हे इंद्र हव्यं ह्वातव्यं त्वा त्वां विवाचि विविधा वाचो यस्मिन् प्रादुर्भवंति तस्मिन्युद्धे शूराः पुरुषाः तनूष्वंगेषु रक्षणीयासु सूर्यस्य सातौ संभजने सरति गच्छतीत्याशुरत्र सूर्यो विवक्षितः तस्य चिरकालं प्राप्त्यर्थं हवंते ह्वयंति। विश्वेषु सर्वेषु जनेषु त्वमेव सेन्यः सेनार्होऽसि। अपि च त्वं वृत्राणि शत्रून् सुहंतुनामवज्रेण रंधय अस्मभ्यं वशीकुरु॥

३. हे इंद्र यद्यदा अहा अहानि सुदिना सुदिनानि व्युच्छान् व्युच्छेयुः। यद्यथा च समत्सु संग्रामेषु केतुं ज्ञानमुपमं अंतिकं दधः धारयेः तथा असुरो बलवान् होता देवानामाह्वाता अग्निः सुभगायास्माकं शोभनधनप्राप्तये देवान् हुवानो ह्वयन् अत्रास्मिन्यज्ञे निषीदत् न्यसीदत्॥

४. हे देव शूरेंद्र ते तव वयं वसिष्ठाः स्वभूताः। ये जनाः मदीयपुत्रपौत्रादयो मघानि मंहनीयानि हवींषि ददतः प्रयच्छंतः स्तवंत स्तुवंति तेऽपि तव स्वभूताः। तेभ्य उभयेभ्यः सूरिभ्यः स्तोतृभ्यः उपमं श्रेष्ठं वरूथं गृहं यच्छ प्रयच्छ। अपि च त उभे स्वाभुवः सुसमृद्धाः संतो जरणां जरां अश्नवंत प्राप्नुवंतु॥

५. एषा सिद्धा ( २८. ५. )॥

इति पंचमस्य तृतीये चतुर्दशो वर्गः॥

---

# 31.

प्र व इंद्रायेति द्वादशर्चं चतुर्दशं सूक्तं वसिष्ठस्यार्षं गैंद्रं। आद्यास्तिस्रो विराजः शिष्टा गायत्र्यः। तथा चानुक्रांतम्। प्र वो द्वादश गायत्रं त्रिविराडंतमिति। सूक्तविनियोगो लैंगिकः। प्रथमे रात्रिपर्याये मैत्रावरुणशस्त्रे प्र व इंद्रायेत्याद्यस्तृचः स्तोत्रियः। सूत्रितं च। प्र व इंद्राय मादनं प्र कृतान्यृजीषिण इति। अतिरात्रे प्रथमे पर्याये ब्राह्मणाच्छंसिशस्त्रे वयमिंद्र त्वायवोऽभीत्यनुरूपस्तृचः। तथा च सूत्रितम्। वयमिंद्र त्वायवोऽभि वार्त्रहत्यायेत्युत्तमावुद्धरेदिति। चतुर्थेऽहनि माध्यंदिनसवने होत्रकशस्त्र आरंभणीभ्य ऊर्ध्वं वैराज एकस्तृच आहवनीयः। तत्रर्चः प्र वो महे महिवृधे भरध्वमित्याद्यास्तिस्रः। सूत्रितं च। प्र वो महे महिवृधे भरध्वमिति चतस्रस्तिस्रश्च विराज इति॥

१. हे सखायो वो यूयं हर्यश्वाय सोमपाव्ने सोमानां पात्रे इंद्राय मादनं मदकरं स्तोत्रं प्र गायत॥

२. उत अपि च हे स्तोतः सुदानवे शोभनदानाय सत्यराधसे सत्यधनायेंद्राय उक्थं स्तोमं यथा नरोऽन्ये स्तोतारो द्युक्षं दीप्तैः साधनभूतं स्तोत्रं शंसंति तद्वत्त्वमपि शंस उच्चारय। इदिति पूरणः। वयं च चकृम स्तोत्रं करवाम॥

३. हे इंद्र त्वं नोऽस्माकं वाजयुरन्नकामो भव। हे शतक्रतो त्वं नोऽस्माकं गव्युर्गोकामो भव। हे वसो वासयितरिंद्र त्वं हिरण्ययुः हिरण्यकामोऽपि भव। छंदसि परेच्छायामपि दृश्यते क्यजिति क्यच्॥

४. हे वृषन् कामानां वर्षितरिंद्र त्वायवः त्वत्कामा वयं वसिष्ठाः त्वामभिप्रणोनुमः प्रकर्षेण स्तुमः। हे वसो वासयितरिंद्र अस्य इदं अस्मदीयं स्तोत्रं नु क्षिप्रं विद्धि अवधारय॥

५. हे इंद्र अर्यः स्वामी त्वं मन्यवे परुषवाक्यानां वक्त्रे निदे निंदित्रेऽराव्णेऽदात्रे नोऽस्मान् मा रीरधीः वशं मा कार्षीः। अपि अपि च त्वे त्वयि मम क्रतुः मदीयं स्तोत्रलक्षणं कर्म गच्छत्विति शेषः। अस्मदीयं स्तोत्रं भवच्चित्ते प्रविशत्वित्यर्थः॥

६. हे वृत्रहन् शत्रूणां हिंसकेंद्र त्वं वर्म अस्माकं कवचमसि कवचवद्रक्षकोऽसीत्यर्थः। सप्रथः सर्वतः पृथुश्चासि। पुरोयोधश्च पुरोयोद्धा चासि। त्वया युजा त्वया सहायेन प्रतिब्रुवे शत्रून् प्रतिब्रवीमि प्रतिहन्मीत्यर्थः॥

इति पंचमस्य तृतीये पंचदशो वर्गः॥

७. उत अपि च हे इंद्र त्वं महानसि सर्वाधिकोऽसि। हे इंद्र यस्य ते तव सहो बलं स्वधावरी अन्नवत्यौ रोदसी द्यावापृथिव्यौ अनुमंसाते अनुमन्येते। त्वदीयं सहः सर्वाधिकमित्यत्रोभावपि लोकौ विसंवादं न कुरुत इत्यर्थः॥

८. हे इंद्र तमुक्तगुणविशिष्टं त्वा त्वां सचावरी त्वया सह गंत्री यत्र यत्र त्वं यासि तत्र तत्र यांतीत्यर्थः। द्युभिः तेजोभिः नक्षमाणा व्याप्नुवंती मरुत्वती मरुतः स्तोतारः तद्वती वाणी स्तुतिः परिस्तुभन् परिस्तभ्नातु। परिस्तभ्नातिः परिग्रहार्थः परिगृह्णात्वित्यर्थः॥

९. हे इंद्र उप त्वामि सुतो [illegible] इंद्रो ऽस्मदीयाः सोमाः सुवन भवंति । कृष्टयः प्रजाश्च ते तुभ्यं संनमंत । [illegible] [illegible]स्त्वदर्थमेव जायंते प्रजाश्च त्वामेव प्रणमंतीतीन्द्रस्तुतिः ॥

१०. हे मदीयाः पुरुषाः वो यूयं मंहिष्ठाय महतां धनानां वर्धयित्रे मंहे महत इंद्राय [illegible] भरध्वं सोमान्प्रणयत । प्रचेतसे प्रकृष्टमनस इंद्राय सुमतिं सुष्टुतिं च प्र कृणुध्वं प्रकुरुत । अथ प्रत्यक्षस्तुतिः । हे इंद्र चर्षणिप्राः कामैः प्रजानां पूरयिता त्वं पूर्वीः [illegible] बह्वीः पूरयित्रीर्विशः प्रजाः प्र चर अभिगच्छ ॥

(P. 52.) ११. उरुव्यचसे पृथुव्याप्तये माहिने महते यस्मा इंद्राय सुवृक्तिं स्तुतिं ब्रह्म अन्नं हविश्च विप्राः प्राज्ञाः जनयंत जनयंति । तस्येंद्रस्य व्रतानि रक्षणादीनि कर्माणि धीराः प्राज्ञा देवा अपि न मिनंति न हिंसंति ॥

१२. सत्रा राजानं सर्वतो जगत ईश्वरं अनुत्तमन्युं केनाप्यनुत्तोऽप्रतिहतो मन्युः क्रोधो यस्य सः तमेवेंद्रं वाणीः स्तुतयः सचंते स्तोतॄणां शत्रूणामभिगमनाय [illegible] । [illegible] हर्यश्वायेंद्राय हर्यश्वमिंद्रं स्तोतुमित्यर्थः । [illegible] संवर्हय उत्साहय ॥

इति पंचमस्य तृतीये षोडशो वर्गः ॥

---

32.

मो षु त्वेति सप्तविंशत्यृचं पंचदशं सूक्तम् । अत्रेयमनुक्रमणिका । मो षु सप्ताधिका [illegible] तृतीया द्विपदा सौदासैरग्नौ प्रक्षिप्यमाणः शक्तिरंत्यं प्रगाथमालेभे सोऽर्धर्च उक्तेऽदह्यत । तं पुत्रोक्तं वसिष्ठः समापयतेति शाट्यायनकं वसिष्ठस्यैव हतपुत्रस्य [illegible] तांडकमिति । मंडलद्रष्टा वसिष्ठ ऋषिः इंद्र क्रतुं न इति प्रगाथस्यार्धर्चस्य [illegible] वसिष्ठपुत्रः शक्तिर्वसिष्ठो वा । इंद्रो देवता । अयुजो बृहत्यः युजः सतोबृहत्यः तृतीया तु द्विपदा विराट् । महाव्रते निष्केवल्ये बार्हततृचाशीतावेतत्सूक्तम् । तत्र द्विपदामिमां त्वा शूरेत्येतं राथंतरं प्रगाथं नकिः सुदास इति प्रगाथं च वर्जयेत । तथैव पंचमारण्यके सूत्रितम् । मो षु त्वा वाघतश्चनेत्येतस्य द्विपदां चोद्धृत्य राथंतरं च प्रगाथमथ ह्यस्य नकिः सुदासो रथमित्येतं प्रत्यवदधातीति । चातुर्विंशिकेऽहनि पंचमेऽहनि च निष्केवल्ये मो षु त्वा वाघत इति प्रगाथः सद्विपदः । सूत्रितं च । मो षु त्वा वाघतश्चनेति सद्विपद उपसनस्येद्विपदामिति । चातुर्विंशिकेऽहनि मरुत्वतीये प्रकृतान्मरुत्वतीयात्प्रगाथादनंतरं नकिः सुदास इति प्रगाथं शंसेत् । पृष्ठ्यस्य षडहस्य तृतीये षष्ठेऽहनि चायं प्रगाथः । तथैव सूत्रितम् । नकिः सुदासो रथमिति मरुत्वतीयादूर्ध्वं नित्यादिति । एवंस्थितान् प्रगाथान् [illegible] प्रवर्धास्त्वहं पुनः पुनरावर्तयेदुचिति । अग्निष्टोमे माध्यंदिनसवने ऽच्छावाकशस्त्र उदित्वस्य रिच्यत इति प्रगाथः । तथा च सूत्रितम् । उदित्वस्य रिच्यते शुन इति । अग्निष्टोमे माध्यंदिनसवने मैत्रावरुणशस्त्रे क्रतुमिंद्रेति प्रगाथः । सूत्रितं च । क्रत्वा मिद्र स्थावसुं सद्यो [illegible] इति । चातुर्विंशिकेऽहनि माध्यंदिनसवने [illegible] [illegible] स्यायं प्रगाथ । अहर्गणेष्वपि द्वितीयादिष्वहःसु । सूत्रितं च । [illegible] [illegible] [illegible] । आरंभणीयाः पर्यासान [illegible]

…क्षा इति । पृष्ठ्यषडहस्य तृतीयेऽहनि निष्केवल्ये वैरूपसामपक्षे यदिंद्र यावत इत्यनुरूपस्तृचः । सूत्रितं च । यदिंद्र यावतस्त्वमिति प्रगाथौ स्तोत्रियानुरूपाविति । अग्निष्टोमे चातुर्विंशिकेऽहनि माध्यंदिनसवनेऽच्छावाकशस्त्रे तरणिरित्सिषासतीति वैकल्पिकस्तृचः । सूत्रितं च । तरोभिर्वो विदद्वसुं तरणिरित्सिषासतीति प्रगाथौ स्तोत्रियानुरूपाविति । अग्निष्टोमे निष्केवल्यशस्त्रे रथंतरसामपक्षेऽभि त्वा शूरेति प्रगाथः स्तोत्रियः । सूत्रितं च । अभि त्वा शूर नोनुमोऽभि त्वा पूर्वपीतय इति स्तोत्रियानुरूपाविति । आश्विनशस्त्रेऽप्ययं प्रगाथः । तथैव सूत्रितं च । अभि त्वा शूर नोनुमो वहव: सूरचक्षस इति प्रगाथा इति । महाव्रते निष्केवल्ये दक्षिणपक्षेऽयं प्रगाथः । तथैव पंचमारण्यके सूत्रितम् । अभि त्वा शूर नोनुमोऽभि त्वा पूर्वपीतय इति रथंतरस्य स्तोत्रियानुरूपौ प्रगाथाविति । आश्विनशस्त्र इंद्र क्रतुं न इति प्रगाथः । सूत्रितं च । इंद्र क्रतुं न आ भराभि त्वा शूर नोनुम इति । चातुर्विंशिकेऽहनि माध्यंदिनसवने ब्राह्मणाच्छंसिशस्त्रेऽयं वैकल्पिकः स्तोत्रियः प्रगाथः । सूत्रितं च । इंद्र क्रतुं न आ भरेंद्र ज्येष्ठं न आ भरेति ॥

१. हे इंद्र त्वा त्वया वाघतश्चन यजमाना अप्येनोऽस्मदस्मत्त आरे दूरे मा नि गंमन् न नितरां रमयंतु । अतः त्वं आरात्ताच्चित् दूरेऽपि वर्तमानोऽस्मदीयं सधमादं यज्ञं आ याहि आगच्छ । इह वा अत्रापि वा सन् विद्यमान उप श्रुधि अस्मदीयं स्तोत्रमुपशृणु ॥

२. हे इंद्र ते त्वदर्थं सुते अभिषुते सोमे ब्रह्मकृतः स्तोत्रकृतो मधौ न मधुनीव मक्षा मक्षिका सचा सह आसते उपविशंति । अथ परोक्षस्तुतिः । वसूयवो धनकामाः जरितारः स्तोतारः काममिष्टं इंद्रे रथे न पादं रथे पादमिव आ दधुः समर्पयंति ॥

३. रायस्कामो धनकामोऽहं सुदक्षिणं शोभनदानं वज्रहस्तमिंद्रं पुत्रो न पुत्र इव पितरं हुवे ह्वयामि ॥

४. हे वज्रहस्त इध्याशिरो दधिमिश्रणा इमे सोमासः सोमाः इंद्राय तुभ्यं सुन्विरे - - - । तान् सोमान्मदाय मदार्थं पीतये पानाय ओको यज्ञसदनं आ अभि हरिभ्यामश्वाभ्यां आ याहि आगच्छ ॥

(P. 53) ५. श्रुत्कर्णः याच्ञाश्रवणरूपकर्ण इंद्रो वसूनां वसूनि ईयते याच्यते नोऽस्मदीया गिरो याच्ञावाक्यानि श्रवत् शृणोतु । नू चिन्नैव मर्धिषत् हिनस्तु । अश्रवणेन याच्ञावाक्यानि निष्फलानि न करोत्वित्यर्थः । अपि च इंद्रः सद्यश्चित् सद्य एव याच्ञानंतरमेव सहस्राणि शतानि च ददत् प्रयच्छेत् । दित्संतं दातुमिच्छंतं तमिंद्रं नकिरा मिनत् न हिंस्यात् कश्चिदपि न वारयेदित्यर्थः ॥

इति पंचमस्य तृतीये सप्तदशो वर्गः ॥

६. हे वृत्रहन् ते त्वदर्थं यः पुमान् गभीरा गभीराणि सवनानि सोमान् सुनोति आ धावति च त्वां स्तुतिभिरुपधावति च स वीर इंद्रेण हेतुना अप्रतिष्कुतः केनाप्यप्रतिगतः अप्रतिशब्दितो वा भवेत् । नृभिः परिचारकैः शूशुवे उपगम्यते च । श्वयतिर्गतिकर्मा ॥

७. हे मघवन् धनवन्निंद्र मघोनां हविष्मतां वरूथं उपद्रवाणां वारकं वर्म भव । यत्रस्त्वं शर्धत उत्सहमानान् शत्रून् समजासि संप्रेरयेः । अपि च त्वाहतस्य त्वया हतस्य शत्रोः वेदनं धनं वि भजेमहि विशेषेण लभेमहि । किंच दुर्णशो नाशयितुमशक्यस्त्वं नव्यं गृहं धनं वा आ भर अस्मभ्यमाहर ॥

८. हे मदीया पुरुषाः वज्रिणे सोमपाव्ने सोमस्य पात्रे इंद्राय सोमं सुनोत अभिषुणुत । अवसे इंद्रं तर्पयितुं पक्तीः पक्तव्यान पुरोडाशादीन पचत च । कृणुध्वमित इंद्रप्रियकराणि कर्माणि च कुरुतैव । इंद्रो हि मय सुखं पृणन्नित यजमानाय प्रयच्छन्नेव पृणते हवींषीति शेषः ॥

९. हे मदीयाः जनाः सोमिनः सोमवंतो यागात् मा स्रेधत मा हिंसिष्ट । महते यागादिकं कर्तुमुद्युक्ताध्वं च । महे महते आ तुजे तुजिर्हिंसाकर्मा दानकर्मा वा शत्रूणामभिहिंसकाय धनानां प्रदात्रे वेंद्राय राये धनलाभार्थं कृणुध्वं कर्माणि कुरुत च । तानीत् कर्मसु त्वरित एव जयति शत्रून् क्षेति गृहे निवसति च । पुष्यति प्रजया पशुभिश्च पुष्टो भवति । कवत्नवं कुत्सितक्रियायै कवापत्यहरणं अर्नः सातत्यगमनकर्मणो रूपं कवत्नुरिति । देवासो देवाः न भवंतीति गम्यः । सुखप्राप्तये भवंतीत्यर्थः ॥

(P. 54.) १०. सुदासः शोभनदानस्य यजमानस्य रथं नकिः पर्यास कश्चिन्न पर्यस्यति न रिणत् न रमयति च । आत्मार्थं न कश्चिदेनं गृह्णातीत्यर्थः । अपि च यस्येंद्रो ऽविता रक्षिता यस्य च मरुतो ऽवितारः स गोमति गोयुक्ते व्रजे गोष्ठे गमत् गच्छेत् ॥

इति पंचमस्य तृतीये ऽष्टादशो वर्गः ॥

११. हे इंद्र त्वं यस्य मर्त्यस्य अविता रक्षिता भुवः भवेः स मर्त्यः वाजयन् स्तोत्रेण त्वां बलिनं कुर्वन् वाजमन्नं गमत् गच्छेत् । अपि च हे शूर अस्माकं वासिष्ठानां रथानां अविता रक्षिता बोधि भव । भवतेर्लोटि रूपम् । भकारस्य बकारश्छांदसः । अस्माकं नृणां पुत्रादीनां चाविता भव ॥

१२. अस्येंद्रस्य अंशो यज्ञे सोमस्य भागो ऽतिरिच्यते ऽन्येभ्यो ऽपि देवेभ्य । इंद्रस्य त्रिष्वपि सवनेषु समानमस्ति । माध्यंदिनं हि सर्वमैंद्रमिति । जिग्युषो जितवतो धनं न धनमिव । उदिदित्विति त्रयः पूरणाः । अपि च यो हरिवानिंद्रः सोमिनि यजमाने दक्षं बलं दधाति संदधाति तं रिपो रिपवो न दभंति न हिंसंति ॥

१३. हे जनाः अखर्वं अनल्पं सुधितं सुविहितं सुपेशसं शोभनरूपं मंत्रं स्तोत्रं यज्ञियेषु यजनीयेषु देवेषु मध्ये इंद्राय दधात विधत्त । यो जनः कर्मणा स्तुत्यादिरूपेण इंद्रे इंद्रस्य चित्ते भुवत भवेत् तं जनं पूर्वीर्बह्व्यः प्रसितयः पाशादीनि बंधनानि चनेति समुदायो नेत्यर्थे वर्तते न तरंति न व्याप्नुवंतीत्यर्थः ॥

१४. हे इंद्र तव चित्ते यो भवेत् त्वावसुं त्वं वसुर्व्यापको यस्येति बहुव्रीहिः तं जनं को मर्त्य आ दधर्षति आधर्षेत । हे मघवन् ते त्वदर्थं यः श्रद्धा श्रद्धया युक्तः सन् वाजी हविष्मान् भवत् पार्ये दिवि सौत्ये ऽहनि स वाजमन्नं बलं वा सिषासति सेवत ॥

(P. 55.) १५. हे इंद्र मघोनो धनवतस्ते त्वदर्थमित्यर्थः प्रिया प्रियाणि वसु वसूनि धनानि ये जनाः ददति प्रयच्छंति तान् जनान् वृत्रहत्येषु संग्रामेषु चोदय प्रेरय । हे हर्यश्व तव प्रणीती प्रणीत्या प्रणयनेन सूरिभिः स्तोतृभिः पुत्रादिभिः सार्धं विश्वा विश्वानि दुरिता दुरितानि तरेम ॥

इति पंचमस्य तृतीय एकोनविंशो वर्गः ॥

१६. हे इंद्र अवमं अधमं त्रपुसीसादिकं वसु धनं यद्वा भौमं वस्ववमं तवेत् तवैव त्वं त्वमेव मध्यमं वसु रजतहिरण्यादिकं आंतरिक्षं वा पुष्यसि विश्वस्य सर्वस्य

परमस्योत्तमस्यापि रत्नादिरूपस्य वा वसुनो राजसि ईशिषे राजा राजस्येव । अपि च त्वा त्वां गोषु निमित्तेषु नकिर्वृण्वते केऽपि न वारयंति ॥

१७. हे इंद्र त्वं विश्वस्य सर्वस्य स्तोतुर्यजमानस्य वा धनदाः धनस्य दाता सन् श्रुत प्रसिद्धोऽसि । य ईं य एते आजयो युद्धानि भवंति तेष्वपि धनदाः श्रुतोऽसि । हे पुरुहूत विश्वः सर्वोऽप्ययं पार्थिवो जनः तव त्वत्त इत्यर्थः । अवस्युः रक्षामिच्छन् नाम अन्नं उदकं वा । बर्हिर्नामेत्युदकनामसु पाठात् । भिक्षते याचते त्वामेवेति शेषः ।

१८. हे इंद्र यद्यतो यावतो धनस्य ईशिषे एतावत् । षष्ठ्या लुक् । एतावतो धनस्याहमीशीय ईश्वरो भवेयं हे रदवसो रदति ददाति वसूनीति रदवसुः ततोऽहमस्मदीयं स्तोतारमिद्विधिषेय धनप्रदानेन धारयेयमेव पापत्वाय न रासीय न दद्याम् ॥

१९. कुहचिद्विदे कुत्रचिद्विद्यमानः कुहचिद्वित् तस्मै यत्र क्वापि विद्यमानायेत्यर्थः मंहयते पूजयते जनाय दिवेदिवे प्रतिदिनं रायो धनानि शिक्षेयमित् दद्यामेव । आकारः पूरणः । एवमिंद्रस्य वाक्यं श्रुत्वा संतुष्ट ऋषिर्वदति । हे मघवन् त्वत्त्वत्तोऽन्यदस्माकं आप्यं ज्ञातेयं न ह्यस्ति । वस्य प्रशस्यः पिता चन पालयिता च त्वदन्यो नास्तीत्यर्थः ॥

(P. 56.) २०. तरणिरित् स्तुत्यादौ कर्मणि त्वरित एव पुमान् पुरंध्या महत्या धिया बुद्ध्या सहायभूतया वाजमन्नं सिषासति संभजते । पुरुहूतं बहुभिराहूतमिंद्रं वस्त्वां गिरा स्तुत्या अहं आनमे नेमिं चक्रस्य वलयं सुद्रुं शोभनदारुं तष्टेव यथा वर्धकिर्दारुनेमिमानमयते तद्वदित्यर्थः ॥

इति पंचमस्य तृतीये विंशो वर्गः ॥

२१. मर्त्यो मनुष्यो दुष्टुती दुष्टुत्या वसु धनं न विंदते इंद्रं स्तुवन्नेव वसु लभत इत्यर्थः । स्रेधंतं हिंसंतं इंद्रविषयस्तुत्यादिकर्माण्यकुर्वंतमित्यर्थः । रयिर्धनं न नशत् न व्याप्नोति । हे मघवन् त्वया पार्ये दिवि सौत्ये दिवसे मावते मत्सदृशाय देष्णं दातव्यं यद्धनमस्ति तत्तुभ्यं त्वत्तः सुशक्तिरित् सुकमेव । विंदत इति व्यवहितमप्यनुषज्यतेऽध्याहारस्यांतिकत्वात् ॥

२२. हे शूरेंद्र अस्य जगतो जंगमस्येशानमीश्वरं तस्थुषः स्थावरस्य चेशानम् । ईशानमिति पदस्यावृत्तिरादरार्था । स्वर्दृशं त्वा त्वां अदुग्धा इव धेनवो यथादुग्धा धेनवः क्षीरपूर्णोधस्त्वेन वर्तंते तद्वत्सोमपूर्णचमसत्वेन वर्तमाना वयं अभि नोनुमः भृशमभिष्टुमः ॥

२३. हे मघवन्निंद्र दिव्यो दिवि भवः त्वावान् त्वत्सदृशोऽन्यो न जायते पार्थिवः पृथिव्यां भवोऽपि त्वावानन्यो न जायते दिव्यः पार्थिवो वा त्वावानन्यो न जातः न च जनिष्यते पृथिव्यां दिवि च त्रिष्वपि लोकेषु त्वत्सदृशः कश्चिन्नास्तीत्यर्थः । अश्वायंतोऽश्वानिच्छंतो वाजिनो वाजमिच्छंतः । इच्छायामिनिप्रत्ययः । हविष्मंतो वा गव्यंतो गा इच्छंतश्च वयं त्वा त्वां हवामहे ह्वयामः ॥

२४. हे ज्यायो ज्यायन्निंद्र । आमंत्रितं पूर्वमविद्यमानवदितींद्रपदस्याविद्यमानवद्भावात् ज्याय इत्यस्य सर्वानुदात्तत्वाभावः । नकारस्य रुत्वं व्यत्ययान्नुमभावो वा । कनीयसः सतो मम तत्प्रसिद्धं धनं अभ्याभर । हे मघवन् त्वं सनाच्चिरादेवारभ्य पुरूवसुर्हि बहुधनो ह्यसि । भरेभरे संग्रामे यज्ञे वा हव्यः हविष्यश्चासि ॥

( P. 57. ) २५. हे मघवन् पथा पथानीनामभिमान् शत्रून्परा प्रेरय। नोऽस्माकं वसू वसूनि सुवेदा सुखेन लभ्यानि कृधि कुरु। महाधने संग्रामे। वाजसातौ [illegible] समानत्वान्न पात्रेत। सखीनां स्तोतॄणामस्माकं वसिष्ठानामविता रक्षिता बोधि भव वृधः वर्धयिता च भव॥

२६. हे इंद्र नोऽस्मभ्यं क्रतुं कर्म प्रज्ञानं वा आ भर आहर। अपि च यथा पिता पुत्रेभ्यो धनं प्रयच्छति तथा नोऽस्मभ्यं शिक्ष धनं देहि। हे पुरुहूत बहुभिराहूत यामनि यज्ञे जीवाः वयं ज्योतिः सूर्यमशीमहि प्रतिदिनं प्राप्नुयामः॥

२७. हे इंद्र अज्ञाता अज्ञातगमनाः वृजनाः हिंसकाः दुराध्यः नोऽस्मान्माव क्रमुः मावचक्रमुः। हे शूर त्वया वयं वसिष्ठाः प्रवतः प्रवणकाः संतः शश्वतीर्बह्वीरपोऽतितरामसि अतितराम॥

इति पंचमस्य तृतीय एकविंशो वर्गः॥

---

33.

श्वित्यंच इति चतुर्दशर्चं षोडशं सूक्तम्। अत्रेयमनुक्रमणिका। श्वित्यंचः पंचोना वसिष्ठस्य सपुत्रस्येंद्रेण वा संवाद इति। आदितो नवानां वसिष्ठ ऋषिः। वसिष्ठपुत्राणां स्तूयमानत्वात्त एव देवता। विद्युतो ज्योतिरित्यादिभिः पंचभिः पुत्रैर्वसिष्ठः स्तूयते। अतो वसिष्ठो देवता। त एव ऋषयः। या तेनोच्यते इति न्यायात्। अनुक्तत्वात्त्रिष्टुप्॥

१. श्वित्यंचः श्वित्यं श्वेतवर्णं अंचतीति श्वित्यंचः श्वेतवर्णा इत्यर्थः। धियंजिन्वासः कर्मणां पूरयितारो दक्षिणतस्कपर्दाः दक्षिणे शिरसो भागे कपर्दाश्चूडा येषां ते दक्षिणतस्कपर्दाः। चूडाकर्मणि दक्षिणतो वसिष्ठानामिति स्मर्यते। मा मां अभि प्रमंदुः विद्याबलेनाभिप्रहर्षयन्। यतो मामभिप्रमंदुरतो बर्हिषो यज्ञात् परीति पंचम्यर्थानुवादः उत्तिष्ठन्नहं नॄन्यज्ञस्य नेतॄन्वोचे ब्रवीमि। मे मत्तो दूराद्वसिष्ठा वासिष्ठस्य मम पुत्राः अवितवे गंतुं न अर्हंतीति शेषः॥

२. यदा वसिष्ठस्य पुत्राः सुदासं राजानमयाजयन् तदैव पाशद्युम्नाख्योऽपि राजा सोमयागोद्यमं चकार। तदा ते वसिष्ठपुत्राः पाशद्युम्नं तिरस्कृत्य तदीये यागे सोमं पिबंतमिंद्रं मंत्रबलेन तस्मादाच्छिद्य सुदासो यज्ञे स्थापयामासुः। तदेतद्वृत्तांतं कीर्तयन् वसिष्ठः स्वसुताननेन मंत्रेण स्तौति। वैशंतं वेशंतः पल्वलं अत्र वेशंतशब्देन सोमाधारश्चमसो लक्ष्यते। तत्स्थं सोमं पांतं पिबंतं उग्रमुद्गूर्णमिंद्रं सुतेन सुदासो यज्ञेऽभिषुतेन सोमेन हेतुना तिरः पाशद्युम्नं तिरस्कृत्य दूरादानयन् वसिष्ठा मंत्रबलेनानीतवंतः। इंद्रोऽपि वायतस्य वयतः पुत्रस्य पाशद्युम्नस्य। द्वितीयार्थे षष्ठी। वायतं पाशद्युम्नं अति अतिहाय सुदासो यज्ञेऽभिषुतात्सोमाद्धेतोः वसिष्ठान्वसिष्ठस्य पुत्रानवृणीत। पाशद्युम्नस्य सोमयागे चमसस्थं सोमं पिबन्नपींद्रस्तं पाशद्युम्नं तिरस्कृत्य मंत्रसामर्थ्यबलेन सुदासो यज्ञ आह्वानकाले वसिष्ठानाजगामेत्यर्थः॥

( P. 58. ) ३. एवं तथा पाशद्युम्नस्य सवाख्ये सोमयागे चमसस्थं सोमं पिबंतमपींद्रं वसिष्ठैः सुदाः प्राप्तवान् एवमेव सिंधुं नदीं एभिर्वसिष्ठैः कं सुखेन ततार तीर्णं आसीत्। नु इति पूरणः। तथा च निगमांतरम्। अर्णांसि चित्पप्रथाना सुदास

इति । एवंदेवमेव भेदं भेदनामकं शत्रुमपि एभिर्वसिष्ठैरेव जघान । अथ प्रत्यक्षस्तुतिः । एवेदेवमेव हे वसिष्ठाः वो युष्मदीयेन ब्रह्मणा स्तोत्रेण दाशराज्ञे दशभी राजभिः सह युद्धे प्रवृत्ते सति सुदासं राजानमिंद्रः प्रावत् प्रारक्षत् । तथा च निगमांतरम् । दश राजानः समिता अयज्यवः सुदासमिंद्रावरुणा न युयुधुरिति । दाशराज्ञे परियत्ताय विश्वत इति च ॥

४. हे नरो वो युष्मदीयेन ब्रह्मणा स्तोत्रेण पितृणां जुष्टी प्रीतिर्भवति । पितृणामित्यनेन पारोक्ष्येण वसिष्ठस्यैव कीर्तनम् । अहं प्रीतो भवामीत्यर्थः । अथेदानीं स्वमाश्रमं गंतुमुद्यतोऽहं अक्षं रथस्याक्षं अव्ययं व्ययामि लडर्थे लङ् चालयामीत्यर्थः । यूयं न किल रिषाथ न च क्षीणा भवथ । हे वसिष्ठाः यद्यस्माच्छक्करीष्वृक्षु बृहता श्रेष्ठेन रवेण साम्ना इंद्रे शुष्मं बलं अदधात अधारयत ॥

५. तृष्णजो जाततृष्णा वृतासः तृत्सुभी राजभिर्वृता नाथितासो वृष्टिं याचमाना वसिष्ठाः द्यामिव आदित्यमिवेंद्रं दाशराज्ञे दशानां राज्ञां संग्रामे उदद्दीधयुः उदद्दी-पयन् । स्तुवतो वसिष्ठस्य स्तोत्रमिंद्रोऽश्रोत् अशृणोच्च । उरुं विस्तीर्णं लोकं तृत्सुभ्यो राजभ्यः अकृणोत् अकरोच्च अददाच्चेत्यर्थः ॥

इति पंचमस्य तृतीये द्वाविंशो वर्गः ॥

६. गोअजनासो गवां प्रेरका दंडा इव यथा दंडाः परिच्छिन्नपत्रोपशाखा भवंति तद्वद्भरताः तृत्सूनामेव राज्ञां भरता इति नामांतरेणोपादानं शत्रुभिः परिच्छिन्ना एवासन् । अर्भकासोऽर्भका अल्पाश्चासन् । आदित्परिच्छिन्नत्वादनंतरमेव तेषां तृत्सूनां वसिष्ठः पुरएता पुरोहितोऽभवच्च । तत्पौरोहित्यसामर्थ्यात्तृत्सूनां विशः प्रजाः अप्रथंत अवर्धंत ॥

७. भुवनेषु पृथिव्यंतरिक्षद्युषु त्रयोऽग्निवायुसूर्याः यथाक्रमेण रेतो विश्वस्य धारकमुदकं कृण्वंति कुर्वंति । तेषां त्रयाणां ज्योतिरग्रा आदित्यप्रमुखाः आर्याः श्रेष्ठाः तिस्रः प्रजा भवंति । ते च त्रयोऽग्निवायुसूर्या घर्मासो दीप्यमानाः उषसं सचंते समवयंति । दुर्ज्ञानात्सर्वानित्सर्वानेव तान्वसिष्ठा अनुविदुः अभिजानंति । तेषां रहस्यविज्ञानादियमपि वसिष्ठानामेव स्तुतिः । तथा च शाट्यायनकम् । त्रयः कृण्वंति भुवनेषु रेत इति अग्निः पृथिव्यां रेतः कृणोति वायुरंतरिक्ष आदित्यो दिवि तिस्रः प्रजा आर्या ज्योतिरग्रा इति वसवो रुद्रा आदित्यास्तासां ज्योतिर्यदसावादित्यस्त्रयो घर्मासः उषसं सचंत इत्यग्निरुषसं सचते वायुरुषसं सचते आदित्य उषसं सचत इति ॥

८. हे वसिष्ठाः एषां वो युष्माकं स्तोमो महिमापि वा सूर्यस्य ज्योतिरिव वक्षथः प्रकाशोऽस्ति । हे वसिष्ठा वो युष्माकं महिमा स्तोमोऽपि वा समुद्रस्येव गभीरो गंभीरोऽस्ति । तथा हे वसिष्ठाः एषां वो युष्माकं स्तोम ऋक्समूहो महिमापि वा वातस्येव प्रजवः यथा वातस्य प्रवेगोऽन्येनान्वेतुं न शक्यस्तद्वदन्येन तव महिमा अन्वेतवे अन्वेतुं न शक्यः ॥

(P. 59.) ९. त इत् त एव वसिष्ठाः निण्यं तिरोहितं दुर्ज्ञानं निण्यं सस्वरित्यंतर्हितनामसु पाठात् सहस्रवल्शं सहस्रशाखं संसारं हृदयस्य प्रकेतैः प्रज्ञानैरभिसंचरंति । एवं स्वाच्छंद्येनाभिसंचरंतस्ते वसिष्ठाः यमेन कारणात्मना सर्वनियंत्रा ततं विस्तृतं परिधिं वस्त्रम् । परिधिरित्यनेन जन्मादिप्रवाहो विवक्षितः । तं वयंतोऽप्सरसो जननी-

त्वेनोपसेदुः । अत्र वसिष्ठा इति बहुवचनं पूजायाम् । वसिष्ठः पूर्वं प्रजापतेरुत्पन्नं देहमुत्सृज्याप्सरःसु जायेयेति बुद्धिमकरोदिति भावः ॥

१०. एतास्वृक्षु वसिष्ठस्यैव देहपरिग्रहः प्रतिपाद्यते । एताश्चेंद्रस्य वाक्यमित्येके वर्णयंति अपरे वसिष्ठपुत्राणामिति । हे वसिष्ठ यद्यदा विद्युतो विद्युत इव स्वीयं ज्योतिः देहांतरपरिग्रहार्थं परि संजिहानं परि त्यजंतं त्वा त्वाम् । छांदसमात्मनेपदम् । यद्वा जिघृक्षितदेहार्थं स्वीयं ज्योतिः परिसंजिहानं परिजिघृक्षंतमित्यर्थः । अस्मिन्पक्षे जहातेर्गत्यर्थत्वादात्मनेपदं छांदसं न भवति । मित्रावरुणा मित्रावरुणौ अपश्यतां आवाभ्यामयं जायेतेति समकल्पतामित्यर्थः । तत्तदा ते तवैकं जन्म । उतापि च यद्यदागस्त्यो विशो निवेशनान्मित्रावरुणावावां जनयिष्याव इत्येतस्मात्पूर्वावस्थानात्त्वामा जभार आजहार ॥

इति पंचमस्य तृतीये त्रयोविंशो वर्गः ॥

११. उत अपि च हे वसिष्ठ मैत्रावरुणो मित्रावरुणयोः पुत्रोऽसि । हे ब्रह्मन् वसिष्ठ उर्वश्याः अप्सरसः मनसः ममायं पुत्रः स्यादितीदृशात्संकल्पात् द्रप्सं रेतः मित्रावरुणयोः उर्वशीदर्शनात्स्कन्नमासीत् । तस्मादधि जातोऽसि । तथा च वक्ष्यते । सत्रे ह जाताविषितेति । एवं जातं त्वा त्वां दैव्येन देवसंबंधिना ब्रह्मणा वेदराशिनाहंसुवा युक्तं पुष्करे विश्वे देवा अददंत अधारयंत । तथा चादितेर्मित्रावरुणौ जज्ञाते इति प्रकृत्य पठ्यते ॥

तयोरादित्ययोः सत्रे दृष्ट्वाप्सरसमुर्वशीम् ।
रेतश्चस्कंद तत्कुंभे न्यपतद्वासतीवरे ॥
तेनैव तु मुहूर्तेन वीर्यवंतौ तपस्विनौ ।
अगस्त्यश्च वसिष्ठश्च तत्रर्षी संबभूवतुः ॥
बहुधा पतितं रेतः कलशे च जले स्थले ।
स्थले वसिष्ठस्तु मुनिः संभूत ऋषिसत्तमः ।
कुंभे त्वगस्त्यः संभूतो जले मत्स्यो महाद्युतिः ॥
उदियाय ततोऽगस्त्यः शम्यामात्रो महातपाः ।
मानेन संमितो यस्मात्तस्मान्मान्य इहोच्यते ॥
यद्वा कुंभादृषिर्जातः कुंभेनापि हि मीयते ।
कुंभ इत्यभिधानं च परिमाणस्य लक्ष्यते ॥
ततोऽप्सु गृह्यमाणासु वसिष्ठः पुष्करे स्थितः ।
सर्वतः पुष्करे तं हि विश्वे देवा अधारयन् ॥

१२. स वसिष्ठः प्रकेतः प्रकृष्टज्ञानः उभयस्य उभयं दिवं च पृथिवीं च प्रविद्वान् प्रकर्षेण जानन् सहस्रदानोऽभवत् । किमनेन सहस्रदान इति विशेषणेन उत वा अपि वा सदानः सर्वदानसहित एवाभवत् । किंच वसिष्ठो यमेन कारणात्मना सर्वनियंत्रा ततं विस्तृतं परिधिं वस्त्रम् । परिधिरित्यनेन संसारप्रवाहो विवक्षितः । तं वयिष्यन् अप्सरसः उर्वश्याः । परीति पंचम्यर्थानुवादः । जज्ञे जातः ॥

१३. सत्रे बहुकर्तृके यागे । हेति पूरणः । जातौ दीक्षितौ मित्रावरुणौ इषिताभ्ये-
षितौ स्वयमन्यैर्जनैर्नमोभिः स्तुतिभिः कुंभे वासतीवरे कलशे समानमेकं रेतः सि-

सिचतुः असिंचताम्। ततो वासतीवरात्कुंभात् मध्यादगस्त्यो मानः शमीप्रमाण उदियाय प्रादुर्बभूव। तत एव कुंभाद्वसिष्ठमप्यृषिं जातमाहुः॥

(P. 60.) १४. हे प्रतृदः। प्रतृद इति तृत्सव एवाभिधीयंते नामांतरेण। वो युष्मान्वसिष्ठ आ गच्छाति आगच्छति। एनं वसिष्ठं सुमनस्यमानाः सुमनसः संतः उपाध्वं उपतिष्ठत। आगतश्चासौ वसिष्ठो यज्ञे अग्रे पुरोहितो ब्रह्मा सन् उक्थभृतं शस्त्राणां संभक्तारं बिभर्ति सामभृतमुद्गातारं बिभर्ति ग्रावाणमभिषवणं बिभ्रत बिभ्रतमध्वर्युं च बिभर्ति प्रवदाति यज्ञे यत्प्रवदितव्यं प्रैषादिनिमित्तं कर्तव्यमस्ति तदपि वदतीति तत्सुत प्रतोदो ब्रवीति॥

इति पंचमस्य तृतीये चतुर्विंशो वर्गः॥

इति सप्तमे मंडले द्वितीयोऽनुवाकः॥

---

## 34.

तृतीयेऽनुवाके द्वाविंशतिः सूक्तानि। तत्र प्र शुक्रेति पंचविंशत्यृचं प्रथमं सूक्तम्। अत्रेयमनुक्रमणिका। प्र शुक्रा पंचाधिका वैश्वदेवं ब्राह्मा एकविंशीर्द्विपदा अब्जामहेर्बुध्नर्च उत्तरोऽहिर्बुध्न्यायेति। वसिष्ठ ऋषिः। आद्या एकविंशतिर्द्विपदा विंशत्यक्षरा विराजो द्वाविंशाद्याश्चतस्रस्त्रिष्टुभः। विश्वे देवा देवता। व्यूळ्हे दशरात्रे चतुर्थेऽहनि वैश्वदेवशस्त्र इदं सूक्तं वैश्वदेवनिविद्धानम्। सूत्रितं च। प्र शुक्रैत्वेति वैश्वदेवमिति। षोडशिन्या भूर्वस्मा इति द्विपदा इति। महाव्रतेऽप्येषा द्विपदा। तथैव पंचमारण्यके सूत्रितम्। आ भूर्वस्मा इत्येका सूददोहा इति॥

१. शुक्रा दीप्ता देवी सर्वेषां कामानां प्रदात्री मनीषा स्तुतिरस्मदस्मत्तोऽस्मिन्सूक्ते स्तोष्यमाणान्देवान् वाजी वेगवान् सुतष्टः सुसंस्कृतो रथो न रथ इव प्रैतु प्रगच्छतु॥

२. अस्यामृच्यापः स्तूयंते। क्षरंतीः क्षरंत्य आपो दिवः पृथिव्याश्च। उभयोरपि लोकयोरित्यर्थः। जनित्रमुत्पत्तिं विदुः जानंति। अध अपि च शृण्वंति स्तोत्राणीति शेषः॥

३. इंद्रोऽस्मिन् तृचे स्तूयते। पृथ्वीः पृथ्व्यः प्रथमाना आपश्चिदापोऽप्यस्मा इंद्राय पिन्वंत प्याययंते। वृत्रेषूपद्रवेषु सत्सूग्रा उद्गूर्णास्तेजस्विनो वा शूरा योद्धारोऽपि मंसंते इदमेवेंद्रं स्तुवंति॥

४. अस्मै षष्ठ्यर्थे चतुर्थी। अस्येंद्रस्यागमनायाश्वान् धूर्षु रथस्यादधात। इंद्रो न। नेति चार्थे। इंद्रो वज्री वज्रवान् हिरण्यबाहुर्हिरण्यहस्तश्च भवति। षोडशिनि शस्यमानत्वादस्या ऐंद्रत्वं गम्यते। आ भूर्वस्मा इत्यत्रास्मा इत्यस्य पदस्यानुदात्तत्वं पूर्वस्यानिर्देशः प्रकृतत्वात्। अत एव पूर्वाप्यैंद्रीति विज्ञायते। पूर्वस्यामप्यृचि अस्मा इत्यत्रानुदात्तत्वमल्पीयोऽर्थतरमनुदात्तमिति। तथा च यास्कः अस्येति चोदात्तं प्रथमादेशेऽनुदात्तमन्वादेशे तीव्रार्थतरमुदात्तमल्पीयोऽर्थतरमनुदात्तमिति। अल्पीयस्त्वं चेह शब्दप्रवृत्तिनिमित्तस्य संनिधानस्य दूरस्थत्वेनेत्यवगंतव्यम॥

५. यज्ञस्तुतिरियम् । हे जनाः यज्ञमभि प्र स्थात् अभिक्रमत । अर्हंवांति पूर्णा । अपि च पत्मन् पत्मनि यज्ञमार्गे त्मना स्वयमेव यानेव गंतेव हिन्वान गच्छत । हि गताविति धातुः ॥

६. उक्तस्यैव विवरणमत्र । हे मदीया जनाः समत्सु संग्रामेषु त्मना स्वयमेव हिन्वान गच्छत । अपि च केतुं प्रज्ञापकं वीरं पाप्मानां वारयितारं नाशकमित्यर्थः । यज्ञं जनाय लोकाय तद्रक्षार्थमित्यर्थः । दधात विधत्त ॥

(P. 61.) ७. अस्य यज्ञस्य शुष्माद्बलाद्भानुः सूर्य उदानं उदगच्छति । भूम भूतानि पृथिवीव भारं लोकस्यायं यज्ञो बिभर्ति च ॥

८. अस्मिन्नृचे देवाः स्तूयंते । हे अग्ने अयातुरहिंसाशीनियमयुक्तेन ऋतेन यज्ञेन साधन् कामान् साधयन् देवान् ह्वयामि । अपि च धियं देवानां परिचरणात्मकं कर्म दधामि करोमीत्यर्थः ॥

९. हे जना वो यूयं अभि देवानुद्दिश्य देवीं दीप्तां धियं कर्म दधिध्वं विधत्त । अपि च वो यूयं देवत्रा देवेषु वाचं स्तुतिरूपां प्र कृणुध्वं प्रकर्षेण कुरुध्वम् ॥

१०. सहस्रचक्षाः बहुचक्षुः वरुणः आसां नदीनां पाथो जलमाचष्टे अभिपश्यति । कीदृशो वरुणः । उग्रः उद्गूर्णः ओजस्वी वा ॥

इति पंचमस्य तृतीये पंचविंशो वर्गः ॥

११. राष्ट्रानां राष्ट्राणां णत्वाभावश्छांदसः । ईश्वराणामपि वरुणो राजा ईश्वरो भवति । नदीनां पेशो रूपं रूपकृदपि भवतीत्यर्थः । अस्मै षष्ठ्यर्थे चतुर्थी अस्य वरुणस्य क्षत्रं बलं अनुत्तं अन्यैरबाधितं विश्वासु सर्वतो गंतृ भवतीति ॥

१२. अयं तृचो देवः । हे देवा नोऽस्मान् विश्वासु सर्वासु विक्षु प्रजासु । अविष्ट उ इति समुदितमविष्टो इति । अविष्ट रक्षत शंसं निनित्सोर्निंदितुमिच्छतः शत्रोः अद्युं अदीप्तिं कृणोत कुरुत च ॥

१३. द्विषां शत्रूणां दिद्युदायुधं अशेवा असुखकरी विष्वक् सर्वतो व्येतु अपगच्छतु । तनूनामंगानां रपः पापं देवा युयोत अस्मत्तः पृथक्कुरुत ॥

१४. हव्यात् हव्यानामत्ताग्निः नमोभिरस्मदीयैर्नमस्कारैः प्रेष्ठः प्रियतमः सन् नोऽस्मानवीत् रक्षतु । अस्मा अग्नये स्तोत्रमधायि अस्माभिर्व्यधायि ॥

१५. हे स्तोतः अपामुदकानां नपातं पुत्रमग्निं सूनुर्नपादित्यपत्यनामसु पाठात् । देवेभिर्देवैः सजूः सह सखायं मित्रं स्तुतिभिः कृध्वं कुरुध्वम् । स चापां नपादस्मभ्यं शिवः सुखकरोऽस्तु भवतु ॥

(P. 62.) १६. अहिं मेघानामाहंतारं नदीनामुदकानां बुध्ने स्थाने । बुध्नमंतरिक्षं बद्धा अस्मिन्धृता आप इति व्युत्पत्तेः । तस्मिन्नब्जःसु उदकेषु सीदन् सीदंतमब्जामप्सु जातं इममग्निं उक्थैः स्तोत्रैर्गृणीषे । बुध्ने नदीनां रजःसूदकेषु सीदन् । बुध्नमंतरिक्षं बद्धा अस्मिन्धृता आप इतीति ॥

१७. अहिर्बुध्न्यः । बुध्नेऽन्तरिक्षे भवो बुध्न्यः । अहिश्चासौ बुध्न्यश्चेत्यहिर्बुध्न्योऽग्निः । नोऽस्मान् रिषे हिंसकाय मा धात् मा दधातु । अस्य ऋतायोर्यज्ञकामस्य यजमानस्य

यज्ञो मा च रिषत् न क्षीयेत । यद्वा अस्याहिर्बुध्न्यस्य इममहिर्बुध्न्यमुद्दिश्य कृतायो- र्यज्ञकामस्य यो यज्ञः स न क्षीयेतेत्यर्थः ॥

१८. अयं वृचो वैवो मारुतो वा। उत अपि च नोऽस्मदीयेषु एषु नृषु पुरुषेषु श्रवोऽन्नं धुः देवा मरुतो वा धारयंतु । राये धनार्थं शर्धंत उत्सहमानाः म्रियमाणा वा अर्यो ऽरयः प्र यंतु प्रगच्छंतु म्रियंतामित्यर्थः ॥

१९. महासेनासो महासेनाः राजानः एषां मरुतां देवानां वा अमेभिर्बलैर्भूना भुवनानि स्वर्ण आदित्य इव शत्रुं स्वकीयं तपंति बाधंते । महांतोऽपि राजानोऽमैर्बलैः शत्रून् बाधंते । तानि बलानि देवानामेवेत्यर्थः ॥

२०. अस्यां देवपत्न्यस्त्वष्टा च देवता । यच्चदा पत्नीर्देवानां पत्न्यो नोऽस्मान- च्छाभ्यागमंति आगच्छंति तदा सुपाणिः शोभनहस्तः त्वष्टा देवो वीरान् पुत्रान् दधातु अस्मभ्यं ददातु ॥

इति पंचमस्य तृतीये षड्विंशो वर्गः ॥

२१. नो ऽस्माकं स्तोमं स्तोत्रं त्वष्टा प्रतिजुषेत प्रतिसेवेत । अपि चारमतिः पर्याप्तबुद्धिः सर्वविषयव्यापिबुद्धिर्वा त्वष्टा अस्मे अस्मदर्थं वसूयुर्धनकामः स्यात् भूयात् ॥

२२. ता यान्यस्माकमभीष्टानि तानि वसूनि धनानि रातिषाचो दानसमवेता देवपत्न्यो नोऽस्मभ्यं रासन् प्रयच्छंतु । अपि च वरुणानी वरुणस्य पत्नी आगृणोतु अस्मदीयं स्तोत्रमभिगृणोतु । रोदसी द्यावापृथिव्यौ चाभिगृणुताम् । सुदत्रः कल्याण- दानः त्वष्टा च वरूत्रीभिरुपद्रवाणां वारयित्रीभिर्देवपत्नीभिः सह नोऽस्मभ्यं सुशरणः सुशरणप्रदोऽस्तु रायो धनानि च विदधातु ॥

२३. नोऽस्माकं तदित्यव्ययं ता रायो धनानि पर्वताः परिपांतु नोऽस्माकं सत्ता रायः आपश्च परिपांतु । तद्रातिषाचो दानसहिता देवपत्न्यश्च परिपांतु । ओष- धीरोषधयश्च तत्परिपांतु । उत अपि च द्यौस्तत्परिपातु । वनस्पतिभिः सजोषाः सहिता पृथिव्यंतरिक्षं च तत्परिपातु । आपः पृथिवीत्यंतरिक्षनामसु पाठात् । नोऽस्माकं तदुभे रोदसी द्याव्यापृथिव्यावपि परिपासतः परिरक्षताम् ॥

( P. 63. ) २४. तद्वक्ष्यमाणमुर्वी विस्तीर्णे रोदसी द्यावापृथिव्यावनु जिहातां अनुगच्छताम् अनुमन्येतामित्यर्थः । द्युक्षो दीप्तेर्निवासभूत इंद्रसखा इंद्रसखः इंद्रः सखा यस्येति बहुव्रीहिः । वरुणश्च तदनुजिहाताम् । द्विवचनांतस्यैकवचनांततया विपरिणामः । ये सहासः शत्रूणामभिभवितारः ते मरुतोऽपि तदनुजिहाताम् । अत्र बहुवचनांततया विपरिणामः । यदनुमंतव्यं तदाह । धियध्यै भरणीयां धारयितुं रायो धनस्य धरुणं धाम स्थानं वयं स्याम भवेमेति ॥

२५. नोऽस्मभ्यं तदिदं स्तोत्रमिंद्रो वरुणश्च मित्रश्चाग्निश्चापश्चौषधीरोषधयश्च व- निनो वृक्षाश्च जुषंत जुषंतां सेवंताम् । वयं च मरुतामुपस्थे उपस्थाने वर्तमानाः श- र्मन् शर्मणि सुखे गृहे वा स्याम भवेम । सिद्धमन्यत् ॥

इति पंचमस्य तृतीये सप्तविंशो वर्गः ॥

---

35.

शं न इंद्राग्नी इति पंचदशर्चं त्रितीयं सूक्तम् । अत्रेयमनुक्रमणिका । शं नः पंचोना शांतिरिति । वसिष्ठ ऋषिः । त्रिष्टुप् छंदः । वैश्वदेवं इत्युक्तत्वादिदमपि वैश्वदेवम् । महानाम्नीव्रत एतत्सूक्तं जप्यम् । तथा च सूत्रितम् । भद्रं कर्णेभिः शृणुयाम देवा शं न इंद्राग्नी भवतामवोभिरिति । एव ‒ ‒ सु ॥

१. नोऽस्माकमस्मभ्यं वा इंद्राग्नी अवोभी रक्षणैः शं शांत्यै भवताम् । रातहव्या रातहव्यौ यजमानैर्दत्तहविष्कौ इंद्रावरुणा इंद्रावरुणावपि नोऽस्मभ्यं शं शांत्यै भवताम् । इंद्रासोमा इंद्रासोमावपि नः शं शांत्यै सुविताय कल्याणाय च भवताम् । शं शांत्यै सुखाय च । पुनरुक्तिरादरार्था । अथवा शं शमनहेतुकं सुखं योः विषययोगनिमित्तं सुखमित्यपुनरुक्तिः । इंद्रापूषणा इंद्रापूषणावपि वाजसातौ युद्धे अन्नलाभनिमित्ते वा नः शं शांत्यै भवतामित्यर्थः ॥

२. नोऽस्माकं शं शांत्यै भगो देवोऽस्तु भवतु । नोऽस्माकं शमु शांत्यै एव शंसो नराशंसोऽस्तु भवतु । नोऽस्माकं शं शांत्यै पुरंधिर्बहुधीरप्यस्तु । रायो धनान्यपि शमु शांत्यै एव संतु । नोऽस्माकं सुयमस्य शोभनयमयुक्तस्य सत्यस्य शंसो वचनमपि शमस्तु । नोऽस्माकं शं शांत्यै पुरुजातो बहुप्रादुर्भावोऽर्यमा देवोऽप्यस्तु ॥

३. नोऽस्माकं शं शांत्यै धाता देवोऽस्तु । नोऽस्माकं शमु शांत्यै एव विधर्ता पुण्यपापानां विधारयिता वरुणो देवोऽप्यस्तु । नोऽस्माकं शं शांत्यै उरूची विस्तीर्णगमना पृथिव्यपि स्वधाभिरन्नैः सहास्तु । बृहती महत्यौ रोदसी द्यावापृथिव्यावपि शं भवताम् । अद्रिः पर्वतोऽपि नोऽस्माकं शं शांत्यै भवतु । शं शांत्यै नोऽस्माकं देवानां सुहवानि सुष्टुतयः संतु भवंतु ॥

( P. 64.) ४. ज्योतिरनीको ज्योतिर्मुखोऽग्निर्नोऽस्माकं शं शांत्यै अस्तु भवतु । मित्रावरुणा मित्रावरुणावपि नोऽस्माकं शं शांत्यै भवताम् । अश्विनाश्विनावपि शं भवताम् । सुकृता पुण्यकर्मणां पुरुषाणां सुकृतानि पुण्यकर्माण्यपि नोऽस्माकं शं शांत्यै संतु भवंतु । इषिरो गमनशीलोऽपि वातो वायुरपि नोऽस्माकं शं शांत्यै अभिवातु ॥

५. नोऽस्माकं शं शांत्यै द्यावापृथिवी द्यावापृथिव्यौ पूर्वहूतौ ‒ ‒ ‒ ‒ ‒ भवताम् । अंतरिक्षमपि नोऽस्माकं दृशये दर्शनाय शमस्तु । नोऽस्माकं शं शांत्यै ओषधीरोषध्योऽपि भवंतु । वनिनो वृक्षाश्च शं भवंतु । जिष्णुः जयशीलो रजसो लोकस्य पतिरिंद्रोऽपि नोऽस्माकं शं शांत्यै अस्तु ॥

इति पंचमस्य तृतीयेऽष्टाविंशो वर्गः ॥

६. देवो द्योतनादिगुणयुक्त इंद्रो वसुभिर्देवैः सार्धं नोऽस्माकं शं शांत्यै भवतु । सुशंसः शोभनस्तुतिर्वरुणो देव आदित्येभिरादित्यैर्देवैः सार्धं शं शांत्यै अस्तु भवतु । जलाष ‒ ‒ ‒ ‒ रुद्रो दुःखद्रावको देवो रुद्रेभिः रुद्रैः सार्धं शं शांत्यै नोऽस्माकं भवतु । इह यज्ञे त्वष्टा देवो ग्नाभिर्देवपत्नीभिः सार्धं नः शं शांत्यै भवतु । इह यज्ञे नः स्तोत्रं शृणोतु च ॥

७. नोऽस्माकं शं शांत्यै सोमो भवतु । ब्रह्म स्तोत्रमपि नोऽस्माकं शं शांत्यै भवतु । ग्रावाणोऽभिषवसाधनभूताः पाषाणा अपि नोऽस्माकं शं शांत्यै भवंतु । यज्ञाश्च नः शमु

शांत्यै एव संतु । स्वरूणां यूपानां मितयः उन्मानान्यपि नोऽस्माकं शं शांत्यै भवंतु । प्रस्व ओषधयोऽपि नोऽस्माकं शं शांत्यै भवंतु । वेदिरपि नः शमु शांत्यै एवास्तु ॥

८. नोऽस्माकं शं शांत्यै सूर्य उरुचक्षाः विस्तीर्णतेजाः सन् उदेतु उदयं प्राप्नोतु । चतस्रः प्रदिशो महादिशोऽपि नोऽस्माकं शं शांत्यै भवंतु । नोऽस्माकं शं शांत्यै पर्वता ध्रुवयो ध्रुवा भवंतु । नोऽस्माकं शं शांत्यै सिंधवो नद्योऽपि भवंतु । आपश्च नः शमु शांत्यै एव संतु ॥

९. अदितिर्देवी व्रतेभिर्व्रतैः कर्मभिः सार्धं नोऽस्माकं शं शांत्यै भवतु । स्वर्काः शोभनस्तुतयो मरुतोऽपि नोऽस्माकं शं शांत्यै संतु । विष्णुः व्यापकः नोऽस्माकं शं शांत्यै अस्तु । पूषा देवोऽपि नोऽस्माकं शमु शांत्यै एवास्तु । भवित्रं भुवनमंतरिक्षमुदकं वा नोऽस्माकं शं शांत्यै अस्तु । वायुरपि नः शमु शांत्यै एवास्तु ॥

(P. 65.) १०. देवः क्रीडनादिगुणयुक्तः सविता त्रायमाणो रक्षन् नोऽस्माकं शं शांत्यै भवतु । विभातीर्व्युच्छंत्य उषसोऽपि नोऽस्माकं शं शांत्यै भवंतु । नोऽस्माकं प्रजाभ्यः पर्जन्योऽपि शं भवतु । शंभुः सुखस्य भावयिता क्षेत्रस्य पतिर्नोऽस्माकं शं शांत्यै अस्तु ॥

इति पंचमस्य तृतीय एकोनत्रिंशो वर्गः ॥

११. विश्वदेवा बहुस्तोत्रका देवा नोऽस्माकं शं शांत्यै भवंतु । सरस्वती च धीभिः स्तुतिभिः कर्मभिर्वा सह नोऽस्माकं शं शांत्यै अस्तु । अभिषाचो यज्ञमभितः सेवमानाश्च नः शं शांत्यै भवंतु । रातिषाचो दानं सेवमाना अपि शमु शांत्यै एव भवंतु । दिव्या दिवि भवाश्च नोऽस्माकं शं शांत्यै भवंतु । पार्थिवाः पृथिव्यां संभूताश्च नः शं भवंतु । अप्याः अप्स्वंतरिक्षे भवाश्च । आकाशं आप इत्यंतरिक्षनामसु पाठात् । नोऽस्माकं शं शांत्यै भवंतु ॥

१२. सत्यस्य पतयः पालकाः सत्यशीला नोऽस्माकं शं शांत्यै भवंतु । अर्वंतोऽश्वाश्च नोऽस्माकं शं शांत्यै भवंतु । गावोऽपि नः शं शांत्यै भवंतु । सुकृतः सुकर्माणः सुहस्ताः शोभनहस्ताः ऋभवोऽपि नोऽस्माकं शं शांत्यै संतु । हवेषु स्तोत्रेषु सत्सु पितरोऽपि नोऽस्माकं शं शांत्यै भवंतु ॥

१३. अज एकपात् अज एकपान्नामधेयो देवो नोऽस्माकं शं शांत्यै अस्तु । अहिर्बुध्न्यश्च नोऽस्माकं शं शांत्यै अस्तु । समुद्रोऽपि नः शं शांत्यै अस्तु । पेरुः उपद्रवेभ्यः पारयिता अपां नपात् अपांनपान्नामधेयोऽपि देवो नोऽस्माकं शं शांत्यै अस्तु । देवगोपा देवा गोपयितारो यस्यां सा पृश्निर्मरुतां माता नोऽस्माकं शं शांत्यै भवतु ॥

१४. नवीयो नवतरमस्माभिः क्रियमाणमिदं ब्रह्म स्तोत्रं आदित्या दिव्याः । अदितिर्द्यौरिति श्रुतेः । रुद्रा आंतरिक्षाः वसवः पार्थिवाश्च जुषंत जुषंतां सेवंताम् । अन्ये दिव्याः दिवि भवाः पार्थिवासः पार्थिवाः गोजाताः गोः पृश्नेर्जाताः । नाको गौरिति साधारणनामसु पाठात् । उत अपि च ये यज्ञियासो यज्ञार्हाः ते सर्वेपि नोऽस्माकं हवं शृण्वंतु ॥

(P. 66.) १५. यज्ञियानां यजनीयानां देवानामपि यज्ञिया यजनीया मनोः प्रजापतेश्च यजत्रा यजनीया अमृता मरणरहिता ऋतज्ञाः सत्यज्ञा ये देवाः संति

ते सर्वे उरुगायं बहुकीर्तिं पुत्रमस्य नोऽस्मभ्यं रासंतां प्रयच्छंतु । सिद्धं पूर्वात्तम पादः ॥

इति पंचमस्य तृतीये त्रिंशो वर्गः ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये पंचमाष्टके तृतीयोऽध्यायः समाप्तः ॥

---

## 36.

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरम् ॥

अथ पंचमाष्टके चतुर्थोऽध्याय आरभ्यते । तत्र षडनुवाकात्मकस्य वासिष्ठस्य सप्तमस्य मंडलस्य तृतीयेऽनुवाके द्वाविंशतिः सूक्तानि । तत्र प्र ब्रह्मेति नवर्चं तृतीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं पूर्ववद्वैश्वदेवम् । अनुक्रांतं च प्र ब्रह्म नवेति । विनियोगो लैंगिकः ॥

१ ऋतस्य यज्ञस्य सदनात् स्थानाद्देवयजनदेशात् ब्रह्म स्तोत्रं स्तुत्यान् सूर्यादीन् प्रैतु प्रकर्षेण गच्छतु । किं तद्ब्रह्मेति तदाह । सूर्यः सर्वस्य प्रेरकः शोभनवीर्यो वा देवो रश्मिभिरात्मीयैः किरणैः गा अपो वृष्ट्युदकानि विससर्ज विसृजति विमुंचति प्रवर्षति । श्रूयते हि । याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षतीति । स्मृतिश्च भवति । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा इति । अत ईदृशं माहात्म्यं सूर्यस्यैव विद्यते नान्यस्य चिदित्यनेन पदेन सूर्यः स्तूयते । अपि च पृथिवी प्रथिता भूमिः सानुना समुच्छ्रितेन पर्वतादिना उर्वी विस्तीर्णा सती विसस्रे विसरति व्याप्नोति । तथा अग्निः पृथु विस्तीर्णं प्रतीकं पृथिव्या अवयवं देवयजनलक्षणं स्थानं अधि अधिपरी अनर्थकावित्यधेः कर्मप्रवचनीयसंज्ञायां कर्मप्रवचनीययुक्ते इति सप्तम्यर्थे द्वितीया । ईदृशे स्थान आ ईधे आदीप्यते ॥

२. हे असुरा असुरौ बलवंतौ हे मित्रावरुणा मित्रावरुणौ वां युवाभ्यां इयं न हवीरूपं अन्नमिव नवीयो नवीयसीमिमामस्मदीयां पुरोवर्तिनीं सुवृक्तिं स्तुतिं कृण्वे अहं स्तोता करोमि । वां युवयोरन्यः अन्यतरः इनः प्रभुः अदब्धः शत्रुभिरहिंसितो वरुणः पदवीः पदस्य स्थानस्य प्रजनयिता । वरुणो हि धर्माधर्मयोर्धारयितेति पदवीरित्युच्यते । ब्रुवाणः अस्माभिः स्तूयमानो मित्रश्च जनं सर्वं प्राणिजातं यतति यातयति प्रवर्तयति । तथा च श्रूयते मित्रो जनान्यातयाति ब्रुवाण इति ॥

३. प्र जवतो गच्छतो वातस्य वायोः इरयाः गतयः आ रंते अभितो रमंते । तथा सुदाः सुद क्षरणे इति धातुः क्षीरस्य प्रदयित्र्यः धेनवो न नेति चार्थे गावश्च अपीप्यन् आप्याययंते पूर्यंते । अपि च महो महतो दिवो द्योतमानस्यादित्यस्य सदने

स्थानेऽंतरिक्षे जायमानः उत्पद्यमानः वृषभो वर्षणशीलः पर्जन्यः सस्मिन् ऊधन् तस्मिन्नंतरिक्षेऽचिक्रदत् ॥

४. अस्याः पूर्वोऽर्धर्च इंद्रस्तुतिपरोऽर्यम्णः स्तुतिः । हे शूर विक्रांतेंद्र ते तव प्रिया प्रियौ सुरथा सुष्टुरंहणौ धातू धारकौ एता एतौ हरी स्वदीयावश्वौ यो जनः गिरा स्तुतिरूपया वाचा युनजत् रथे ‾ ‾ ‾ इंद्र स्वमस्य यागमायाहीति शेषः । योऽर्यमा रिरिक्षतः हिंसितुमिच्छतः शत्रोः संबंधिनं मन्युं कोपं प्र मिनाति प्रकर्षेण हिनस्ति सुक्रतुं शोभनकर्माणं अर्यमणं आ ववृत्यां स्तुत्यावर्तयामि ॥

( P. 67. ) ५. अनया रुद्रः स्तूयते । नमस्विनः हविर्लक्षणान्नवंतः स्वे स्वकीये ऋतस्य यज्ञस्य धामन् धामनि स्थाने । स्वकीये यज्ञगृहे स्थिता इत्यर्थः । वयश्च यंतारः कर्माणि कुर्वाणाः यजमानाः अस्य रुद्रस्य सख्यं सखित्वमुद्दिश्य यजंते पूजयंतु । नृभिर्नेतृभिः स्तवानः स्तूयमानो रुद्रः पृक्षोऽन्नं स्तोतृषु वि बाबधे विबध्नाति ददातीत्यर्थः । प्रेष्ठं रुद्रस्य प्रियतममिदं नमस्तस्मै रुद्राय मया क्रियते ॥

इति पंचमस्य चतुर्थे प्रथमो वर्गः ॥

६. यत् यासां गंगादीनां नदीनां मध्ये सिंधुमाता अपां मातृभूता सरस्वती एतदाख्या नदी सप्तथी सप्तमी भवति सुदुघाः कामान्दोग्धुं सुशकाः सुधाराः शोभनधारोपेताश्च नद्यः सुष्वयंत सुष्वयंते गतिकर्मैतत् प्रवहंति स्वेन स्वकीयेन पयसोदकेन अभि पीप्यानाः याश्चाभिवर्धयंत्यो यशसोऽन्नवत्यो वावशानाः कामयमाना नद्यः साकं युगपदेव आ गच्छंतु । आ इत्युपसर्गस्य योग्यक्रियाध्याहारः ॥

७. उत अपि च मंदसानाः मोदमानाः वाजिनो वेगवंतः त्ये ते मरुतो नोऽस्मदीयं धियं यज्ञाख्यं कर्म तोकं च अस्मदीयं पुत्रं च अवंतु रक्षंतु । अक्षरा व्याप्ता चरंती वाग्देवता च नोऽस्मान् परि त्यक्त्वा अस्मद्व्यतिरिक्तानन्यान् मा ख्यत् मा द्राक्षीत् । ते पूर्वोक्ता मरुतो वाक्च युज्यं युक्तमपि नोऽस्मदीयं रयिं धनं अवीवृधन् वर्धयंतु ॥

८. हे स्तोतारो वो यूयं अरमतिं उपरतिरहितां महीं महतीं भूमिं प्र कृणुध्वं आह्वयत । तथा विदथ्यं यज्ञार्हं वीरं न सर्वेषां प्रेरकं च पूषणं एतन्नामकं देवं प्रकृणुध्वम् । तथा अस्या धियः नोऽस्मदीयस्यास्य कर्मणः अवितारं रक्षितारं भगं देवं चाह्वयत । अपि च सातौ अस्मदीये यज्ञे युद्धे वा वाजं ऋभूणामन्यतमं देवं आह्वयत । कीदृशं वाजं रातिषाचं दानसेवकं पुरंधिं पुराणां धारयितारम् ॥

९. यज्ञपुच्छे अच्छायं व इति चमसिनः स्वं स्वं चमसमभिमृशेयुः । सूत्रितं च । अच्छायं वो मरुतः श्लोक एत्वित्येतयाभिमृशंतीति ॥

हे मरुतो वो युष्मान् अयं श्लोकः अस्मदीयमिदं स्तोत्रं अच्छ एतु अभिगच्छतु । निषिक्तपां निषिक्तस्य गर्भस्य रक्षितारम् । यद्वा चमसे निषिक्तानां सोमानां पातारं अवोभिरस्मद्विषयरक्षणैर्युक्तं विष्णुं च अस्मदीयं स्तोत्रमच्छैतु । उत अपि च मरुतो विष्णुश्च गृणते स्तुवते मह्यं प्रजायै पुत्ररूपां प्रजां वयोऽन्नं च धुः अधुः दधतु । हे मरुतः हे विष्णो यूयं स्वस्तिभिरविनाशैर्नोऽस्मान् सदा सर्वदा पात रक्षत ॥

इति पंचमस्य चतुर्थे द्वितीयो वर्गः ॥

---

# 37.

( P. 68. ) आ वो वाहिष्ठ इत्यष्टर्चं चतुर्थं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वैश्वदेवम् । अनुक्रम्यते च । आ वोऽष्टाविति । विनियोगो लैंगिकः ॥

१. अनेन तृचेन ऋभवः स्तूयंते । ऋभुक्षणो विस्तीर्णस्य तेजसो निवासभूता हे वाजाः ऋभवः वाहिष्ठो वोढृतमः स्तवध्यै स्तोतुमर्होऽमृक्तः केनाप्यहिंसितः युष्मदीयो रथः वो युष्मान् आ वहतु आ समंतात् अस्मदीयं यज्ञं प्रापयतु । हे सुशिप्राः शोभनहनव यूयं तेन रथेनागत्य सवनेष्वस्मदीययज्ञेषु मदे मदनिमित्तं त्रिपृष्ठैः क्षीरदधिसक्तुभि-र्मिश्रैर्महद्भिः सोमैः अभि पृणध्वं युष्मदीयं जठरमभिपूरयत । स रथो युष्मानावह-त्विति पूर्वेणान्वयः ॥

२. हे ऋभुक्षणः हे ऋभवः स्वर्दृशः स्वर्गं पश्यंतो यूयं ह यूयमेव मघवत्सु हवि-र्लक्षणान्नवत्स्वस्मासु निमित्तेषु अमृक्तं अहिंसितं चोरादिभिर्नापहृतमित्यर्थः । रत्नं रमणीयं धत्थ धारयथ । तदनंतरं स्वधावंतो बलवंतस्ते यूयं यज्ञेषु अस्मदीययज्ञेषु सं पिबध्वं सम्यक् सोमं पिबत । अपि च यूयं मतिभिर्धनहेतुभिः नोऽस्मभ्यं राधांसि धनानि वि दयध्वं विशेषेण दत्त ॥

३. उवोचिथेत्याद्याः पंचर्च इंद्रदेवताकाः । हे मघवन् धनवन्निंद्र त्वं महो महतः अर्भस्याल्पस्य च वसुनो धनस्य विभागे परिचरणानुकूले दाननिमित्ते देष्णं धनं उवोचिथ हि सेवसे खलु । उचतिः सेवाकर्मा । तथा ते त्वदीयौ उभा उभौ गभस्ती बाहू वसुना धनेन पूर्णा संपूर्णौ भवतः । ते त्वदीया सूनृता वाक् वसव्या वसूनि धनानि न नियमते न निबच्छति । यद्वा वसव्या वसुषु धनेषु साधुः सूनृता वाक् धनेन संपूर्णौ त्वदीयौ बाहू न नियच्छति नाल्पं प्रदापयतीत्यर्थः ॥

४. हे इंद्र स्वयशाः असाधारणकीर्तिः ऋभुक्षाः ऋभुनिवासकः ऋभूणामीश्वरो वा त्वं साधुःसाधकः वाजो न अन्नमिव ऋक्वा ऋक्वणः स्तोतुः मम अस्तं गृहं एषि प्राप्नुहि । नु अद्य वसिष्ठाः एतत्संज्ञका ऋषयो वयं हे हरिवः स्वकीयाश्वोपेतेंद्र ते त्वदर्थं दाश्वांसः हविर्लक्षणान्नं दत्तवंतः ब्रह्म स्तोत्रं कृण्वंतः कुर्वंतः संतः स्याम भवेम ॥ .

५. हे हर्यश्व हरिनामकाश्वेंद्र त्वं याभिर्धीभिःअस्मदीयाभिः स्तुतिभिः विवेषः व्याप्नोषि स त्वं दाशुषे चित् हविर्दत्तवते यजमानायापि प्रवतः प्रवणस्य धनस्य सनितासि दाता भवसि । अपि च हे इंद्र त्वं नोऽस्मभ्यं कदा कस्मिन् काले रायो धनानि आ द-शस्येः प्रयच्छेः । नु अद्य ते तव युज्याभिः योग्याभिः ऊती ऊतिभिः रक्षाभिः वयम् त्वां संभजेम ॥

इति पंचमस्य चतुर्थे तृतीयो वर्गः ॥

( P. 69. ) ६. हे इंद्र त्वं कदा कस्मिन्काले नोऽस्मदीयं वचसः वचोरूपं स्तोत्रं बुबोधः अवगच्छेः। तथा स त्वं वेधसः स्तोतॄन् अस्मान् वासयसीव इदेदानीमर्थे इदानीं स्वकीये स्थाने अवस्थापयसि । किंच वाजी बलवान् अर्वा वेगवान् त्वदीयोऽश्व-तात्या तनोतेरिदं रूपं संततया धियास्मत्प्रेरितया स्तुत्या हेतुभूतया नुर्वीर शोभनपुत्रोपेतं रयिं त्वदीयं धनं पृक्षोऽन्नं च नोऽस्मदीयं अस्तं गृहं न्युहीत निवहेत ॥

७. देवी द्योतमाना निर्ऋतिश्चित् भूमिरपि ईशे। कृत्यार्थे केन्प्रत्ययः। ईशितव्या अस्वभूता सती यमिंद्रं अभि नक्षते व्याप्नोति। सुप्रक्षः शोभनान्नैरुपेताः शरदः संवत्सराश्च यमिंद्रं नक्षंते व्याप्नुवंति। मर्ताः मरणधर्माणः स्तोतारो वयं यमिंद्रं अस्वेवशं स्वकीये स्थानेऽनुपविशंतं कृणवंत कुर्वंति त्रिबंधुः त्रयाणां लोकानां बंधको विधारकः स इंद्रः जरदष्टिं जरज्जीर्णमष्टिं दशनं यस्य बलस्य हेतुभूतं तद्बलं उपैति उपगच्छति॥

८. हे सवितः सर्वस्य प्रेरक देव त्वत्सकाशात् स्तवध्यै स्तोतुं योग्यानि राधांसि धनानि नोऽस्मान् आ यंतु आगच्छंतु पर्वतस्य पर्वत इति कश्चिदिंद्रस्य सखा एतत्संज्ञकस्य देवस्य रातौ दाने सति रायो धनानि अस्मानायंतु। पायुः सर्वस्य पालको दिव्यो दिवि भवः स इंद्रः सदा सर्वदा नोऽस्मान् सिषक्तु रक्षकत्वेन सेवताम्। अस्मिन्सूक्ते ये प्रतिपादका देवास्ते सर्वे यूयं नोऽस्मान् स्वस्तिभिः कल्याणैः सदा पात पालयत॥

इति पंचमस्य चतुर्थे चतुर्थो वर्गः॥

---

## 38.

उदु ष्य देव इत्यष्टर्चं पंचमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं सवितृदेवताकम्। सप्तम्यष्टम्यौ वाजिदेवताके। भगमुग्रोऽवस इत्यर्धर्चो भगदेवत्यः सावित्रो वा। तथा चानुक्रमणिका। उदु ष्य सावित्रमंत्ये वाजिन्यौ भगमिति भागो वार्धर्च इति। गतः सूक्तविनियोगः॥

१. सविता सर्वस्य प्रेरकः स्यः स देवो हिरण्ययीं सुवर्णमयीं यां अमतिं रूपनामैतत् रूपं प्रभामित्यर्थः। अशिश्रेत् आश्रयतिताममतिं उद्ययाम उद्यच्छति उद्गमयति। उ इति पादपूरणः। नूनमद्य भगो भजनीयो यः सविता मानुषेभिः मनुष्यैः स्तोतृभिः हव्यो हवनीयः स्तोतव्यो भवति। पुरूवसुः बहुधनो यो देवः स्तोतृभ्यो रत्ना रत्नानि रमणीयानि धनानि वि दधाति करोति स सविता देवस्ताममतिमुद्ययामेति पूर्वेण संबंधः॥

२. हे सवितः सर्वस्य प्रेरयितर्देव त्वमुत्तिष्ठ ऊर्ध्वं गच्छ। ततः हे हिरण्यपाणे हे सुवर्णहस्त त्वं अस्मदभीप्सितप्रदानाय ऋतस्य यज्ञस्य प्रभृतौ प्रणयने अस्य अस्मदीयमिदं स्तोत्रं श्रुधि शृणु। उ इति पूरणः। कीदृशस्त्वम्। उर्वीं विस्तीर्णां पृथ्वीं प्रथितां अमतिं रूपं प्रभां विसृजानो विसृजन् नृभ्यो नेतृभ्यः स्तोतृभ्यः मर्तभोजनं मनुष्याणां भोगयोग्यं धनं आसुवानः प्रेरयन्। एवंभूतस्त्वमिदं स्तोत्रं शृण्विति संबंधः॥

(P. 70.) ३. अपि च सविता देवः अस्माभिः स्तुतोऽस्तु। अस्मदीयाः स्तुतीः शृणोत्वित्यर्थः। विश्वे वसवश्चित् सर्वे देवा अपि यं सवितारं आ गृणंति अभिष्टुवंति नमस्यः सर्वैर्नमस्करणीयः स देवः स्तोमान् नोऽस्मदीयानि स्तोत्राणि चनः अन्नं धात् दधातु अन्नफलानि करोतु। विश्वेभिर्विश्वैः सर्वैः पायुभिः पालनैः सूरीन् स्तोतॄनस्मान्नि पातु नितरां पालयतु॥

४. देवी द्योतमाना अदितिरदीना देवमाता यं सवितारं अभि गृणाति अभिष्टौति । कीदृशी । सवितुर्देवस्यैव सवं प्रसवमनुज्ञां जुषाणा सेवमाना । सम्राजः सम्यग्राजमानाः वरुण उपलक्षणमेतत् वरुणादयो देवा यं सवितारमभि गृणंति अभिष्टुवंति । मित्रासो मित्रादयश्च सजोषाः समानप्रीति अर्यमा एतत्संज्ञको देवश्च यमभिगृणंति स न स्तोमांश्चनो धारिन्निति पूर्वयर्चा संबंधः ॥

५. रातिषाचो दानसेविनः वसुवः संभक्तारः ये यजमानाः मिथः परस्परं संहता भूत्वा सवितारमभिलक्ष्य सपंत परिचरंति । कीदृशम् । दिवो द्युलोकस्य पृथिव्या भूमेश्च पांतं मित्रभूतम् । उतापि च अहिर्बुध्न्यः बुध्नेऽन्तरिक्षे भवो बुध्न्यः एतीत्यहिः एतत्पदद्वयाभिधो मध्यमस्थानोऽग्निरहिर्बुध्न्य इत्युच्यते । सवितुर्मित्रभूतः सोऽपि तेषां नोऽस्माकं सवितृविषयं स्तोत्रं शृणोतु । तथा वरूत्री वाग्देवी च सवितृसहिता सती एकधेनुभिर्मुख्याभिर्गोभिः नि पातु नितरामस्मान्पालयतु ॥

६. इयानः अस्माभिर्याच्यमानः जास्पतिः प्रजानां पालकः सविता देवः सवितुर्देवस्य स्वस्य संबंधि रत्नं रमणीयं तत्प्रसिद्धं धनं याति याचते ॥

७. वैश्वदेवपर्वणि वाजिनस्य हविषः शं नो भवंत्वित्यादिके द्वे याज्यानुवाक्ये । सूत्रितं च । शं नो भवंतु वाजिनो हवेषु वाजेवाजेऽवत वाजिनो न इत्यूर्ध्वजुरनवानं याज्यामिति ॥

देवताता देवतातौ यज्ञे हवेष्वस्मदीयेषु स्तोत्रेषु मितद्रवः मितद्रवणाः मितभागाः स्वर्काः शोभनान्नाः वाजिनः एतदभिधायका देवाः नोऽस्माकं शं सुखाय भवंतु । अपि च अहिं आगत्य हंतारं वृकं वसूनामादातारम् । चोरमिति शेषः । रक्षांसि च जंभयंतो हिंसंतो वाजिनो देवाः सनेमि पुराणनामैतत् पुरातनाः अमीवाः रोगान् अस्मदस्मत्तः युयवन् पृथक्कुर्वंतु ॥

८. हे वाजिनः एतन्नामका देवाः विप्राः मेधाविनः अमृताः अमरणधर्माणः ऋतज्ञाः सत्यं जानतः एवंभूताः संतो यूयं वाजेवाजे सर्वेषु युद्धेषु नोऽस्मान् धनेषु धननिमित्तेषु अवत पालयत । ततो यूयं अस्य मध्वः मधुरोपेतमिमं सोमं पिबत । सोमपानानंतरं मादयध्वं यूयं तृप्ता भवत । ततस्तृप्ता यूयं देवयानैः देवगमनसाधनैः पथिभिर्मार्गैर्यात गच्छत ॥

इति पंचमस्य चतुर्थे पंचमो वर्गः ॥

---

39.

ऊर्ध्वो अग्निरिति सप्तर्चं षष्ठं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वैश्वदेवम् । ऊर्ध्वः सप्त वैश्व देवं त्वित्यनुक्रमणिका । सूक्तविनियोगो लैंगिकः । द्वितीये छंदोमे प्रउगशस्त्रे ऊर्ध्वो अग्निरिति वैश्वदेवमृच । सूत्रितं च । ऊर्ध्वो अग्निः सुमतिं वस्वो अश्रेत् स्या नः सरस्वती जुषाणेति प्रउगमिति ॥

(P. 71.) १. अग्निरंगनादिगुणविशिष्टः ऊर्ध्वः उद्गमनः सन् वस्वो वासकस्य स्तोतुः सुमतिं अस्मदीयां शोभनां स्तुतिं अश्रेत् श्रयतु सेवताम् । प्रतीची अभिमुखी गूर्णिः सर्वासां प्रजानां जरयित्री उषोदेवता देवतातिं यज्ञमेति गच्छति । अद्री आद्रियंतौ श्रद्धावंतौ पत्नीयजमानौ पंथां पंथानं यज्ञमार्गं रथ्येव रथिनाविव भेजाते सेवाते । तथा इषितः संप्रेषितः नोऽस्मदीयो होता ऋतं यज्ञं यजाति यजतु करोत्वित्यर्थः ॥

२. एषां यजमानानां संबंधि सुप्रयाः शोभनान्नेन युक्तं बर्हिः कुशमयं प्र वृंजे प्रवृज्यते आसाद्यत इत्यर्थः । विश्पतीव इवेतीदानीमर्थे इदानीमस्मदीयानां प्रजानां पालकौ नियुत्वान् नियुच्छब्देन वडवा उच्यंते तद्वान्वायुः पूषा च विशां प्रजानां स्वस्तये क्षेमाय अक्तोः रात्रेः संबंधिन्या उषसः सकाशात्पूर्वहूतौ पूर्वस्मिन्नाह्वाने सति वीरिटेऽतरिक्षे आ इयाते आगच्छताम् । यद्वा विश्पतीवेत्युपमा । विशां मनुष्याणां वीरिटे गणे विश्पतीव राजानौ यथागच्छतां तद्वत् । अस्मिन्पक्षे विशामित्युभयत्र संबध्यते ॥

३. वसवो वसुसंज्ञका देवाः अत्रास्मिन्यज्ञे ज्मयाः पृथिव्याः — रंत रमयंताम् । उरौ विस्तीर्णेऽतरिक्षे स्थिताः शुभ्राः दीप्यमानाः मरुतश्च मर्जयंत परिवर्तंते । हे उरुज्रयः प्रभूतगमनाः वसवो मरुतश्च यूयं पथः युष्मदीयान्मार्गान् अर्वाग् अस्मदभिमुखं यथा भवंति तथा कृणुध्वं कुरुत । अपि च यूयं जग्मुषः युष्मान् प्रति गतवतो नोऽस्मदीयस्य अस्य दूतस्याग्नेराह्वानं श्रोत शृणुत । अग्निर्हि यजमानानां दूतः सन् देवानाह्वयतीत्यर्थः ।

४. यज्ञेषु यागेषु ते हि ते खलु प्रसिद्धाः यज्ञियासो यज्ञार्हाः ऊमा रक्षकाः विश्वे सर्वे देवाः सधस्थं सहस्थानं अभि संति अभिभवंति आक्रामंति । हे अग्ने अध्वरे अस्मदीये यज्ञे उशतः कामयमानान् तान्देवान्यक्षि यज । तथा श्रुष्टी क्षिप्रनामैतत् क्षिप्रं भगं एतत्संज्ञकं देवं नासत्या नासत्यौ अश्विनौ च पुरंधिं पुरूणां ध्यातारं इंद्रं च यज ॥

(P. 72.) ५. हे अग्ने त्वं दिवः द्युलोकात्सकाशात् गिरो — — — स्तुत्यान्देवानस्मदीयं यज्ञं प्रति आवह आह्वानं कुरु । पृथिव्याः अंतरिक्षाच्च आवह । कान्देवानिति तदुच्यते । मित्रं एतत्संज्ञकं वरुणं च इंद्रं च देवेषु देवतास्वरूपेणावस्थितं चाग्निं अर्यमणमेतत्संज्ञकमदितिमदीनां पृथिवीं च विष्णुं च । एवंभूतान्देवान् एषामस्माकं यजमानानां अर्थाय आवह । सरस्वती वाग्देवता च मरुतश्च मादयंताम् । अस्मदीयैः स्तोत्रैर्हविर्भिश्च माद्यंतु ॥

६. यज्ञियानां चतुर्थ्यर्थे षष्ठी यज्ञार्हेभ्यो देवेभ्यः मतिभिः अस्मदीयाभिः स्तुतिभिः सह हव्यं हविः ररे अस्माभिर्दीयते । मर्तानां मनुष्याणामस्माकं काममभिलाषं असिन्वन् अप्रतिबध्नन् अग्निः नक्षत् अस्मदीयं यज्ञं व्याप्नोतु । हे देवा यूयमविदस्यमनुपक्षपणीयं सदासां सर्वदा संभजनीयं रयिं धनं धात अस्मभ्यं दत्त । नु अद्य वयं युज्येभिः सहायभूतैः इह यज्ञे समागतैर्देवैः सक्षीमहि । यद्वा नु इत्युपमार्थे । युज्येभिर्नु बंधुभिरिव देवैः सक्षीमहि ॥

७ नु अद्य रोदसी द्यावापृथिव्यौ वसिष्ठैरस्माभिः पूजार्थं बहुवचनं । अभिष्टुते अभितः सर्वतः स्तुते अभूताम् । तथा ऋतावानः अस्माभिः क्रियमाणैर्यज्ञैरुपेता वरुणो

७. पूर्वं व्याख्यातेयम् । अक्षरार्थस्तु । द्यावापृथिव्यौ वरुणादयो देवाश्च यैरिष्टैर-स्माभिरभिष्टुता भवंति । एवंभूता आह्लादका देवाः सर्वोत्कृष्टमन्नमस्मभ्यं ददतु । अस्मिन्सूक्ते प्रतिपादिताः सर्वे देवा यूयं कल्याणैरस्मान्सर्वदा पालयत ॥

इति पंचमस्य चतुर्थे सप्तमो वर्गः ॥

---

## 41.

प्रातरग्निमिति सप्तर्चमष्टमं सूक्तम् । अत्रानुक्रमणिका । प्रातर्भगं जगत्याद्या लिंगोक्तदेवतांत्योषस्येति । वसिष्ठ ऋषिः । आद्या जगती शिष्टास्त्रिष्टुभः । आद्याः अग्नींद्रादिदेवत्या द्वितीयाद्याः पंच भगदेवत्याः सप्तम्युषोदेवत्या । अत्र केचिदाहुः ।

निवेष्टुकामो रोगार्त्तो भगसूक्तं जपेत्सदा ।
निवेशं विशति क्षिप्रं रोगैश्च परिमुच्यते ॥

( P. 74. ) १. प्रातरुषःकाले अग्निं देवं हवामहे वयं स्तोतार आह्वयामः । तथा प्रातःकाले इंद्रं हवामहे । तथा मित्रावरुणा मित्रावरुणौ अहोरात्राभिमानिनौ देवौ प्रातर्वयं हवामहे । तथा अश्विनौ देवानां भिषजौ प्रातर्वयं हवामहे । तथा प्रातर्भगं देवं पूषणं देवं ब्रह्मणस्पतिं मंत्राभिमानिनमेतत्संज्ञकं च आह्वयामः । तथा प्रातः सोममेतत्संज्ञकं देवं उतापि च रुद्रं देवं च हुवेम आह्वयामः ॥

२. यो भगो देवः विधर्ता विश्वस्य जगतो धारकः जितं जयशीलं उग्रं उद्गूर्णं अदितेः पुत्रं भगं देवं प्रातःकाल एव वयं हुवेम आह्वयामः । आध्रश्चित् दरिद्रोऽपि स्तोता यं भगं देवं मन्यमानः स्तुवन् भगं भजनीयं धनं भक्षि भज विभज मह्यं देहीत्याह ब्रवीति तुरश्चित् तुरतिर्गतिकर्मा प्राप्तधनोऽपि राजा चित् समर्थोऽपि जनो यं भगं देवं भजनीयं धनं मह्यं भक्षि देहीत्याह तं भगं प्रातरेव वयं हुवेमेति संबंधः ॥

३. हे भग देव त्वं प्रणेता प्रकर्षेण नेतासि । तादृशप्रणेतः हे भग त्वं सत्यराधः सत्यधनोऽसि । तादृशसत्यराधः हे भग त्वं नोऽस्मभ्यं ददत् कामान्प्रयच्छन् इमामस्मदीयां धियं स्तुतिं उदव उद्रक्ष फलयुक्तां कुरु । हे भग त्वं गोभिरश्वैश्च नोऽस्मान् प्र जनय प्रोद्भूतान् कुरु । हे भग त्वत्प्रसादात् वयं नृभिर्नेतृभिः पुत्रादिभिः नृवंतो मनुष्यवंतः प्र स्याम प्रभवेम ॥

४. उतापि च इदानीं वयं भगवंतः स्याम हे भग भगेन त्वया स्वामिना युक्ता भवेम । यद्वा भगवंतो धनवंतः स्याम । उतापि च प्रपित्वेऽह्नां प्राप्ते पूर्वाह्णे भगवंतः स्याम । उतापि च अह्नां दिवसानां मध्ये मध्याह्ने भगवंतः स्याम । उतापि च हे मघवन् धनवन् भग देव सूर्यस्य सर्वस्य प्रेरकस्य देवस्य उदिता उदितौ उदये सति वयं त्वदनुग्रहाद्देवानामिंद्रादीनां सुमतौ अनुग्रहबुद्धौ स्याम भवेम ॥

५. हे देवाः भगो देव एव भगवान् धनवानस्तु । तेन भगेन देवेन धनेन वयं भगवंतः स्याम धनवंतो भवेम । हे भग तं प्रसिद्धं त्वा त्वां सर्व इत्सर्व एव जनः जोहवीति भृशं पुनः पुनर्वाह्वयति । हे भग देव स त्वं इहास्मिन्यज्ञे नोऽस्माकं पुरएता पुरोगंता भव ॥

(P. 75.) ६. शुचये शुद्धाय गमनयोग्याय पदाय स्थानाय दधिक्रावेव अश्वो यथा तथा उषसः उषोदेवताः अध्वराय अस्मदीयाय यागाय सं नमंत संगच्छंतु । वाजिनो वेगवंतोऽश्वाः रथमिव रथं यथा तथोषसोऽर्वाचीनमस्मदभिमुखं वसुविदं धनस्य प्रापकं भगं देवं नोऽस्मान्प्रति आ वहंतु आनयंतु ॥

७. भद्राः भजनीयाः उषसः उषोदेवताः अश्वावतीः अश्ववत्यः अश्वसहिताः सत्यः गोमतीर्गोमत्यश्च वीरवतीर्वीरवत्यः पुत्रादिजनोपेताश्च भवंत्यः नोऽस्मभ्यं सदं सर्वदा उच्छंतु नैशं तमो विवासयंतु । कीदृश्यः । घृतमुदकं दुहानाः सिंचंत्यः विश्वतः सर्वैर्गुणैः प्रपीताः प्रवृद्धाः एवंभूता उषसस्तमः उच्छंतु । अस्मिन् सूक्ते प्रतिपादिताः हे सर्वे देवाः यूयं नोऽस्मान् सदा सर्वदा स्वस्तिभिः कल्याणैः पात पालयत ॥

इति पंचमस्य चतुर्थेऽष्टमो वर्गः ॥

---

## 42.

प्र ब्रह्माण इति षडृचं नवमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वैश्वदेवम् । अत्रानुक्रांतम् । प्र ब्रह्माणः षड्वैश्वदेवं त्विति । सूक्तविनियोगो लैंगिकः । तृतीये छंदोमे प्रउगशस्त्रे प्र ब्रह्माण इति वैश्वदेवस्तृचः । सूत्रितं च । प्र ब्रह्माणो अंगिरसो नक्षंत सरस्वतीं देवयंतो हवंतेति ॥

१. ब्रह्माणोऽंगिरसः एतन्नामका ऋषयः प्र नक्षंत सर्वत्र व्याप्नुवंतु । क्रंदनुः पर्जन्यः नभन्यस्य स्तोत्रस्य अस्मदीयं स्तोत्रं प्र वेतु प्रकर्षेणेच्छतु । धेनवः प्रीणयित्र्यो नद्यः उदप्रुतः उदकानि सिंचंत्यः प्र नवंत सर्पंतु । अद्री आद्रियंतौ पत्नीयजमानौ अध्वरस्य यज्ञस्य पेशः रूपं युज्यातां योजयताम् ॥

२. हे अग्ने सनवित्तः सनाच्चिरकालादारभ्य लब्धः ते त्वदीयोऽध्वा मार्गः सुगः सुष्ठु गंतव्यो भवतु । किंच हरितः श्यामवर्णाः रोहितश्च लोहितवर्णाश्चेत्युभयविधाः ये वा ये च ते त्वदीया अश्वाः सद्मन सद्मनि यज्ञगृहे वीरवाहः वीरं शूरं त्वां वहंतः अरुषाः आरोचमाना भवंति तांश्च त्वं सु युक्ष्व । त्वदीये रथे सुष्ठु संयोजय । सत्तः यज्ञगृहे निषण्णोऽहं होता सन् देवानामिंद्रादीनां जनिमानि जनान् संघान्हुवे आह्वयामि ॥

३. हे देवाः वो युष्माकं यज्ञं नमोभिः नमस्कारैः युक्ता इमे स्तोतारो वा यजमाना वा सं महयन् सम्यक् पूजयंति । उ इति पूरकः । मंद्रः स्तुतिशीलः उपाकेऽस्माकं समीपे स्थितोऽस्मदीयो होता प्र रिरिचे अन्येभ्यो होतृभ्योऽतिरिच्यते । हे यजमान त्वं देवान् सु सुष्ठु यजस्व । हे पुर्वणीक बहुतेजस्विन्नग्ने त्वं यज्ञियां यज्ञार्हामरमतिं भूमिं आ ववृत्याः आवर्तय । तथा च निगमांतरं । आ नो महीमरमतिं सजोषा इति ॥

( P. 76. ) ४. अतिथिः सर्वेषामतिथिभूतोऽग्निः यदा वीरस्य स्तोत्राणां प्रेरयितुः रेवतः हविष्मतो यजमानस्य दुरोणे गृहे स्योनशीः सुखेन शयनीयः आचिकेतत् प्रज्ञायते अग्निर्दमे यज्ञगृहे सुधितः आकारश्चार्थे सुनिहितश्च सुष्ठु निहितः सन् यदा सुप्रीतो भवति तदा सोऽग्निः आ इयत्यै उपगच्छंत्यै विशे प्रजायै वार्यं वरणीयं धनं दाति ददाति प्रयच्छति ॥

५. हे अग्ने त्वं नोऽस्मदीयमिममध्वरं यज्ञं जुषस्व सेवस्व । किंच मरुत्सु इंद्रस्य सखिभूतेषु देवेषु इंद्रे च यशसं यशोयुक्तं हविर्लक्षणान्नवंतं नोऽस्मदीयं यज्ञं हे अग्ने त्वं कृधि कुरु स्थापयेत्यर्थः । तथा नक्ता रात्रिश्च उषसा दिवसश्च अहर्निशं इत्यर्थः बर्हिः बर्हिषि कुशमये आ सदतां उपविशताम् । अपि च हे अग्ने उशंता उशंतौ यज्ञमिच्छंतौ मित्रावरुणा मित्रावरुणौ देवौ इहास्मिन्यज्ञे यज पूजय ॥

६. वसिष्ठः एतदाख्य ऋषिः रायस्कामः पश्वादिधनानीच्छन् एव एवं उक्तप्रकारेण सहस्यं सहो बलं तस्य पुत्रं तद्वंतमिति वा अग्निं देवं विश्वप्स्न्यस्य पुरुरूपस्य धनस्य लाभाय स्तौत् । एवंभूतोऽग्निरस्मे अस्मभ्यमिषमन्नं रयिं धनं वाजं बलं च पप्रथत् प्रथयतु विस्तारयतु ददात्वित्यर्थः । अस्मिन्सूक्ते प्रतिपादिताः सर्वे देवा यूयमस्मान्कल्याणैः सर्वदा पालयत ॥

इति पंचमस्य चतुर्थे नवमो वर्गः ॥

---

## 43.

प्र वो यज्ञेष्विति पंचर्चं दशमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वैश्वदेवम् । प्र वः पंचेत्यनुक्रांतम् । सूक्तविनियोगो लैंगिकः । प्रथमे छंदोमे प्रउगशस्त्रे प्र वो यज्ञेष्विति वैश्वदेवस्तृचः । सूत्रितं च । प्र वो यज्ञेषु देवयंतो अर्चन् प्र क्षोदसा धायसा सस्र एषेति प्रउगमिति ॥

१. देवयंतो देवान्कामयमानाः विप्राः यज्ञेषु नमोभिः स्तुतिभिर्हविर्भिर्वा वो युष्मान् इषध्यै अभिप्राप्तुं प्रार्चन् प्रार्चयंति प्रकर्षेण स्तुवंति । द्यावा दिवं च पृथिवी भूमिं च प्रस्तुवंति । येषां विप्राणां मेधाविनां ब्रह्माणि स्तोत्राणि वनिनो न शाखाः वृक्षस्य शाखा इव विष्वक् विश्वतः वियंति विशेषेण गच्छंति ते विप्राः प्रार्चन्निति पूर्वेण संबंधः ॥

२. अयमस्मदीयो यज्ञः प्र एतु देवान्प्रति गच्छतु । तत्र दृष्टांतः । हेत्वो न सप्तिः शीघ्रगाम्यश्वो यथा तद्वत् । हे ऋत्विजः सर्वे यूयं समनसः सदृशमनस्काः संतः घृताचीः स्रुचः उद्यच्छध्वं हस्ते उद्यम्य धारयत । तथा अध्वराय यागं कर्तुं साधु साधकं बर्हिः कुशमयं स्तृणीत वेद्यां छादयत । हे अग्ने देवयूनि देवान्कामयमानानि त्वदीयानि शोचींषि अर्चींषि ऊर्ध्वा ऊर्ध्वमुखानि अस्थुः तिष्ठंतु ॥

(P. 77.) ३. मातरं जननीं विभृत्राः विशेषेण भर्तव्याः पुत्रासो न पुत्रा इव तद्वदस्मान् भरणीयाः देवासो देवाः बर्हिषः कुशमयस्य वेद्यामास्तीर्णस्य सानौ उन्नते देशे आ सदंतु उपविशंतु । हे अग्ने विदथ्यां यज्ञयोग्यां त्वदीयां ज्वालां विश्वाची विश्वं सर्वं हविरंचति गच्छतीति विश्वाची जुहूः आ अनक्तु आ समंतात्सिंचतु । देवताता देवतातौ युद्धे नोऽस्माकं मृधः हिंसकान् हे अग्ने त्वं मा कः मा कार्षीः । यज्ञवाचको देवतातिशब्दोऽत्र संग्रामे वर्तते ॥

४. यजनीया यजत्रा ते इंद्रादयो देवाः ऋतस्य उदकस्य सुदुघाः सुखेन दोग्धुं शक्या धाराः दुहानाः वर्धंतः जोषं पर्याप्तं यथा भवति तथा आ सीषपंत सपर्यतिः परिचरणार्थः स्तुतिभिः आ समंतात् पर्यचीचरन् अस्मान्परिचरणं कुर्वंतु स्वीकुर्वंत्विति यावत्। अद्यास्मिन्दिने हे देवाः वसूनां धनानां मध्ये ज्येष्ठं श्रेष्ठं वो युष्मदीयं महो महनीयं धनं आगच्छतु। यूयमपि समनसस्तुल्यमनस्काः संतः आ गंतन आगच्छत। हे देवाः यूयं आगंतनेति संबंधः॥

५. हे अग्ने एव एवं स्तुतस्त्वं विक्षु प्रजासु मध्ये नोऽस्मभ्यं आ दशस्य धनमभिप्रयच्छ। हे सहसावन् बलवन्नग्ने त्वया आसक्ताः अस्कन्नाः वयं युजा नित्ययुक्तेन राया धनेन सधमादः सह माद्यंतः अरिष्टाः अहिंसिता भवेम। अस्मिन्सूक्ते प्रतिपादिताः सर्वे देवा यूयं नोऽस्मान्कल्याणैः सर्वदा पालयत॥

इति पंचमस्य चतुर्थे दशमो वर्गः॥

---

## 44.

दधिक्रां व इति पंचर्चमेकादशं सूक्तं वसिष्ठस्यार्षं दधिक्राख्यदेवताकम्। आद्या जगती सा तु दधिक्रादिलिंगोक्तदेवताका शिष्टाश्चतस्रस्त्रिष्टुभः। अनुक्रम्यते हि। दधिक्रां दाधिक्रं जगत्याद्या लिंगोक्तदेवतेति। गतो विनियोगः॥

१. हे स्तोतारः वो युष्माकं ऊतये रक्षणाय प्रथमं दधिक्रामश्वाभिमानिनीं देवतां हुवे आह्वयामि। ततः अश्विना अश्विनौ देवौ उषसमुषोदेवतां च समिद्धं सम्यग्दीप्तमग्निं च भगमेतदाख्यं देवं च आह्वयामि। इंद्रं विष्णुं पूषणं च ब्रह्मणस्पतिमादित्यान् द्यावापृथिवी अपः उदकदेवताः स्वः सूर्यमित्येतान्देवानाह्वयामि॥

२. दधिक्रामेतन्नामकमश्वविशेषं देवं नमसा स्तोत्रेण बोधयंतः प्रज्ञापयंतः उदीराणाः प्रेरयंतः यज्ञं यागमुपप्रयंतः उपक्रममाणा वयं बर्हिषि इळां हवीरूपां देवीं सादयंतः आस्थापयंतः सुहवा शोभनाह्वानौ विप्रा विप्रौ मेधाविनौ अश्विना अश्विनौ देवौ हुवेम आह्वयाम। उ इति पूरणः॥

(P. 78.) ३. दधिक्रावाणमश्वविशेषं बुबुधानः स्तोत्रेण बोधयन्नहमग्निं देवमुप ब्रुवे उपस्तौमि। तथा च उषसमुषोदेवतां सूर्यं सर्वस्य प्रेरकं देवं गां भूमिं वाग्देवतां वा एवंभूतान्देवानहमुपस्तौमि। मंश्चतोः मन्यमानान् स्तुवतो जनान् चेतयते जानातीति। यद्वा अभिमन्यमानांश्चातयते नाशयतीति मंश्चतुः। तस्य वरुणस्य ब्रध्नं महांतं बभ्रुं पिंगलवर्णमश्वं तस्यानयनार्थमहमुपब्रुवे। ते देवा अस्मदस्मत्तः विश्वा विश्वानि सर्वाणि दुरिता दुरितानि पापानि यवयंतु पृथक्कुर्वंतु॥

४. प्रथमः सर्वेषामश्वानां मुख्यः वाजी शीघ्रगामी अर्वा गमनशीलः दधिक्रावा अश्वरूपो देवः प्रजानन् रथसंयोजनीयांस्तांस्तानश्वानधिष्ठाय ज्ञातव्यानि सम्यक् जानन् रथानामग्रे प्रमुखो भवति। कीदृशोऽश्वः। उषसा उषोदेवतया सूर्येण सर्वस्य प्रेरकेण देवेन आदित्येभिरादित्यैश्च वसुभिश्च अंगिरोभिर्देवैः सह स्तोतव्यैर्ऋषिभिश्च संविदानः सम्यक् जानन् ऐकमत्यं प्राप्त इत्यर्थः।

५. दधिक्राः अश्वरूपो देवः ऋतस्य यज्ञस्य पंथां पंथानं मार्गं अन्वेतवै अनुगंतुं प्रवृत्तानां नोऽस्माकं पथ्यां पदवीं आ अनक्तु उदकेनासिंचतु । उ इति पूरणः । दैव्यं शर्धः देवसंबंधि बलं इदूपोऽग्निः नोऽस्मदीयं हवं शृणोतु । अमूराः अमूढाः महिषा महांतः विश्वे सर्वे देवाः अस्मदीयं हवं शृण्वंतु ॥

इति पंचमस्य चतुर्थे एकादशो वर्गः ॥

---

## 45.

आ देवो यात्विति चतुर्ऋचं द्वादशं सूक्तं वसिष्ठस्यार्षं सवितृदेवताकं त्रैष्टुभम् । आ देवश्चतुष्कं सावित्रमित्यनुक्रांतम् । व्यूळ्हे दशरात्रे चतुर्थेऽहनि वैश्वदेवशस्त्र इदं सावित्रनिविद्धानम् । सूत्र्यते हि । चतुर्थेऽहन्या देवो यातु – – – इत्येषा वपानुवाक्या । सूत्रितं च । आ देवो यातु सविता सुरत्नः स घा नो देवः सविता सहावेति । अश्वमेधे अनुसवनं तिस्रः सावित्र्य इष्टयः तत्र द्वितीयस्यामिष्टौ याज्येयम् । सूत्रितं च । य इमा विश्वा जातान्या देवो यात्विति ॥

१. सुरत्नः शोभनरत्नोपेतः अंतरिक्षप्राः स्वकीयेन तेजसांतरिक्षस्य पूरयिता अश्वैः स्वकीयैर्वाहैः वहमानः उह्यमानः सविता सर्वस्य प्रेरको देवः आ यातु आगच्छतु । कीदृशः । नर्या नर्याणि मनुष्यहितानि पुरूणि बहूनि धनानि हस्ते पाणौ दधानः हातुं धारयन् भूम भूतानि निवेशयन् च रात्रिषु स्वे स्थाने स्थापयंश्च प्रसुवन् च अहःसु प्रेरयंश्च । एवंभूतः सविता देवः आयातु ॥

२. शिथिरा शिथिलौ दानार्थं प्रसारितौ बृहंता बृहंतौ महांतौ हिरण्यया हिरण्ययौ सुवर्णमयौ अस्य सवितुः संबंधिनौ बाहू हस्तौ दिवोऽंतरिक्षस्यांतान् पर्यंतान् उदनष्टां ऊर्ध्वौ संतौ व्याप्नुवताम् । नूनमद्य अस्येदृग्भूतस्य सवितुः स तादृशो महिमा महत्त्वं पनिष्ट अस्माभिः स्तूयते । सूरश्चित्सूर्योऽपि अस्मै सवित्रे अपस्यां कर्मेच्छामनुदात् अनुददातु ॥

३. सावित्रे पशौ पुरोडाशस्य हविषोः स घा न इति द्वे अनुवाक्ये । सूत्रं पूर्वमुदाहृतम् । आश्वमेधिकीषु सावित्रेष्टिषु तृतीयस्यामिष्टाविमे एव याज्यानुवाक्ये । सूत्रितं च । स घा नो देवः सविता सहावेति द्वे इति ॥

(P. 79.) सहावा तेजोऽंतराण्यभिभावुकं तेजो यस्य सः वसुपतिर्धनानां पालकः स सविता देवः नोऽस्मभ्यं वसूनि धनानि आ सावीषत् आ समंतात्प्रेरयति । घेति पूरणः । स सविता देवः उरूचीं विस्तीर्णगमनां अमतिं रूपं दीप्तिमित्यर्थः । विश्रयमाणः निषेवमाणः सन् अध अधुना नोऽस्मभ्यं मर्तभोजनं मनुष्याणां भोगयोग्यं धनं रासते ददातु ॥

४. इमाः ईदृग्भूता गिरः गृणंति स्तुवंतीति गिरः स्तोत्र्यः प्रजाः । यद्वा इमाः स्तुतिरूपा वाचः सुजिह्वं शोभनजिह्वं शोभनवाचमित्यर्थः पूर्णगभस्तिं संपूर्णधनहस्तं सवितारं देवमीळते स्तुवंति । स च सविता चित्रं चायनीयं बृहन्महद्वयोऽन्नं अस्मे अ-

स्मासु दधातु । यद्वा अस्मे अस्मभ्यं प्रयच्छतु । हे सवितृप्रमुखा देवाः यूयं नोऽस्मान् स्वस्तिभिः कल्याणैः सदा सर्वदा पात पालयत ॥

इति पंचमस्य चतुर्थे द्वादशो वर्गः ॥

---

## 46.

इमा रुद्रायेति चतुर्ऋचं त्रयोदशं सूक्तं वासिष्ठस्यार्षं रुद्रदेवताकम् । अंत्या त्रिष्टुप् शिष्टा जगत्यः । तथा चानुक्रमणिका । इमा रौद्रं त्रिष्टुबंतामिति । शूलगवाख्ये रौद्रयज्ञेऽनेन सूक्तेनैशानी दिगुपस्थेया । सूत्र्यते हि । इमा रुद्राय स्थिरधन्वन इति सर्वरुद्रयज्ञेषु दिशामुपस्थानमिति ॥

१. हे अस्मदीयाः स्तोतारो यूयमिमा गिरः स्तुतीः रुद्रायैतन्नामकाय रुद्राय भरत धारयत । कीदृशाय । स्थिरधन्वने दृढधनुष्काय क्षिप्रेषवे शीघ्रगामिबाणाय स्वधाव्नेऽन्नवते अषाळ्हाय केनाप्यनभिभूताय सहमानाय शत्रूणामभिभवित्रे वेधसे विधात्रे तिग्मायुधाय तीक्ष्णास्त्राय एवंभूताय रुद्राय स्तुतीर्भरत । स च रुद्रो नोऽस्मदीयाः स्तुतीः शृणोतु ॥

२. स हि स खलु रुद्रो देवः क्षम्यस्य क्षमायां पृथिव्यां भवः तस्य जन्मनो जनस्य क्षयेणैश्वर्येण चेतति प्रज्ञायते । दिव्यस्य जनस्य च साम्राज्येनैश्वर्येण प्रज्ञायते । शेषः प्रत्यक्षकृतः । हे रुद्र देव त्वं च अवंतीस्त्वां स्तोत्रैस्तर्पयंतीर्नोऽस्मदीयाः प्रजाः अवन् पालयन् दुरो दुर्याण्यस्मदीयानि गृहाण्युप चर उपगच्छ । किंच त्वं नोऽस्मदीयासु प्रजास्वनमीवः अमीवा रोगः तामकुर्वन् भव ॥

३. हे रुद्र ते वैद्युतात्मनस्तव संबंधिनी दिवस्परि अंतरिक्षात्सकाशात् अवसृष्टा विमुक्ता या दिद्युदशनिरूपा हेतिः क्ष्मया क्षित्या क्षितौ वा चरति वर्तते सा दिद्युत् नोऽस्मान्परि वृणक्तु परित्यजतु । अपि च हे स्वपिवात ते तव सहस्रं बहूनि भेषजा भेषजानि यान्यौषधानि संति तान्यस्मभ्यं प्रयच्छेति शेषः । नोऽस्माकं तोकेषु पुत्रेषु तनयेषु च मा रिरिषः हिंसां मा कृथाः ॥

(P. 80.) ४. हे रुद्र त्वं नोऽस्मान्मा वधीः मा हिंसीः । तथा मा परा दाः मा च त्याक्षीः । अपि च हीळितस्य क्रुद्धस्य ते तव प्रसितौ प्रकर्षेण बंधने वयं च मा भूम । किंच जीवशंससे जीवैराशंसनीये बर्हिषि यज्ञे नोऽस्मान् आ भज भागिनः कुरु । हे रुद्रप्रमुखा देवा यूयं नोऽस्मान्कल्याणैः सर्वदा पालयत ॥

इति पंचमस्य चतुर्थे त्रयोदशो वर्गः ॥

---

## 47.

आपो यं व इति चतुर्ऋचं चतुर्दशं सूक्तं वासिष्ठस्यार्षं त्रैष्टुभमब्देवताकम् । आपो यमापमित्यनुक्रांतं च । गतो विनियोगः ॥

१. देवयंतो देवानिच्छंतोऽध्वर्यवः हे आपो हे अब्देवताः वो युष्माकं कार्यभूतमिंद्रपानमिंद्रेण पातव्यं इळः इळाया भूम्याः संभूतं यमूर्मिं सोमाख्यं यं रसं प्रथमं पुरा अकृण्वत अभिषवणवचनादिभिः समस्कुर्वत अद्येदानीं वयमपि वो युष्मदीयं तमूर्मिं वनेम संभजेमहि। कीदृशम्। शुचिं शुद्धं अरिप्रं पापरहितं घृतप्रुषं वृष्टिलक्षणमुदकं सिंचंतं मधुमंतं मधुररसोपेतम्। एवंभूतं तं वनेमेति संबंधः॥

२. हे आप एतत्संज्ञका देवाः वो युष्मदीयं मधुमत्तमं रसवत्तमं तमूर्मिं प्रसिद्धं सोमाख्यं रसं आशुहेमा शीघ्रगतिः अपां नपात् एतदाख्यो देवः अवतु पालयतु। इंद्रो यस्मिन्नूर्मौ वसुभिर्वासकैर्देवैः सह मादयाते माद्येत् अद्यास्मिन्दिने देवयंतो देवकामा वयं वो युष्मदीयं तमूर्मिं अश्याम प्राप्नुयाम॥

३. शतपवित्राः शतं बहूनि पवित्राणि पावनानि रूपाणि यासां ताः स्वधया स्वकार्यभूतेनान्नेन मदंतीर्जनान्मादयंत्यो देवीर्देव्यो द्योतमाना आपो देवानामिंद्रादीनां पाथः स्थानं अपि यंति प्रविशंति। तास्तादृश्य आप इंद्रस्य प्रीणनानि व्रतानि यज्ञादीनि कर्माणि न मिनंति न हिंसंति उत्पादयंतीत्यर्थः। हे अध्वर्यवो यूयं सिंधुभ्यस्ताभ्योऽद्भ्यो घृतवदुपस्तरणाभिघारणलक्षणाज्ययुक्तं हव्यं पुरोडाशादिकं हविर्जुहोत जुहुत॥

४. सूर्यो देवो या अपो रश्मिभिः स्वकीयैः किरणैराततान विस्तारयति। सूर्यो हि रश्मिभिरुदकसारमादाय वर्षतीत्यर्थः। याभ्योऽद्भ्यश्च ऊर्मिं अर्तेरिदं रूपं गमनयोग्यं गातुं मेघेभ्यो निर्गमनसाधनं मार्गमिंद्रोऽप्यरदत् वज्रेण मेघान् ताडयन् प्रयच्छति हे सिंधव आपः ते यूयं नोऽस्मभ्यं वरिवो धनं धातन धत्त प्रयच्छत। त इति सिंधुशब्देन समानाधिकरणत्वात्पुंलिंगत्वम्। हे अब्देवता यूयं सर्वदा नोऽस्मान्कल्याणैः पालयत॥

इति पंचमस्य चतुर्थे चतुर्दशो वर्गः॥

---

48.

(P. 81.) ऋभुक्षण इति चतुर्ऋचं पंचदशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं ऋभुदेवताकम्। अंत्याया विकल्पेन विश्वे देवा देवता। तथा चानुक्रांतम्। ऋभुक्षण आर्भवमंत्या वैश्वदेवी वेति। दशमेऽहनि वैश्वदेवशस्त्र आर्भवनिविद्धानम्। सूत्र्यते हि। ऋभुक्षण इत्यार्भवमिति॥

१. ऋभुक्षा इत्यृभूणां ज्येष्ठस्याख्या वाज इति तु कनिष्ठस्य। अत्र ऋभुक्षणो वाजा इति बहुवचनेन ऋभवस्त्रयो गृह्यंते। हे ऋभुक्षणो वाजाः नरो नेतारः मघवानो धनवंतः एवंभूता हे ऋभवो यूयमस्मे अस्मासु स्थितेन सुतस्याभिषुतेन सोमेन मादयध्वं तृप्ता भवत। नेति संप्रत्यर्थे। इदानीं यातां गच्छतां वो युष्मदीयाः क्रतवः कर्मणां कर्तारः विभ्वो विभवः समर्था अश्वाः अर्वाचोऽर्वाचोऽस्मदभिमुखाः नर्यं मनुष्यरथं युष्मदीयं आवर्तयंतु॥

२. हे ऋभवः ऋभुभिर्युष्माभिर्वयं ऋभुः ऋभवः संतः विभुभिर्युष्माभिर्विभ्वो विभवश्च संतः शवांसि शत्रूणां बलानि शवसा युष्मदीयेन बलेन अभि स्याम अभिभवेम । तथा वाजसातौ संग्रामे वाज एतत्संज्ञक ऋभुरस्मानवतु पालयतु। अपि च युजा सहायभूतेनेंद्रेण वृत्रं शत्रुं वयं तरुषेम हनाम । प्रायेण ऋभवोऽपींद्रेण सह स्तूयंत इति॥

३. ते तादृशा इंद्र ऋभवश्च पूर्वीर्बह्वीरस्मच्छत्रुसेनाः शासा शासनेन स्वकीयआज्ञया यद्वा विशस्यते हिंस्यतेऽनेनेति शासशब्द आयुधवाची तेन अभि संति अभिभवंति। चिद्धीतीमौ पूरणौ। किंच उपरताति सप्तम्या लुक् उपरैरुपलैः पाषाणसदृशैरायुधैस्तायते विस्तार्यत इत्युपरताति युद्धं तस्मिन्विश्वान् समस्तानर्योऽरीन शत्रून्वन्वन् हिंसंति। विभ्वा ऋभुक्षा वाज एतत्संज्ञका ऋभवश्चेंद्रश्चार्यः शत्रूणामभिगंतारः संतः शत्रोः संबंधि शुष्मं बलं मिथत्या मिथतिर्हिंसा तया वि कृणवत विकुर्वंतु विनाशयंत्वित्यर्थः॥

४. हे देवासो देवा द्योतमाना ऋभवो यूयं नु अद्य नोऽस्मभ्यं वरिवो धनं कर्तन कुरुत प्रयच्छत। तथा विश्वे सर्वे ऋभवो यूयं सजोषाः सह प्रीयमाणाः संतो नोऽस्माकमवसे रक्षणाय भूत भवत। अपि च वसवः प्रशस्या ऋभवः इषमन्नमस्मे अस्मभ्यं सं ददीरन् संप्रयच्छेयुः। हे ऋभवो यूयमस्मान् सर्वदा कल्याणै रक्षत॥

इति पंचमस्य चतुर्थे पंचदशो वर्गः॥

---

## 49.

समुद्रज्येष्ठा इति चतुर्ऋचं षोडशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमब्देवताकम्। तथा चानुक्रांतम्। समुद्रज्येष्ठा आपमिति। गतो विनियोगः॥

१. समुद्रज्येष्ठाः समुद्रोऽर्णवो ज्येष्ठः प्रशस्यतमो यासामपां ताः सलिलस्य अंतरिक्षनामैतत् अंतरिक्षस्य मध्यात् माध्यमिकात्स्थानात् यंति गच्छंति। कीदृश्यः। पुनानाः विश्वं शोधयंत्यः अनिविशमानाः सर्वदा गच्छंत्यः। वज्री वज्रभृत् वृषभः कामानां वर्षितेंद्रः याः निरुद्धा अपः रराद लिखति देवीर्दिव्यस्ता आप इहास्मिन् प्रदेशे स्थितं मामवंतु रक्षंतु अभिगच्छंतु वा॥

(P. 82.) २. या आपः दिव्या अंतरिक्षभवाः संति उत वा अपि च या आपो नद्यादिगताः सत्यः स्रवंति गच्छंति याश्च खनित्रिमाः खननेन निर्वृत्ताः उत वा अपि च याः स्वयंजाः स्वयमेव प्रादुर्भवंत्यः समुद्र एवार्थो गंतव्यो यासां ताः समुद्रार्थाः शुचयो दीप्तियुक्ताः पावकाः शोधयित्र्यश्च भवंति ता आपो मामवंत्विति॥

३. वरुणः यासामपां राजा स्वामी मध्ये मध्यमलोके याति गच्छति। किं कुर्वन्। जनानां प्रजानां सत्यानृते सत्यं चानृतं च अवपश्यन् जानन्नित्यर्थः। या आप

मधुश्चुतः रसं क्षरंत्यः शुचयो दीप्तियुक्ताः पावकाः शोधयित्र्यः ता आपो देव्यो मां रक्षंत्विति ॥

४. अपां राजा वरुणो यास्वप्सु वर्तते । स कः सोमो यास्वप्सु वर्तते । यास्वप्सु स्थिताः विश्वे सर्वे देवाः ऊर्जमन्नं मदंति । वैश्वानरोऽग्निर्यासु प्रविष्टः ता आपो देव्य इह स्थितं मामवंतु ॥

इति पंचमस्य चतुर्थे षोडशो वर्गः ॥

---

## 50.

आ मां मित्रावरुणेति चतुर्ऋचं सप्तदशं सूक्तं वसिष्ठस्यार्षम् । चतुर्थ्यतिजगती व्यूहेन शक्करी वादितस्तिस्रो जगत्यः । प्रथमा मैत्रावरुणी द्वितीयाग्नेयी तृतीया वैश्वानरी चतुर्थी गंगादिनदीदेवताका । तथा चानुक्रमणिका । आ मां मैत्रावरुण्याग्नेयी वैश्वदेवी नदीस्तुतिर्जागतमंत्यातिजगती शक्करी वेति । अस्य सूक्तस्य प्रत्यृचं विषादिहरणे विनियोगो लिंगादवगंतव्यः ॥

१. हे मित्रावरुणा हे मित्रावरुणौ युवां इहास्मिल्लोके मां आ रक्षतं आभिमुख्येन पालयतम् । कुलाययत् कुलायं स्थानं तत्कुर्वद्विश्वयद्विशेषेण वर्धमानं विषं नोऽस्मान् आ आभिमुख्येन मा गन् मा गमत् मा गच्छतु । तथा अजकावं अजका नामरोगविशेषः तद्वत् दुर्दृशीकं दुर्दर्शनं विषं तिरो दधे तिरो धत्तां नश्यत्वित्यर्थः । तथा त्सरुः छद्मगामी जिह्मगः सर्प इत्यर्थः मां पद्येन पादभवेन रपसा रपिः शब्दकर्मा शब्देन मा विदत् न जानातु ॥

२. वंदनं एतत्संज्ञकं यद्विषं विजामन् विविधजन्मनि परुषि वृक्षादीनां पर्वणि भुवत् उद्भवेत् । यच्च विषं अष्ठीवंतौ जानुनी कुल्फौ गुल्फौ च परि देहत् दिह उपचये उपचितं कुर्यात् । अग्निर्देवः शोचन् दीप्यमानः सन् इतोऽस्माज्जनात्तद्विषमपबाधतां अपहंतु । शिष्टं व्याख्यातम् ॥

(P. 83.) ३. यद्विषं शल्मलौ एतत्संज्ञके वृक्षे भवति । यद्विषं नदीषु तत्रस्थास्वप्सु प्रादुर्भवति । परीति पंचम्यर्थानुवादी । ओषधीभ्यः सकाशाद्यद्विषं जायते उत्पद्यते विश्वे सर्वे देवाः तद्विषं इतो ऽस्माज्जनाद्देशाद्वा निः सुवंतु निःशेषेण प्रेरयंतु । मा मामिति शिष्टं व्याख्यातम् ॥

४. या नद्यः प्रवतः प्रवणदेशे गच्छंत्यः या उदन्वतीरुदन्वत्यः उदकयुक्ताः अनुदकाश्चोदकरहिताश्च या नद्यः यांति पयसोदकेन पिन्वमानाः विश्वमाप्याययंत्यः देवीर्देव्यो द्योतमाना तास्तादृश्यो नद्यः अस्मभ्यं अशिपदाः शिपदं नाम रोगविशेषः तदकुर्वत्यः सत्यः शिवाः कल्याण्यो भवंतु । अपि च सर्वास्ता नद्यः अशिमिदाः शिमिर्वधकर्मा अहिंसाप्रदा भवंतु ॥

इति पंचमस्य चतुर्थे सप्तदशो वर्गः ॥

51.

आदित्यानामिति तृचमष्टादशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमादित्यदेवताकम्। अनुक्रम्यते च। आदित्यानां तृचमादित्यं त्विति। गतः सूक्तविनियोगः। आदित्यदेवताके पशौ आदित्यानामवसेति वपाया अनुवाक्या। सूत्रितं च। आदित्यानामवसा नूतनेनेमा गिर आदित्येभ्य इति। आदित्यग्रहस्यैवानुवाक्या। सूत्रितं च। आदित्यानामवसा नूतनेन होता सक्षदादित्यानिति॥

१. आदित्यानां अदितेः पुत्राणां एतत्संज्ञकानां देवानां अवसा रक्षणेन तद्धेतुभूतेनेत्यर्थः नूतनेनाद्यतनेन शंतमेन शं सुखं अतिशयेन तत्करणेन शर्मणा शर्मेति गृहनामैतत् गृहेण सक्षीमहि वयं संगच्छेमहि। तुरासः तुराः त्वरिता आदित्याः श्रोषमाणाः अस्मदीयानि स्तोत्राणि शृण्वंतः यज्ञं यष्टारमिमं जनं अनागास्त्वे ऽनपराधत्वे च अदितित्वे अदीनत्वे च दधतु स्थापयंतु॥

२. आदित्यासो अदितिरित्यादित्यग्रहस्य याज्या। सूत्रितं च। आदित्यासो अदितिर्मादयंतामिति नैतं ग्रहमीक्षेत हूयमानमिति॥

आदित्यास आदित्या देवा अदितिस्तेषां माता च यद्वा अदितिरिति देवविशेषणं अदितिः अदितयः अदीनाः रजिष्ठाः अतिशयेन ऋजवः मित्रः अर्यमा वरुणश्च एतत्संज्ञकाः मादयंतां तृप्ताः संतु। भुवनस्य सर्वस्य जगतः गोपा रक्षका एवंभूता देवाः अस्माकं संतु। अस्माकमेव रक्षका भवंत्वित्यर्थः। अद्यास्मिन्दिने नोऽस्माकमवसे रक्षणाय सोममस्माभिरभिषुतं पिबंतु॥

(P.84.) ३. आदित्याः अदितेः पुत्रा विश्वे सर्वे द्वादशसंख्याका अर्काः विश्वे मरुतश्च सर्वे एकोनपंचाशत्संख्योपेताश्च विश्वे देवाश्च विश्व ऋभवश्च इंद्रो ऽग्निरश्विनाश्विनौ एतत्संज्ञका एवंभूता ये देवाः तुष्टुवानाः अस्माभिः स्तुता बभूवुः सर्वे ते देवाः यूयं सदा सर्वदा नोऽस्मान् स्वस्तिभिः कल्याणैः पात रक्षत॥

इति पंचमस्य चतुर्थे ऽष्टादशो वर्गः॥

---

52.

आदित्यासो अदितय इति तृचात्मकमेकोनविंशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमादित्यदेवताकम्। आदित्यास इत्यनुक्रमणिका। गतो विनियोगः॥

१. हे आदित्यासः आदित्या देवाः व्यत्ययेनाद्युदात्तत्वाभावः यद्वा आदित्यानामिमे आदित्याः तस्येदमित्यर्थे प्राग्दीव्यतीयो ण्यप्रत्ययः आदित्यानां शेषभूता वयं अदितयः अखंडनीयाः स्याम भवेम। देवत्रा देवेषु वसवो वासका देवाः युष्मदीयं पूः पालनं मर्त्यत्रा मनुष्येष्वस्मासु भवतु। हे मित्रावरुणा मित्रावरुणौ सनंतः युवां संभजंतो वयं

सनेम युवाभ्यां दत्तं धनं संभजेमहि। हे द्यावापृथिवी द्यावापृथिव्यौ युवयोः प्रसादात् वयं भवंतो भवेम भूतिमंतः स्याम ॥

२. मित्रो वरुणः अहर्निशाभिमानिनौ देवौ एतदाद्याः सर्वे आदित्याः नोऽस्मभ्यं तत्प्रसिद्धं शर्म सुखं ममहंत मंहतिर्दानकर्मा ददतु। गोपाः विश्वस्य रक्षकास्ते देवास्तोकायास्मदीयाय पुत्राय तनयाय तत्पुत्राय च शर्म प्रयच्छंतु। अथ प्रत्यक्षस्तुतिः। हे देवाः वो युष्मदीया वयं अन्यजातमन्येनोत्पादितं एनः पापं मा भुजेम मा भुक्तवंतः स्याम। हे वसवो वासका देवाः यद्येन युष्मदप्रियेण कर्मणा चयध्वे यूयमस्मान्नाशयत तत्तादृशं कर्म वयं मा कर्म मा कार्ष्म। लुङि करोतेरुत्तमस्य बहुवचनम्। मंत्रे घसह्वरेत्यादिना च्लेर्लोपः ॥

३. तुरण्यवः यज्ञादिकर्मसु त्वरिताः अंगिरसः एतन्नामका ऋषयः इयानाः सवितारं याचमानाः संतः सवितुः प्रेरकस्य देवस्य संबंधि रत्नं रमणीयं यद्धनं नक्षंत आश्नुवंत उत्तरार्धगततच्छब्दापेक्षया यच्छब्दोऽत्राध्याह्रियते यजत्रः यजनशीलः महान् प्रभूतः पिता च वासिष्ठस्य पितृभूतो वरुणश्च यद्वा सर्वेषां पिता प्रजापतिः विश्वे सर्वे देवाः समनसः समानमनस्काः तत्तादृशं रत्नं नोऽस्मान् जुषंत सेवयंतु। यद्वा नोऽस्मभ्यं ददतु॥

इति पंचमस्य चतुर्थ एकविंशो वर्गः ॥

---

## 53.

प्र द्यावा यज्ञैरिति तृचात्मकं विंशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं द्यावापृथिव्यम्। अनुक्रम्यते च। प्र द्यावा द्यावापृथिव्यमिति। चतुर्थेऽहनि वैश्वदेवशस्त्रे इदं द्यावापृथिव्यनिविद्धानम्। सूत्रितं च। आ देवो यातु प्र द्यावेति वासिष्ठमिति। द्यावापृथिव्ये पशौ वपापुरोडाशयोः प्र द्यावेति द्वे ऋचौ याज्ये। सूत्रितं च। प्र द्यावा यज्ञैः पृथिवी नमोभिरिति द्वे इति ॥

१ यजत्रे यजनीये बृहती बृहत्यौ महत्यौ द्यावापृथिवी द्यावापृथिव्यौ यज्ञैर्यागैः नमोभिः स्तोत्रैश्च अहं स्तोता सबाधो बाधासहितः ऋत्विजां संबाधयुक्त इत्यर्थः प्रईळे प्रकर्षेण स्तौमि। मही महत्यौ देवपुत्रे देवाः पुत्रा ययोस्ते ते चिद्धि तादृश्यौ खल्वपि द्यावापृथिव्यौ पूर्वे पुरातनाः कवयः गृणंतः स्तुवंतः पुरो दधिरे पुरस्तात्स्थापयामासुः ॥

( P. 85. ) २. आग्रयणे द्यावापृथिव्यैककपालस्य प्र पूर्वजे इति याज्या। सूत्रितं च। मही द्यौः पृथिवी च नः प्र पूर्वजे पितरा नव्यसीभिरिति ॥

हे अस्मदीयाः स्तोतारो यूयं नव्यसीभिर्नवतराभिः गीर्भिः स्तुतिरूपाभिर्वाग्भिः ऋतस्य यज्ञस्य सदने स्थानभूते पूर्वजे पूर्वं प्रजाते पितरा पितरौ विश्वस्य मातापितृभूते द्यावापृथिव्यौ प्र कृणुध्वं पुरस्कुरुत। अथ प्रत्यक्षस्तुतिः। हे द्यावापृथिवी द्यावापृथिव्यौ युवां दैव्येन देवसंबंधिना जनेन सह नोऽस्मान् अभि आ यातम् आग-

च्छतम् । किमर्थमायातमित्युच्यते । वां युवयोः वरूथं अस्माभिर्वरणीयं महि महत् । यद्धनमस्तीति शेषः । तद्धनमस्मभ्यं दीयतामित्यर्थः ॥

३. उतो हि अपि च खलु हे द्यावापृथिवी द्यावापृथिव्यौ वां युवयोः सुदासे शोभनहविर्दानाय यजमानाय देयानि पुरूणि बहूनि रत्नधेयानि रमणीयानि धनानि संति भवंति । तेषां मध्ये यद्धनं अस्कृधोयु कृधुको ह्रस्वः अह्रस्वमनल्पं असत् भवेत् तद्धनमस्मे अस्मभ्यं धत्तं प्रयच्छतम् । हे द्यावापृथिव्यौ यूयं युवां नोऽस्मान् सर्वदा कल्याणैः पात पालयतम् ॥

इति पंचमस्य चतुर्थे विंशो वर्गः ॥

---

## 54.

वास्तोष्पते इति तृचात्मकमेकविंशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वास्तोष्पत्यम् । तथा चानुक्रम्यते । वास्तोष्पते वास्तोष्पत्यमिति । स्मार्ते गृहनिर्माणे वास्तोष्पत इति चतसृभिः प्रत्यृचं जुहुयात् । सूत्रितं च । वास्तोष्पते प्रति जानीह्यस्मानिति चतसृभिः प्रत्यृचं हुत्वेति ॥

१. हे वास्तोष्पते गृहस्य पालयितर्देव त्वं अस्मान् त्वदीयान् स्तोतॄनिति प्रति जानीहि प्रबुध्यस्व । तदनंतरं नोऽस्माकं स्वावेशः शोभननिवेशः अनमीवः अरोगकृच्च भव । किंच वयं त्वा त्वां यद्धनमीमहे याचामहे त्वमपि तद्धनं नोऽस्मभ्यं प्रति जुषस्व प्रयच्छ । अपि च नोऽस्माकं द्विपदे पुत्रपौत्रादिजनाय शं सुखकरो भव । चतुष्पदे अस्मदीयाय गवाश्वादिवर्गाय च शं सुखकरो भव ॥

२. हे वास्तोष्पते गृहस्य पालयितर्देव त्वं नोऽस्माकं प्रतरणः प्रवर्धकः गयस्फानः गयस्यास्मदीयस्य धनस्य स्फाययिता प्रवर्धकः एधि भव । हे इंदो सोमवदाह्लादक ते त्वया सह सख्ये सति वयं गोभिः पशुभिरश्वेभिरश्वैश्च सहिता अजरासो जरारहिताः स्याम भवेम विनाशरहिता इत्यर्थः । पितेव पुत्रान् यथा पिता पुत्रान्रक्षकत्वेन सेवते तथा त्वमपि नोऽस्मान्प्रति जुषस्व सेवस्व ॥

३. हे वास्तोष्पते देव शग्मया सुखकर्या रण्वया रमणीयया गातुमत्या धनवत्या ते त्वया देयया संसदा स्थानेन सक्षीमहि वयं संगच्छेमहि । त्वमपि क्षेमे प्राप्तस्य रक्षणे उतापि च योगे अप्राप्तस्य प्रापणे वरं वरणीयं नोऽस्मदीयं धनं पाहि रक्ष । हे वास्तोष्पते यूयं त्वं नोऽस्मान् सर्वदा कल्याणैः पात पाहि ॥

इति पंचमस्य चतुर्थ एकविंशो वर्गः ॥

## 55.

(P. 86.) अमीवहेत्यष्टर्चं द्वाविंशं सूक्तम्। आद्या गायत्री पंचमाद्याश्चतस्रोऽनुष्टुभो द्वितीयाद्यास्तिस्र उपरिष्टाद्बृहत्यः। त्र्यष्टका चतुर्थद्वादशकी बृहतीति तल्लक्षणयोगात्। आद्या वास्तोष्पतिदेवताका शिष्टा ऐंद्र्यः। तथा चानुक्रांतम्। अमीवहाष्टौ वास्तोष्पत्याद्या गायत्री शेषास्त्र्युपरिष्टाद्बृहत्यादयोऽनुष्टुभः प्रस्वापिन्य उपनिषदिति। गतो विनियोगः। बृहद्देवतायां यदुक्तं तदिह लिख्यते।

वरुणस्य गृहान्रात्रौ वसिष्ठः स्वप्नमाचरन्।
प्रविवेशाथ तं तत्र श्वा नदन्नभ्यवर्तत॥
कंदंतं सारमेयं स धावंतं दष्टुमुद्यतं।
यदर्जुनेति च द्वाभ्यां सांतयित्वा ह्यसूषुपत्।
एवं प्रस्थापयामास जनमन्यं च वारुणम्॥

अत्र केचित्पुनरेवमाहुः।

आसां प्रस्वापिनित्वं तु कथासु परिकल्प्यते॥
वसिष्ठस्तृषितोऽन्नार्थी त्रिरात्रालब्धभोजनः।
चतुर्थरात्रौ चौर्यार्थं वारुणं गृहमेत्यनु॥
कोष्ठागारे प्रवेशाय पालकश्वाविशुप्नये।
यदर्जुनेति सप्तर्चं ददर्श च जजाप च॥

१. हे वास्तोष्पते गृहस्य पालक एतत्संज्ञक देव अमीवहा अमीवानां रोगाणां नाशकस्त्वं विश्वा विश्वानि बहूनि रूपाणि आविशन्। यद्यद्रूपं कामयते तत्तद्देवा विशंतीति यास्कः। नोऽस्माकं सखा मित्रभूतः सुशेवः सुष्ठु सुखकरः एधि भव॥

२. हे अर्जुन श्वेत हे सारमेय सरमा नाम देवशुनी तस्याः कुलोद्भव हे पिशंग केषु चिदंगेषु पिंगलवर्ण एवंभूत हे श्वनक त्वं दतो दंतान् यद्यदा यच्छसे विवृणोषि अस्मान्दष्टुमित्यर्थः। तदानीं वीव भ्राजंत ऋष्टयः यथा आयुधानि विशेषेण भासंते तथा उप अस्मत्समीपे बप्सतः भक्षयतस्तव दंताः स्रक्केषु स्रक्कासु भासंते। स्रक्काशब्द ओष्ठदेशविशेषवाचीत्यर्थः तथाभूतस्त्वमिदानीं सु सुष्ठु नि स्वप नितरां निद्रां कुरु॥

३. हे पुनःसर गतमेव देशं पुनः सरतीति पुनःसरः तादृग्भूत हे सारमेय त्वं स्तेनं प्रच्छन्नधनापहारी स्तेनः तं तस्करं प्रत्यक्षधनापहारी तस्करः तं वा राय गच्छ। इंद्रस्य स्तोतॄनस्मान् किं रायसि गच्छसि। अस्मान्दुच्छुनायसे। किं बाधसे नि षु स्वप अत्यंतं निद्रां कुरु॥

४. हे सारमेय त्वं सूकरस्य वराहस्य द्वितीयार्थे षष्ठी दर्दृहि विदारय। सूकरोऽपि तव दर्दर्तु विदारयतु। युवयोर्नित्यवैरित्वात्। अस्मान्मा दशेत्यर्थः। स्तोतॄनित्यर्धर्चः पूर्वस्यामृचि व्याख्यातः॥

५. हे सारमेय माता त्वदीया जननी सस्तु स्वपतु। पिता च सस्तु। श्वा सारमेयो भवान् सस्तु। विश्पतिर्जामाता यद्वा विशां जनानां पालको गृही सस्तु। सर्वे ज्ञातयो बंधवोऽपि ससंतु स्वपंतु। अभितः परितः स्थितः अयमपि सर्वो जनः सस्तु स्वपतु॥

६. यो जन आस्ते अस्मिन्प्रदेशे तिष्ठति यश्च चरति गच्छति यश्च जनः नोऽस्मान् पश्यति एवंभूतानां तेषां जनानां अक्षाणींद्रियाणि सं हन्मः संहनाम संहतिर्निमीलनं निमीलयामेत्यर्थः । इदं प्रत्यक्षेणोपलभ्यमानं हर्म्यं प्रासादादिस्थावरात्मकं वस्तुजातं यथा निश्चलं भवति तथा इमे सर्वे जना निश्चला भवंत्वित्यर्थः ॥

७. सहस्रशृंगः सहस्रकिरणः वृषभः कामानां वर्षिता यः समुद्रादंबुधेः सकाशादुदाचरत् उदागच्छति सहस्येन अभिभवित्रा तेन सूर्येण वयं स्तोतारः जनान् सर्वान् निष्वापयामसि नितरां स्वापयामः ॥

८. या यादृश्यः नारीर्नार्यः स्त्रियः प्रोष्ठेशयाः प्रांगणे शयानाः या वह्येशयाः वह्यं वाहनं तस्मिन् शयानाः यास्तल्पशीवरीः तल्पशयाः याः स्त्रियः पुण्यगंधाः मंगल्यगंधाः तास्तादृशीः सर्वाः स्त्रीः स्वापयामसि वयं निद्रां कारयामः ॥

इति पंचमस्य चतुर्थे द्वाविंशो वर्गः ॥

इति सप्तमे मंडले तृतीयोऽनुवाकः ॥

---

## 56.

(P. 87.) अथ चतुर्थेऽनुवाके पंचदश सूक्तानि । तत्र क ईं व्यक्ता इति पंचविंशत्यृचं प्रथमं सूक्तं वसिष्ठस्यार्षं मरुद्देवताकम् । आद्या एकादश द्विपदा विंशत्यक्षरा विराजः शिष्टाश्चतुर्दश त्रिष्टुभः । तथा चानुक्रांतम् । क ईं पंचाधिका मारुतं ह्याद्या एकादश द्विपदा इति । दशरात्रे चतुर्थेऽहन्याग्निमारुते शस्त्रे इदं मारुतनिविद्धानम् । सूत्र्यते हि । वैश्वानरस्य सुमतौ क ईं व्यक्ता नर इति ॥

१. व्यक्ताः कांतियुक्ताः नरो नेतारः सनीळाः समानौकसः रुद्रस्य महादेवस्य पुत्राः मर्याः मर्येभ्यो नृभ्यो हिताः अथा अपि च स्वश्वाः शोभनवाहाः ईं इमे एवंभूताः के भवंतीति रूपातिशयादृषिराश्चर्येणाह ॥

२. एषां मरुतां जनूंषि जन्मानि नकिर्हि वेद कश्चिदपि न खलु जानाति । ते तादृशाः मरुतः मिथः परस्परं जनित्रं रुद्रपृश्निभ्यां सकाशात्प्रादुर्भूतं स्वकीयं जन्म अंग विद्रे स्वयमेव विदंति ॥

३. मरुतः स्वपूभिः स्वकीयैः पवनैः संचरणैः स्वयमेव संचरंतः मिथः परस्परं अभि वपंत संगच्छंते । अपि च वातस्वनसः वायुवत्स्वनंतः शब्दायमानाः श्येनाः श्येङ् गताविति धातो रूपं गमनशीलाः । यद्वा श्येना इति लुप्तोपममेतत् श्येनाः पक्षिणः तद्वद्गच्छंतः अस्पृध्रन् परस्परं रूपसौंदर्यादिभिः स्पर्धंते ॥

४ धीरो धीमान् शास्त्रज्ञो जनः निण्या निण्यानि श्वेतवर्णानि एतानि मरुदात्मकानि भूतानि चिकेत जानीयात् । किंतु न सर्वे जना जानंतीत्यर्थः । मही महती पृश्निर्मरुतां जननी यत् यानि मरुदात्मकानि भूतानि ऊधः ऊधन्यंतरिक्षे स्वकीये जठरे वा जभार बभार एतानि चिकेतेति पूर्वेण संबंधः ॥

५. सा विट् सा प्रजा मरुतः परिचरति। सा प्रजा मरुद्भिः हेतुभिः सनात् चिरात्सहंती शत्रूनभिभवंती नृम्णं बलं पुष्यंती सुवीरा शोभनपुत्रयुक्तास्तु भवतु।

६. मरुतः यामं यातव्यं गंतव्यं प्रदेशं येष्ठाः यातृतमाः अतिशयेन गंतारः शुभा अलंकारेण शोभिष्ठाः अतिशयेन शोभायुक्ताः श्रिया कांत्या संमिश्लाः संगच्छमाना ओजोभिर्बलैः उग्रा उद्गूर्णाः एवंभूता भवंतीति शेषः॥

७. हे मरुतः वो युष्माकं ओजस्तेजः उग्रमुद्गूर्णं भवतु। शवांसि युष्मदीयानि बलानि स्थिरा स्थिराणि कैश्चिदनपहर्तव्यानि भवंतु। अधा अपि च मरुद्भिर्गणः मरुतां संघः तुविष्मान् वृद्धिमान्भवतु॥

८. हे मरुतः वो युष्माकं शुष्मो बलं शुभ्रः सर्वतः शोभमानम्। किंच वो मनांसि क्रुध्मी संग्रामेषु शत्रुहननार्थं क्रोधनशीलानि। धृष्णोर्धर्षणशीलस्य शर्धस्य बलवतो युष्मदीयस्य गणस्य धुनिः वृक्षादीनां कंपयिता वेगः मुनिरिव मननान्मुनिः स्तोता स यथा बहुविधं शब्दमुत्पादयति एवं बहुविधशब्दस्योत्पादक इत्यर्थः॥

(P. 88.) ११. स्वायुधासः स्वायुधाः शोभनास्त्राः इष्मिणो गंतारः सुनिष्काः शोभनालंकाराः उतापि च तन्वः स्वकीयानि शरीराणि शुंभमानाः स्वयमेव शोभयंतो मरुतः एवंभूता भवंतीत्यर्थः॥

१२. मारुते पशौ शुची वो हव्येति वपाया अनुवाक्या। सूत्रितं च। शुची वो हव्या मरुतः शुचीनां नू ष्टिरं मरुत इति॥

हे मरुतः शुचीनां शुद्धानां वो युष्माकं शुची शुचीनि हव्या हव्यानि हवींषि भवंतु। शुचिभ्यः प्रकाशमानेभ्यो युष्मभ्यं शुचिं शुद्धं अध्वरं यागं हिनोमि अहं प्रेरयामि। ऋतसाप ऋतमुदकं स्पृशंतो मरुतः ऋतेन सत्येनैव सत्यमायन् गच्छंति। कीदृशाः। शुचिजन्मानः शोभनजननाः शुचयो दीप्यमानाः पावकाः शोधकाः एवंभूता गच्छंतीत्यर्थः॥

१३. हे मरुतः अंसेषु युष्मदीयेषु स्कंधप्रदेशेषु खादयोऽलंकारविशेषाः आ मुक्ता भवंतीति शेषः। सुरुक्माः सुष्ठु रोचमानाः हाराः वो युष्मदीयं वक्षः उरःप्रदेशं उपशिश्रियाणाः आश्रिता भवंति। किंच हे मरुतः वृष्टिभिः वर्षैः सार्धं विद्युतो न तडितो यथा रुचानाः रोचमानाः तादृग्भूता यूयं आयुधैर्मेघताडनैः स्वधामुदकं अनुयच्छमानाः प्रयच्छंतो विचरथेति शेषः॥

१४. गृहमेधीये प्र बुध्न्या व इति प्रधानस्य याज्या। सूत्रितं च। प्र बुध्न्या व ईरते महांसीति पुष्टिमंतौ विराजौ संयाज्ये इति॥

हे मरुतः वो युष्मदीयानि बुध्न्या बुध्न्यान्यंतरिक्षे भवानि महांसि तेजांसि प्रेरते प्रकर्षेण गच्छंति। किंच हे प्रयज्यवः प्रकर्षेण यष्टव्या मरुतो यूयं नामानि पांसून्नमयंतीति नामान्युदकानि तिरध्वं वर्धयत। हे मरुतो यूयं सहस्रियं सहस्रसंख्याकं दम्यं दमे गृहे भवं गृहमेधीयं गृहमेधिगणेभ्यो युष्मभ्यं देयं एतमेतादृशं भागं जुषध्वं सेवध्वम्। एकं भागं सहस्रियमिति कथमाह। तथा च श्रूयते। यावदेका देवता कामयते यावदेका तावदाहुतिः प्रथते न हि तदस्ति यत्तावदेव स्याद्यावज्जुहोतीति॥

१५. वाजिनो हविर्लक्षणान्नवतः विप्रस्य मेधाविनो मम संबंधीनि हवीमन हवीमनि हविषा युक्ते स्तोत्रे क्रियमाणे सति हे मरुतो यूयं यदि यस्मात्कारणात् स्तुतस्य स्तुतं मदीयं स्तोत्रं इत्था इत्थमनेन प्रकारेण अर्धाथ अवगच्छथ तस्मात्कारणात् हे मरुतो यूयं सुवीर्यस्य शोभनपुत्रोपेतस्य रायः रायं धनं द्वितीयार्थे षष्ठी मक्षु शीघ्रं दात दत्त। अरावा अरातिः शत्रुभूत अन्यः जनः यं रायं नू चिदादभत् नैवाभिहन्यात् तद्धनमस्मभ्यं दत्तेति संबंधः ॥

इति पंचमस्य चतुर्थे चतुर्विंशो वर्गः ॥

(P. 89.) १६. मरुद्भ्यः क्रीळिभ्यः सप्तकपालमित्यस्या अत्यास इति याज्या। सूत्रितं च । अत्यासो न ये मरुतः स्वंचो जुष्टो दमूना इति ॥

अत्यासो न अत्याः सततगामिनोऽश्वा इव स्वंचः सुष्ठु गच्छंतो ये मरुतः यक्षदृशो न मर्याः यक्षस्योत्सवस्य द्रष्टारो मनुष्या इव शुभयंत शोभंते हर्म्येष्ठाः हर्म्ये स्थिताः शिशवो न कुमारा इव शुभ्राः शोभमाना वत्सासो न वत्सा इव प्रक्रीळिनः प्रकर्षेण क्रीडमानाः ते मरुतः पयोधाः पयस उदकस्य धारयितारो दातारो वा भवंति ॥

१७. मरुतः नोऽस्मभ्यं दशस्यंतः धनानि प्रयच्छंतः सुमेके सुरूपे रोदसी द्यावापृथिव्यौ वरिवस्यंतः स्वमहिम्ना पूरयंतः मृळंतु मृळयंतु अस्मान्सुखयुक्तान् कुर्वंतु । अपि च हे वसवो वासका मरुतः गोहा गवां भवस्थानानुदकानां भेदकः नृहा नृणां शत्रूणां हंता वो युष्मदीयं वधः आयुधं आरे अस्तु अस्मत्तो दूरं भवतु । यूयमपि सुम्नेभिः सुम्नैः सुखैः सह अस्मे अस्मासु नमध्वं स्वयमेवाभिमुखा भवत ॥

१८. मारुते पशौ आ वो होतेत्येषानुवाक्या । सूत्रितं च । आ वो होता जोहवीति सत्तः प्र चित्रमर्कं गृणते तुरायेति ॥

हे मरुतः सत्तः होतृषदने निषण्णोऽस्मदीयो होता सत्राचीं सर्वतो गमनशीलं रातिं मदीयं दानं गृणानः स्तुवन् वो युष्मान् आ जोहवीति भृशमाह्वयति । हे वृषणः कामानां वर्षितारो मरुतः यो होता इवतो गच्छतो व्यापारवतो यजमानस्य गोपा अस्ति युष्मदाह्वाननिमित्तेन रक्षको भवति स होता अद्वयावी मायारहितः सन् वो युष्मान् उक्थैः स्तोत्रैर्हवते स्तौति ॥

१९. इमे ईदृशो मरुतः तुरं कर्मसु क्षिप्रवंतं यजमानं रमयंति क्रीडयंति । इमे मरुतः सहः सहसा बलेन सहसो बलवतो जनान् आ नमंति । इमे मरुतः वनुष्यतः हिंसकात्पुरुषाच्छंसं शंसकं स्तोतारं नि पांति नितरां पालयंति । अररुषे हविरप्रयच्छते जनाय गुरु महत् द्वेषः अप्रियं दधति कुर्वंति ॥

२०. इमे मरुतः रध्रं चित् समृद्धमपि जनं जुनंति प्रेरयंति । भृमिं चित् भ्रमणशीलमपि दरिद्रं जुनंति प्रेरयंति । वसवो वासका देवाः युष्मान्यथा जुषंत कामयेरन् हे वृषणः कामानां वर्षितारस्ते यूयं तमांसि अप बाधध्वं नाशयत । अपि च अस्मे अस्मभ्यं विश्वं बहुलं तोकं पुत्रं तनयं पौत्रं च धत्त प्रयच्छत ॥

इति पंचमस्य चतुर्थे पंचविंशो वर्गः ॥

(P. 90.) २१. हे मरुतः वो युष्माकं दात्राद्दानात् मा निरराम वयं मा निर्गमाम। यूयमस्मान् परित्यज्यान्येभ्यो धनं मा दत्तेत्यर्थः। हे रथ्यो रथवंतो मरुतः विभागे युष्मदीयस्य धनस्य दाने पश्चान्मा दध्म दध्यतिर्गतिकर्मा वयं पश्चाद्भागिनो मा भूम। यूयं प्रथममस्मभ्यमेव दत्तेति यावत्। स्पार्हे स्पृहणीये वसव्ये धनसमूहे यूयं नोऽस्मान् आ भजतन भागिनः कुरुत। हे वृषणः वर्षितारो मरुतः वो युष्माकं सुजातं शोभनजनं यद्वसव्यमस्ति तस्मिन्भागिनः कुरुतेति संबंधः। ईमिति पूरणः॥

२२. यद्यदा शूरा विक्रांताः जनासो जनाः यह्वीषु महतीषु ओषधीषु विक्षु प्रजासु च जेतव्यासु मन्युभिः कोपैः अभिमानैर्वा संहनंत संगच्छंते अध तदानीं हे रुद्रियासो रुद्रपुत्रा हे मरुतः यूयं पृतनासु युद्धेषु अर्यः अरेः शत्रोः सकाशात् नोऽस्माकं त्रातारो भूत रक्षका भवत॥

२३. हे मरुतो यूयं भूरि भूरीणि बहूनि पित्र्याणि अस्मत्पितृसंबंधीनि धनदानादीनि कर्माणि चक्र कृतवंतो भवत। पुरा चित् पूर्वकालेऽपि वो युष्माकं उक्थानि प्रशस्यानि वा यानि कर्माणि शस्यंते प्रख्यायंते तानि चक्रेति संबंधः। उग्र ओजस्वी पृतनासु युद्धेषु मरुद्भिर्युष्माभिर्हेतुभिः साळ्हा शत्रूणामभिभविता भवति। मरुद्भिरित् मरुद्भिर्युष्माभिरेव हेतुभिः अर्वा स्तोत्रैः अभिगंता वाजमन्नं सनिता संभक्ता भवति। यद्वा अर्वा अश्वो वाजं युद्धं सनिता भवति॥

२४. हे मरुतः अस्मे अस्माकं वीरः पुत्रः शुष्मी अस्तु बलवान्भवतु। असुरः प्रज्ञावान् यो जनानां शत्रूणां विधर्ता विधारकः येन पुत्रेण वयं सुक्षितये सुष्ठु निवासाय अपः आप्नुवतः शत्रून् तरेम हिंसेम स पुत्रो बलवानस्त्विति पूर्वेणान्वयः। अध अपि च वो युष्मदीया वयं स्वमोकः आत्मीयं स्थानं अभि स्याम आतिष्ठेम॥

२५. पूर्वं व्याख्यातेयम्। अक्षरार्थस्तु। इंद्रादयो देवाः अस्मदीयं स्तोत्रं सेवंताम्। मरुतामुपस्थाने वर्तमाना वयं सुखे स्याम। हे मरुतो यूयं सर्वदास्मान् अविनाशैः पालयत॥

इति पंचमस्य चतुर्थे षड्विंशो वर्गः॥

---

## 57.

(P. 91.) मध्वो व इति सप्तर्चं द्वितीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं मरुद्देवताकम्। मध्वः सप्तेत्यनुक्रांतम्। दशरात्रे षष्ठेऽहनि आग्निमारुत इदं मारुतनिविद्धानम्। सूत्रितं च। मध्वो वा नाम स प्रत्नथेत्याग्निमारुतमिति॥

१. हे यजत्रा यजनीया मरुतः वो युष्मदीयं मारुतं मरुत्संबंधि नाम नामधेयं मध्वो मधवो मादयितारः स्तोतारः यज्ञेषु यागेषु शवसा बलेन प्र मदंति प्रकर्षेण स्तुवंति उच्चैः स्तुवंतीत्यर्थः। ये मरुतः उर्वी विस्तीर्णे रोदसी चित् द्यावापृथिव्यावपि रेजयंति कंपयंति। किंच उत्सं मेघं पिन्वंति वर्षयंति उग्रा उद्गूर्णा यत् ये मरुतः अयासुः यांति सर्वत्र गच्छंति तेषां मरुतां युष्माकं नाम प्रमदंतीति पूर्वेणान्वयः॥

२. ये मरुतः गृणंतं स्तुवंतं जनं निचेतारो हि मृगयमाणा भवंति खलु। अपि च यजमानस्य मन्म अभिमतं कामं प्रणेतारश्च भवंति। अपरोऽर्धर्चः प्रत्यक्षकृतः। हे मरुतो यूयं पिप्रियाणाः प्रीयमाणाः संतः अद्यास्मिन्दिवसे अस्माकं विदथेषु यज्ञेषु वीतये सोमस्य भक्षणाय बर्हिर्बर्हिषि कुशमये आ सदन आसीदत उपविशत ॥

३. इमे ईदृशा मरुतो यथा यत्परिमाणं धनादिकं ददति अन्ये मरुद्व्यतिरिक्ता देवाः एतावद्धनादिकं न दद्युरित्यर्थः। ते च रुक्मैः रोचमानैरायुधैराभरणैः स्वकीयास्तैः तनूभिरात्मीयैः केवलैरंगैश्च भ्राजंते सर्वदा भासंते। कश्चिदेकवाक्यतामाह। यथेमे मरुतो रुक्मादिभिर्भ्राजंते नैतावद्देवतद्व्यतिरिक्ता भ्राजंत इति। अपि च रोदसी द्यावापृथिव्यौ पिशानाः प्रकाशयंतः विश्वपिशः व्याप्तदीप्तयः एवंभूता मरुतः शुभे शोभायै समानं सदृशरूपं अंजि आभरणं आ अंजते स्वकीयावयवेषु अभिव्यक्तीकुर्वंति। कमिति पूरणः ॥

४. हे मरुतः वो युष्मदीया सा प्रसिद्धा दिद्युत् हेतिः ऋधक् अस्तु अस्मत्तः पृथग्भवतु। यत् यद्यपि वयं वो युष्माकं आगः अपराधं पुरुषता पुरुषतया मनुष्यत्वेन कराम करवाम मनुष्याणां क्षिप्रमाग इत्यर्थः हे यजत्राः यजनीया मरुतः वो युष्मदीयायां तस्यां दिद्युति अपि ईषदपि मा भूम। चनिष्ठा अन्नवत्तमा अतिशयेनान्नप्रदेत्यर्थः वो युष्मदीया सुमतिरनुग्रहबुद्धिः अस्मे अस्मास्वस्तु ॥

५. अत्रास्मिन् कृते चित् अस्मदीये यज्ञकर्मण्येव मरुतो रणंत रमंताम्। कीदृशा मरुतः। अनवद्यासः अनिंदिताः शुचयो दीप्तियुक्ताः पावकाः शोधकाः एवंभूता इति। किंच हे मरुतः यजत्रा यजनीया यूयं नोऽस्मान् सुमतिभिरनुग्रहबुद्धिभिः सुष्टुतिभिर्हेतुभिर्वा प्रावत प्रकर्षेण पालयत। तथा नोऽस्मान् वाजेभिर्वाजैरन्नैः पुष्यसे पोषार्थं प्र तिरत प्रवर्धयत ॥

(P. 92.) ६. उतापि च स्तुतासः एवमस्माभिः स्तुताः मरुतः हवींषि व्यंतु भक्षयंतु। कीदृशाः। विश्वेभिर्विश्वैः नामभिरुदकैः सहिता नरो नेतारः। शेषः प्रत्यक्षकृतः। हे मरुतः नोऽस्मदीयायै प्रजायै संततये अमृतस्य अमृतमुदकं ददात दत्त। तथा हविषो दातुर्यजमानस्य सूनृता सूनृतानि सुष्ठु नृत्यंति शोभनयोग्यानि मघानि धनानि जिगृत उद्गिरत प्रयच्छतेत्यर्थः ॥

७. हे मरुतः स्तुतासः एवमस्माभिः स्तुताः विश्वे सर्वे यूयं ऊती ऊत्या रक्षया सहिताः सूरीन् स्तोतॄन् अच्छाभिलक्ष्य सर्वताता सर्वतातौ यज्ञे आ जिगात आगच्छत। ये मरुतः त्मना आत्मनैव नोऽस्मान् शतिनः शतसंख्याकान् वर्धयंति। यथा वयं पुत्रपौत्रादिभिः शतिनो भवेम तथा वर्धयंतीत्यर्थः। ते यूयमाजिगातेति पूर्वेण संबंधः। एवंभूता मरुतो यूयं सर्वदास्मान्पालयत ॥

इति पंचमस्य चतुर्थे सप्तविंशो वर्गः ॥

---

## 58.

प्र साकमुक्ष इति षडृचं तृतीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं मरुद्देवताकम्। अनुक्रांतं च। प्र साकमुक्षे षडिति। गतो विनियोगः॥

१. हे स्तोतारो यूयं साकमुक्षे संततं वर्षित्रे गणाय मरुत्समूहाय प्रार्चत स्तोत्रं प्रोच्चारयत। यो मरुद्गणो दैव्यस्य देवसंबंधिनः धाम्नः स्वर्गाख्यस्य स्थानस्य तुविष्मान् वृद्धिमान्भवति सर्वेभ्यो देवेभ्यः प्रवृद्ध इत्यर्थः। तस्मै गणायेति पूर्वेण संबंधः। उतापि च मरुतः महित्वा स्वकीयेन महत्त्वेन सहिताः रोदसी द्यावापृथिव्यौ क्षोदंति भंजंति। तथा निर्ऋतेर्भूमेः अवंशादंतरिक्षाच्च नाकं स्वर्गं नक्षंते व्याप्नुवंति॥

२. हे भीमासो भीमाः विमन्यवः प्रवृद्धमतयः अयासो गंतारः इति त्रीणि संबोधनानि। एवंभूता हे मरुतो वो युष्माकं जनुर्जन्म त्वेष्येण दीप्तेन रुद्रेण बभूवेति शेषः। उतापि च ये मरुतः महोभिस्तेजोभिः ओजसा बलेन च प्रसंति प्रभवंति तेषां वो युष्माकं यामन् यामनि गमने विश्वः स्वर्दृक् सूर्यस्य द्रष्टा सर्वो जीवसमूहः। यद्वा स्वरंतरिक्षं तत्पश्यतीति वृक्षः स्वर्दृक् सर्वदा उत्तिष्ठन्नित्यर्थः। भयते बिभेति॥

३. हे मरुतो यूयं मघवद्भ्यो हविर्लक्षणान्नवद्भ्योऽस्मभ्यं बृहन्महत् वयोऽन्नं दधात प्रयच्छत। नोऽस्मदीयां सुष्टुतिं शोभनं स्तोत्रं जुजोषन्नित् सेवंतामेव। गतो मरुद्भिः प्राप्तः अध्वा मार्गः जंतुं प्राणिनं न वि तिराति नाहंति। उदकेनाप्याययत्येव। यद्वा वितिरातिर्वर्धनार्थः। नेति चार्थे। मरुद्भिर्गतो मार्गश्च जंतुं वर्धयति। तथा नोऽस्मान् स्पार्हाभिः स्पृहणीयाभिरूतिभी रक्षाभिः प्र तिरेत प्रवर्धयते॥

(P. 93.) ४. हे मरुतः युष्मोतः युष्माभी रक्षितः विप्रः स्तोता शतस्वी शतसंख्योपेतधनवान् भवति। युष्मोतः युष्माभी रक्षितः अर्वा अभिगंता सहुरिः शत्रूणामभिभविता स्तोता सहस्री सहस्रधनवान्भवति। युष्मोतः युष्माभी रक्षितः सम्राट् साम्राज्ययुक्तो भवति। उतापि च वृत्रं शत्रुं हंति युष्मद्रक्षको हिनस्ति। हे धूतयः कंपयितारो मरुतः वो युष्माभिर्दत्तं तत्प्रसिद्धं देष्णं धनं प्रास्तु प्रभूतं भवतु॥

५. मीळ्हुषः कामानां वर्षितुः रुद्रस्येश्वरस्य पुत्रान् तान्मरुतः आ विवासे अहं होता परिचरामि। ते मरुतः नोऽस्मभ्यं कुवित् बहुकृत्वः पुनः भूयः नंसंते नवंतां अभिमुखा भवंतु। कुविच्छब्देनैव पुनःशब्दार्थस्य लब्धत्वात्पुनःशब्दग्रहणं किमर्थं आदरार्थम्। सस्वर्ता अंतर्हितेन अप्रकाशेन यत् येन एनसा जिहीळिरे मरुतः क्रुध्येयुः आविः प्रकाशेन यत् येन एनसा च जिहीळिरे तुराणाम् क्षिप्राणां मरुतां संबंधि तदुभयमेनोऽपराधं अव ईमहे स्तोत्रेण वयमपनयामः॥

६. मघोनां धनवतां मरुतां संबंधिनी सुष्टुतिः या शोभना स्तुतिः अस्मिन्सूक्ते कृता सा स्तुतिरस्माभिः प्र वाचि प्रोक्तासीत्। मरुतः इदमीदृग्भूतं सूक्तं जुषंत सेवंताम्। हे वृषणः कामानां वर्षितारो यूयं द्वेषो द्वेषांसि शत्रून् आराच्चित् दूरादेव युयोत अस्मत्तः पृथक्कुरुत। यूयं नोऽस्मान् स्वस्तिभिः सर्वदा रक्षत॥

इति पंचमस्य चतुर्थेऽष्टाविंशो वर्गः॥

## 59.

यं त्रायध्व इति द्वादशर्चं चतुर्थं सूक्तम् । अत्रेयमनुक्रमणिका । यं त्रायध्वे द्वादश त्रिप्रगाथादि नवम्याद्यास्तिस्रो गायत्र्यो ऽन्त्यानुष्टुब्रौद्री मृत्युविमोचिनीति । आद्यातृतीयापंचम्यो बृहत्यः द्वितीयाचतुर्थीषष्ठ्यः सतोबृहत्यः सप्तम्यष्टम्यावनुक्तत्वात्त्रिष्टुभौ नवमीदशम्येकादश्यो गायत्र्यः द्वादश्यनुष्टुप् । सा च रुद्रदेवताका । शिष्टा मारुत्यः । सूक्तविनियोगो लैंगिकः ॥

१. हे देवासो देवाः इदमिदमितो भयहेतोः यं स्तोतारं त्रायध्वे पालयध्वे । यं च स्तोतारं नयथ सन्मार्गं प्रापयथ हे अग्ने वरुण मित्र अर्यमन् हे मरुतः एवंभूता हे देवाः तस्मै स्तोत्रे शर्म सुखं यच्छत दत्त ॥

२. हे देवाः युष्माकं युष्मदीयेन अवसा रक्षणेन प्रिये अहनि सर्वेषां देवानां प्रियभूते सुत्याभिधाने दिवसे ईजानः इष्टवान् जनः द्विषः शत्रून् तरति आक्रामति । स यजमानः क्षयं स्वकीयं निवासं प्र तिरते प्रवर्धयति । यो यजमानः वो युष्मभ्यं महीः महांति इषः हविर्लक्षणान्यन्नानि वराय निवारणाय यूयं नान्यत्र गच्छत अस्मदीयान्येव हवींषि स्वीकुरुतेति निरोधनं कर्तुं वि दाशति विशेषेण ददाति । अत एव स स्वकीयं निवासं वर्धयतीत्यर्थः ॥

(P. 94.) ३. वसिष्ठ ऋषिः वो युष्माकं मध्ये चरमं चन अवरमपि नहि परिमंसते वर्जयित्वा न स्तौति । किंतु सर्वानेव युष्मान् स्तौतीत्यर्थः । अद्यास्मिन्दिने अस्माकमस्मदीये सुते सोमे अभिषुते सति हे मरुतः कामिनः सोमं कामयमानाः विश्वे यूयं सचा संगत्य पिबत पानं कुरुत ॥

४. हे मरुतः वो युष्मदीया ऊती रक्षा पृतनासु युद्धेषु नहि मर्धति न खलु हिनस्ति । शत्रुभिः कृतां हिंसां न सहत इत्यर्थः । हे नरो नेतारो यूयं यस्मै जनाय अराध्वं कामानदध्वं तं जनं न हिनस्तीति संबंधः । नवीयसी नवतरा वो युष्मदीया सुमतिरनुग्रहबुद्धिः अभ्यावर्त् अस्मानभ्यावर्तताम् । तथा हे पिपीषवः सोमपानकामा यूयमपि तूयं क्षिप्रं यात आगच्छत ॥

५. हे युष्विराधसः परस्परयुष्टानि सुसंहतानि राधांसि येषां ते हे मरुतो यूयं अंधांसि सोमलक्षणानि हवींषि पीतये भक्षणार्थं सु सुष्ठु आ यातन आयात । हि यस्मात्कारणात् हे मरुतो वो युष्मभ्यं इमा इमानि हव्या हव्यानि हवींषि ररे अहं ददामि अतः कारणाद्यूयं अन्यत्र मो षु गंतन मा गच्छत ॥

६. हे मरुतो यूयं नोऽस्मदीये बर्हिः कुशमये बर्हिषि आ सदत च उपविशत । स्पार्हाणि स्पृहणीयानि वसु वसूनि धनानि दातवे अस्मभ्यं दातुं नोऽस्मानवित च आगच्छत च । हे मरुतः अस्रेधंतः अहिंसंतो यूयं इहास्मिन्यज्ञे मधौ मदकरे सोम्ये सोमात्मके हविषि स्वाहा स्वाहाकारेण मादयाध्वै मादयध्वं माद्यत ॥

इति पंचमस्य चतुर्थे एकोनत्रिंशो वर्गः ॥

७. सस्वः अंतर्हिता मरुतः तन्वः स्वकीयान्यंगानि शुंभमानाः अलंकरणैः शोभयंतो मरुतः नीलपृष्ठाः असितवर्णाः हंसासो हंसा इव आपप्तन् आपतंतु आगच्छंतु । विश्वं शर्धः व्यासो मरुद्गणः मा मां अभितः समंतात् नि षेद निषेदतु निषीदतु । तत्र दृष्टांतः । सवनेऽस्मदीये यज्ञे मदंतो हृष्यंतः रण्वाः रमणीयाः नरो न मनुष्याः इव तद्वत् ॥

( P. 95. ) ८. साकमेधेषु मरुद्भ्यः सांतपनेभ्य इत्यस्य यो नो मरुत इति पूर्वानुवाक्या सांतपना इदमिति याज्या । तथा च सूत्रितम् । सांतपना इदं हविर्यो नो मरुतो अभि दुर्हणायुरिति ॥

हे वसवः प्रशस्या हे मरुतः नोऽस्मदीयानि चित्तानि दुर्हणायुः अशोभनं क्रुध्यन् तिरः सर्वैस्तिरस्कृतो यो जनः अभि जिघांसति आभिमुख्येन हंतुमिच्छति । स जनः द्रुहः पापानां द्रोग्धुर्वरुणस्य पाशान् अस्मासु प्रति स मुचीष्ट बध्नीयात् । यूयं तं जनं तपिष्ठेन तप्ततमेन हन्मना हननसाधनेनायुधेन हंतन हत हिंस्त ॥

९. सांतपनाः शत्रूणां संतापकाः हे मरुतः इदं प्रत्यक्षेणोपलभ्यमानं हविः युष्मभ्यं कल्पितमिति शेषः । हे रिशादसः रिशतां हिंसतां असितारः रिशानामत्तारो वा यूयं युष्माक युष्माकं ऊती ऊत्या रक्षया तत्तादृशं हविर्जुजुष्टन सेवध्वम् ॥

१०. गृहमेधास इति गृहमेधीयस्य हविषोऽनुवाक्या । सूत्रितं च । गृहमेधास आ गत प्र बुध्न्या व ईरते महांसीति ॥

गृहमेधासः गृहे क्रियमाणो यज्ञो येषां ते सुदानवः शोभनदाना हे मरुतो यूयं युष्माक युष्माकं ऊती ऊत्या रक्षया युक्ताः आ गत अस्मदीयं यज्ञं प्रत्यागच्छत । हे मरुतः मापभूतन अपगता मा भवत भू प्राप्ताविति धातुः ॥

११. वैश्वदेवे पर्वणि मारुतस्यानुवाक्येहेह व इत्येषा । सूत्रितं च । इहेह वः स्वतवसः प्र चित्रमर्कं गृणते तुरायेति ॥

हे स्वतवसः स्वायत्तबलाः स्वयं प्रवृद्धा वा हे कवयः क्रांतदर्शिनः सूर्यत्वचः सूर्यवर्णा एवंभूता हे मरुतो यूयं इहेह इहैव वः युष्मदीयं यज्ञं आ वृणे आभजामि कल्पयामि ॥

१२. अत्र शौनकः ।

त्रिरात्रं नियतोऽपोष्य श्रपयेत्पायसं चरुम् ।
तेनाहुतिशतं पूर्णं जुहुयाच्छंसितव्रतः ॥
समुद्दिश्य महादेवं त्र्यंबकं त्र्यंबकेत्यृचा ।
एतत्पर्वशतं कृत्वा जीवेद्वर्षशतं सुखी ।

इति पंचमस्य चतुर्थे त्रिंशो वर्गः ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये पंचमाष्टके चतुर्थोऽध्यायः समाप्तः ॥

60.

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरम् ॥
व्याख्याय निगमाभिज्ञः पंचमस्य चतुर्थकम् ।
अध्यायं सायणाचार्यः पंचमं व्याकरोत्यथ ॥

तत्र यदद्य सूर्येति द्वादशर्चं पंचमं सूक्तम् । अत्रानुक्रमणिका । यदद्य मैत्रावरुणं तु वै सौर्याद्येति । मंडलद्रष्टा वसिष्ठ ऋषिः । अनुक्तत्वात्त्रिष्टुप् छंदः । तु वा इत्युक्तत्वादितद्वादीनि सप्त सूक्तानि मित्रावरुणदेवत्यानि । आद्या सूर्यदेवत्या । विनियोगो लैंगिकः ॥

१. हे सूर्य सर्वस्य प्रेरक एतन्नामक देव उद्यन् उदयंस्त्वं यद्यदि अद्यास्मिन्ननुष्ठानकाले ऽस्मान्नवः ब्रूयाः किमिति अनागाः अनागस इति एते अपापा इति यदि देवेषु मध्ये ब्रूयाः तर्हि वयम् । हे अदिते अदीनदेव वयं देवत्रा देवेषु देवानां मध्ये मित्राय वरुणाय च सत्यं अवितथं स्याम अनागसो भवेम । किंच हे अर्यमन् दातः त्वां गृणंतः स्तुवंतः तव प्रियासः प्रियाः स्याम त्वत्प्रेमविषया भवेम । यद्वोत्तरार्धं एकं वाक्यम् । हे अदिते हे अर्यमन् उक्तलक्षण देव वयं देवेषु मध्ये त्वां गृणंतः तवैव प्रियाः स्याम । यदि मां देवेष्वपापं ब्रूयास्तर्हि तैरयमनपराधीत्यनुगृहीतस्त्वां स्तुत्वा तव प्रियो भवेयमित्यर्थः ॥

२. हे मित्रावरुणा एषः पुरतो दृश्यमानः स्यः सः सर्वैः स्तुत्यत्वेन प्रसिद्धः सूर्यः उभे द्यावापृथिव्यावभि अभिलक्ष्य उदेति उमन् अंतरिक्षे गच्छन् । स विशेष्यते । विश्वस्य सर्वस्य स्थातुः स्थावरस्य जगतो जंगमस्य च गोपाः गोपायिता । किं कुर्वन् । मर्तेषु मनुष्येषु स्थितानि ऋजु ऋजूनि सुकृतानि वृजिनानि पापानि च पश्यन् ॥

( P. 96. ) ३. हे मित्रावरुणा मित्रावरुणौ युवयोरागमनाय सधस्थात् सहस्थानादंतरिक्षादंतरिक्षे सप्त सर्पणस्वभावान् तत्संख्याकान्वा हरितो हरिद्वर्णानश्वानयुक्त युक्तवानयं । हरित आदित्यस्येति हि निरुक्तम् । या हरित ईमेनं सूर्यं देवं घृताचीर्घृतांचना उदकवत्यः उदकप्रदा इत्यर्थः तादृश्यः सत्यो वहंति ता अयुक्त । अथोदितः सन् धामानि स्थानानि लोकान् जनिमानि जन्मानि जन्मभाजः प्राणिन इत्यर्थः तांश्च युवाकुः युवां कामयमानो यो देवः सं चष्टे सम्यक् पश्यति यूथेव गोयूथानीव यूथपाः स यथा सर्वयूथं तदवांतरगोव्यक्तिं च सम्यक् पश्यति तद्वत् लोकान्प्राणिनश्च पश्यति ॥

४. हे मित्रावरुणौ वां युवयोरर्थाय पृक्षासोऽन्नानि चरुपुरोडाशादीनि मधुमंतो माधुर्योपेतानि तत्साधनान्योषध्यादीनि वा उदस्थुः संपादितान्यासन् । सूर्यश्च शुक्रं दीप्तं अर्णः अर्णवमंतरिक्षं आरुहत् आरोहति । यस्मै सूर्याय तद्गमनार्थमादित्या अदितेः पुत्रा देवा अध्वनो मार्गान् रदंति विलिखंति साधयंति के ते मित्रोऽर्यमा वरुणश्चेते त्रयोऽपि देवाः सजोषसः समानप्रीतयः संतः स देव आरुहदिति ॥

५. इमे मित्रोऽर्यमा वरुणश्च त्रयोऽपि अनृतस्य पापस्य भूरेः प्रभूतस्य चेतारो हंतारः संति भवंति हि इमे मित्रादय ऋतस्य यज्ञस्य दुरोणे गृहे ववृधुः वर्धंते हविषा स्तुत्या च । कीदृशास्ते । शग्मासः सुखकरा अदितेः पुत्राः अदब्धा अहिंसिताः ॥

६. इमे आदित्या मित्रो वरुणश्च एतद्द्वयमर्यम्णोऽप्युपलक्षणं एते दूळभासः दुर्दभाः अनभिभाव्या अचेतसं चित् अप्रज्ञानं अनुष्ठानविषयज्ञानरहितमपि दक्षैः। अपि क्रतुं सुचेतसं प्रकृष्टज्ञानवंतं पुरुषं कर्तारं कर्मानुष्ठानवंतं वतंतो गच्छंतोऽंहो दुष्कृतं तिरश्चित् तिरो नयंतोऽस्मान् सुपथा शोभनेन मार्गेण नयंति प्रापयंत्यभिमतं यज्ञं स्वर्गादिकं वा ॥

इति पंचमस्य पंचमे प्रथमो वर्गः ॥

७. इमे मित्रादयो दिवो द्युलोकस्य पृथिव्याश्च संबंधिनः अनिमिषा अनिमेषेण सर्वदा चिकित्वांसो जानंतः कं अचेतसं अज्ञानं नयंति प्रापयंति कर्माणि। प्रव्राजे चित् प्रवणेऽपि अत्यंतनिम्नेऽपि देशे नद्यो नद्याः गाधमस्ति भवति युष्मत्सामर्थ्यात् । ते महांतो नोऽस्माकं अस्य विष्पितस्य व्याप्तितस्य कर्मणः पारं पर्षन् पारयंतु नयंतु ॥

(P. 97.) ८. यच्छर्म सुखं गृहं वा गोपावत् रक्षणोपेतं भद्रं स्तुत्यं आदितिरदीनोऽर्यमा अदितिर्वा मित्रो वरुणश्चैते त्रयो देवाः सुदासे सुदानाय मह्यं यच्छंति प्रयच्छंति तस्मिन् शर्मणि तोकं पुत्रं तनयं तत्पुत्रादिकं अथवा तनयशब्दोऽपत्यसामान्यवचनः तोकं बलवंतं पुत्रं आ सर्वतो दधाना धारयंतो वयं हे तुरासः गमनाय त्वरमाणाः देवहेळनं देवानां मित्रादीनां कोपनं मा कर्म मा कार्ष्म ॥

९. हे मित्रादयः सोऽस्मद्द्वेषी वेदिं यागसाधनं होत्राभिः वाङ्नामैतत् वाग्रूपाभिः स्तुतिभिः सार्धं अव यजेत वेद्यां कर्माणि कुर्वन् देवान् न स्तुयादित्यर्थः । अवपूर्वो यजतिस्त्यागार्थः । स किं प्राप्नुयादिति तत्राह । वरुणश्रुतः वरुणेन त्वया हिंसितः स काश्चिद्रिपो हिंसाः प्राप्नुयादिति शेषः । अस्मांस्त्वर्यमा देवो द्वेषोभिः द्वेष्टृभी रक्षःप्रभृतिभिः परि वृणक्तु वर्जयतु । उरुं विस्तीर्णं लोकं स्थानं सुदासे शोभनदानाय मह्यं प्रयच्छतं हे वृषणा वर्षकौ कामानां मित्रावरुणौ ॥

१०. एषां मित्रादीनां समृतिः संगतिः संहतिर्वा सस्वः अंतर्हिता निगूढा त्वेषी दीप्ता च भवति । तादृशा एते अपीच्येन एतदप्यंतर्हितनाम निगूढेन सहसा बलेन सहंते अभिभवंत्यस्मद्द्वेष्टॄन् । किंच हे वृषणोऽभिमतवर्षका मित्रादयो युष्मद्युष्मत्तो भिया भीत्या रेजमानाः कंपमाना भवंति विरोधिनः यस्मादेवं तस्माद्दक्षस्य युष्माकं बलस्य महिना महिम्ना महत्त्वेन नोऽस्मभ्यं मृळत उपदयां कुरुत ॥

११. यो यजमानो ब्रह्मणे परिवृढस्वकर्मणे युष्मत्स्तोत्ररूपाय सुमतिं शोभनां बुद्धिं आ यजाते आयजते यजतिरत्र दाने ददाति करोति । किमर्थम् । वाजस्य अन्नस्य सातौ दाने निमित्ते परमस्योत्कृष्टस्य रायो धनस्य च सातौ तस्य अर्यः ईरयति स्तुतीः प्रेरयतीत्यरिः स्तोता तस्य मन्युं स्तोत्रं मघवानो दानवंतोऽर्यमादयः सीक्षंत सचंते । सेवित्वा च तस्य उरु क्षयाय विस्तीर्णनिवासाय सुधातु सुधाम शोभनस्थानं चक्रिरे कुर्वते ॥

१२. अनया स्तुतिमुपसंहरति। हे देवा देवौ मित्रावरुणौ युवभ्यां युवाभ्यां यजत्रा इयं पुरोहितिः पुरस्क्रिया पूजा स्तुतिलक्षणा अकारि कृताभूत। तां सेवित्वा विश्वानि सर्वाणि दुर्गा दुस्त्यानि गंतव्यानि आपदः तिरः तिरस्कुरुतम। तथा कृत्वा नोऽस्मान्पिपृतं पारयतम्। शिष्टो गतः॥

इति पंचमस्य पंचमे द्वितीयो वर्गः॥

---

61.

( P. 98. ) उद्वां चक्षुरिति सप्तर्चं षष्ठं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं मैत्रावरुणम्। उद्वां सप्तेत्यनुक्रमणिका। विनियोगो लैंगिकः॥

१. हे मित्रावरुणा मित्रावरुणौ देवयोर्द्योतमानयोर्वां युवयोश्चक्षुः प्रकाशकं तेजः सुप्रतीकं शोभनरूपं एवंरूपः सूर्यः ततन्वान् तेजो विस्तारयन् उदेति उद्गच्छति। अथोदितो यो देवो विश्वा सर्वाणि भुवनानि भूतजातानि अभि चष्टे अभिपश्यति स देवो मर्त्येषु प्रवृत्तं मन्युं स्तोत्रं कर्म वा आ चिकेत आजानाति॥

२. हे मित्रावरुणौ वां युवयोर्मन्मानि मननीयानि स्तोत्राणि स प्रसिद्धो विप्रो मेधावी ऋतावा यज्ञवान् दीर्घश्रुत चिरकालं श्रोता एवमुक्तलक्षणो वसिष्ठ इयर्ति प्रेरयति। यस्य ऋषेर्ब्रह्माणि परिवृढानि स्तोत्राणि हे सुक्रतू शोभनकर्माणौ अवाथो रक्षथ। यत्कर्न शरदो बहून् संवत्सरान् आ पृणेथे आपूरयेथे स उदियर्ति॥

३. हे मित्रावरुणा मित्रावरुणौ युवां उरोर्विस्तीर्णायाः पृथिव्या अधि प्र परिरिचाथे। अस्येदेव प्ररिरिचे इत्यादिषु प्रशब्दस्य रिरिच इत्यनेन सह संबंधदर्शनाद त्राप्युचितक्रियाध्याहारेण रिरिच इति योज्यम। तथा ऋष्वाद्बृहतो महतो बृहतः स्वरूपतोऽतिमहतो दिवो द्युलोकादपि प्ररिरिचाथे हे सुदानू शोभनदानौ। किंच ओषधीषु विक्षु प्रजासु निमित्तभूतासु प्रजासु चेति वा स्पशो रूपं दधाथे धारयेथे। किं कुर्वंतौ। ऋधक सत्यान यतो विवेकात्सत्येन गच्छतो जनान् अनिमिषमप्रमत्तावधानेन सर्वदा रक्षमाणा पालयंतौ॥

४. हे ऋषे मित्रस्य वरुणस्य च धाम तेजःस्थानं शंस स्तुहि। ययोर्देवयोः शुष्मो बलं रोदसी द्यावापृथिव्यौ सह वर्तमाने महित्वा स्वमहत्त्वेन बद्धे बध्नाति पृथक्स्थापयति इयं पृथिवीयं द्यौरिति पृथक्करोति। द्यावापृथिवी सहास्तामिति श्रुतेः। अयज्वनां अननुष्ठातॄणां मासाः कालावयवा अवीरा अपुत्रा एवायन यंतु गच्छंतु। तांद्वप्रगीतो यज्ञमन्मा यज्ञार्थं मतिमान् यक्षा वृजनं बलं प्र तिराते प्रवर्धयतु प्रपूर्वस्तिरतिर्वर्धनार्थः॥

५. हे अमूरा अमूढौ हे विश्वा व्याप्तौ हे वृषणौ वर्षितारौ युवां इमा इमानि स्तुतिवचांसि क्रियंते यासु स्तुतिषु चित्रं आश्चर्यं न ददृशे न दृश्यते न यक्षं न पूजा दृश्यते युवाभ्यां मादृशोऽपि महत्त्वात प्रयत्नेन क्रियमाणमपि स्तोत्रं न चमत्कारो-

तीत्यर्थः। जनानां अनृता अस्तुत्यविषयाणि स्तोत्राणि द्रुहो द्रोग्धारः सचंते सेवंते न महांतः। वां युवाभ्यां क्रियमाणानि निण्यानि अंतर्हितानि रहस्यान्यपि स्तोत्राणि अचित्ते अज्ञानाय अभूवन् भवंति॥

( P. 99. ) ६. हे मित्रावरुणौ वां युवयोर्यज्ञं नमोभिर्नमस्कारैः स्तुतिभिः समु महयं संपूजयाम्यहम्। तदर्थं हे मित्रावरुणा मित्रावरुणौ वां सबाधो बाधायुक्तोऽहं हुवे आह्वयामि बाधापरिहाराय। वां युवां ऋचसे सेवितुं नवानि नूतनानि स्तुत्यानि वा मन्मानि स्तोत्राणि प्र भवंत्वित्यध्याहारः। कृतानि मया समूहीकृतानि इमानीदानीं क्रियमाणानि ब्रह्म परिवृढानि स्तोत्राणि युवां जुजुषन् प्रीणयंतु॥

७. इयं देवेति सप्तमी गता ( ६०. १२. )॥

इति पंचमस्य पंचमे तृतीयो वर्गः॥

---

## 62.

उत्सूर्य इति षडृचं सप्तमं सूक्तम्। अत्रानुक्रमणिका। उत्सूर्यः षळाद्यास्तिस्रः सौर्य इति। वसिष्ठ ऋषिः त्रिष्टुप् छंदः। आद्यास्तिस्रः सूर्यदेवत्याः शिष्टा मित्रावरुणदेवत्याः। सूक्तविनियोगो लैंगिकः॥

१. सूर्यः सर्वस्य प्रेरको देवः बृहत् अत्यधिकं पुरु पुरूणि बहूनि अर्चींषि तेजांसि उदश्रेत् ऊर्ध्वं श्रयति। किं प्रति। मानुषाणां मनुष्याणां विश्वा सर्वाणि जनिम जनिमानि जनान्। जनशब्दः संघवचनः तान्प्रत्युदश्रेत्। स देवो दिवा अहनि रोचमानः सन् समो ददृशे एकरूपः प्रतिनियतः सन् दृश्यते। तस्मात्पुरुषं पुरुषं प्रत्यादित्यो भवतीति हि श्रुतिः। स देवः क्रत्वा सर्वस्य कर्ता कृतः संपादितः प्रजापतिना कर्तृभिः स्तुतिकर्तृभिः सुकृतः स्तुत्या तीक्ष्णीकृतो भूत् भवति॥

२. हे सूर्य स प्रसिद्धस्त्वं नोऽस्मान् प्रति पुरः पुरस्तात् उद्गाः उद्गच्छ। कैः साधनैः। एभिः स्तोमेभिः स्तोमः स्तुत्यैः एतशेभिः एतवर्णैः स्वार्थिकः शकारो या जरंता युवशा ता पुरुषः कृष्णशवास्युत्तरत इत्यादिवत् तादृशैः एवैर्गमनशीलैरश्वैरुद्गाः। अथ तथा कृत्वा अस्माभिः स्तुतः सन् नोऽस्मान् अनागसोऽपापान् प्रवोचः। केभ्यः। मित्राय वरुणायार्यम्णेऽग्नये च। अत्र सौर्य इतरेषां मित्रादीनां संकीर्तनं तेषामपि निपातभाक्त्वादविरुद्धम्। एवं पूर्वत्रोत्तरत्र च मैत्रावरुणेऽर्यमादीनां संकीर्तनमपि न विरुध्यते॥

३. नोऽस्मभ्यं शुरुधः शुचेर्दुःखस्य प्रतिरोद्धारः ऋतावानः सत्यवंतो वरुणादयः सहस्रं सहस्रसंख्याकं धनं वि रदंतु वितरंतु। अथवा शुरुधः उक्तलक्षणाः सहस्रसंख्याकाः ओषधी रदंतु। किंच ते चंद्राः आह्लादकारिणोऽस्मभ्यं उपमं स्तुत्यं अर्कं अर्चनीयं यच्छंतु। किंच स्तवाना अस्माभिः स्तूयमाना नोऽस्माकं काममपेक्षितं पपुरंतु पूरयंतु। हे सूर्य त्वया अनुज्ञाता इति सूर्यस्य स्तुतिः॥

(P. 100.) ४. हे द्यावाभूमी द्यावापृथिव्यौ हे अदिते अखंडनीये एतद्द्यावाभूम्योरेवैकवचनेन संबोधनं हे ऋष्वे महन्नामैतत् हे महत्यौ नोऽस्मान् चासीथां रक्षतम्। ये वयं सुजनिमानः शोभनजन्मानो वां युवां जज्ञुः ज्ञातवंतः स्म। किंच वयं वरुणस्य हेळे क्रोधे मा भूम। तथा वायोर्मा भूम। तथा नृणां मनुष्याणां प्रियतमस्य मित्रस्य हेळे मा भूम ॥

५. प्र बाहवेति पंचमी मैत्रावरुणे पशौ पशुपुरोडाशस्य याज्या। सूत्रितं च। प्र बाहवा सिसृतं जीवसे नो यद्बंहिष्ठं नातिविधे सुदानू इति ॥

हे मित्रावरुणा मित्रावरुणौ देवौ बाहवा युवाभ्यां बाहू प्र सिसृतं प्रसारयतं हविः स्वीकाराय धनप्रदानाय वा। किमर्थमिति। नो जीवसेऽस्माकं जीवनाय। किंच नोऽस्माकं गव्यूतिं गावो यंति गच्छंत्यत्रेति गव्यूतिर्गोमार्गभूमिः तां तृणादिप्ररोहाय घृतेनोदकेन आ समंतात् उक्षतं सिंचतम्। किंच नोऽस्मान् जनेऽस्मत्समाने मनुष्यसमूहे वा नोऽस्मान् श्रवयतं विश्रुतं कुरुतम्। हे युवाना नित्ययौवनौ सर्वत्र व्याप्तौ वा युवां मे मम इमा इमानि हवा आह्वानानि श्रुतं शृणुतम् ॥

६. मित्रो वरुणोऽर्यमा चैते त्रयो देवा नु अद्य नोऽस्माकं त्मने आत्मने आत्महिताय तोकाय पुत्राय च वरिवो धनं दधंतु प्रयच्छंतु। नोऽस्माकं विश्वा सर्वाणि गंतव्यानि सुगा सुगमनानि सुपथानि च संतु भवंतु। शिष्टं गतम् ॥

इति पंचमस्य पंचमे चतुर्थो वर्गः ॥

---

## 63.

उद्वेतीति षड्टचमष्टमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभम्। आद्याश्चतस्रः पंचम्याः पूर्वार्धश्च सूर्यदेवत्या अवशिष्टास्त्रयोऽर्धर्चा मित्रावरुणदेवत्याः। तथा चानुक्रांतम्। उद्वेतीति चार्धपंचमा इति। विनियोगो लैंगिकः ॥

१. उद्वेति उद्गच्छत्ययं सूर्यः सुभगः शोभनभाग्यः सुष्ठु भजनीयो वा विश्वचक्षाः सर्वस्य द्रष्टा मानुषाणां सर्वेषां मनुष्याणां साधारणः। साधारणत्वप्रतिपादकश्रुतिः पूर्वमुदाहृता। मित्रस्य वरुणस्य च चक्षुः प्रकाशकः देवो द्योतमानः। यो देवश्चर्मेव चर्माणीव तमांसि समविव्यक् सह विचाति संवेष्टयति स महानुभावो देव उद्वेति ॥

२. अयं सूर्यस्य सूर्यः विभक्तिव्यत्ययः उद्वेति उद्गच्छति। कीदृशोऽयम्। जनानां सर्वेषां प्रसविता सर्वेषु कर्मस्वनुज्ञाता महान् पूज्यः केतुः सर्वस्य प्रज्ञापकः अर्णवः उदकप्रदः। किं कुर्वन्नुदेतीत्युच्यते। समानं सर्वेषामेकरूपमेकमेव चक्रं रथांगं चरणशीलं रथं वा पर्याववृत्सन् पर्यावर्तयितुमिच्छन्। यद्रथचक्रं धूर्षु रथस्य युक्त एतशः एतशवर्णो हरितवर्णोऽश्वो वहति। एको अश्वो वहति सप्तनामेत्युक्तम् ॥

(P.101.) ३. अयं सूर्यो विभ्राजमानो विशेषेण दीप्यमानः उषसामुपस्थात् उपस्थे मध्ये रेभैः स्तोतृभिरनुमद्यमानः सन्नुदेति। किंच एष देवो द्योतमानः सविता मे मह्यं

च्छंद उपच्छंदयति कामान्। एष इत्युक्तं क इति । यो देवः समानं सर्वेषां प्राणिनामेकरूपं धाम स्वीयं तेजःस्थानं न प्रमिनाति न हिनस्ति न संकोचयति स देव उदेतीति ॥

४. अयं सूर्यो रुक्मो रोचमान उरुचक्षाः प्रभूततेजाश्च सन् दिवोऽंतरिक्षादुदेति। यद्वा दिवोऽंतरिक्षस्य रुक्म आभरणस्थानीयः । कीदृशोऽयम् । दूरेअर्थो दूरेगंता अर्थोऽर्तेः दूरे प्रार्थ्यमानो वा तरणिस्तारकः भ्राजमानो दीप्यमानः सन्नुदेति। नूनं निश्चयं जनाः सर्वे प्राणिनः सूर्येण प्रेरकेण देवेन प्रसूता अनुज्ञाताः प्रेरिताः संतोऽर्थानि गंतव्यानि अनुष्ठेयानि अपांसि कर्माणि कृणवन् कुर्वंति ॥

५. यत्र यस्मिन्नंतरिक्षे अमृता अमरणधर्माणः पूर्वे देवा अस्मै सूर्याय गातुं मार्गं चक्रुः अकुर्वन् तत्पाथो ऽंतरिक्षं अन्वेति अनुगच्छति । क इव। दीयन् गच्छन् श्येनो न शंसनीयगमनो गृध्र इव। अयमर्धर्चः सौर्य इत्युक्तम् । हे मित्रावरुणा मित्रावरुणौ वां युवां सूरे सूर्ये उदिते सति प्रातःसवने नमोभिर्नमस्कारैः स्तुतिभिः उतापि च हव्यैर्हविर्भिश्च प्रति विधेम परिचरेम ॥

६. नू मित्र इति षष्ठी गता ॥ ( ६२. ६. )

इति पंचमस्य पंचमे पंचमो वर्गः ॥

---

## 64.

दिवि क्षयंतेति पंचर्चं नवमं सूक्तं वसिष्ठस्यार्षं मैत्रावरुणम् । दिवि पंचेत्यनुक्रमणिका। तृतीये छंदोमे प्रउगशस्त्रे आद्यस्तृचो मैत्रावरुणस्य । सूत्रितं च । दिवि क्षयंता रजसः पृथिव्यामा विश्ववाराश्विना गतं न इति ॥

१. दिवि द्युलोके अंतरिक्षे पृथिव्यां च वर्तमानस्य रजस उदकस्य क्षयंता क्षयतिरैश्वर्यकर्मा स्वामिनौ भवथः। हे मित्रावरुणौ वां युवाभ्यां प्रेरिता मेघा घृतस्य निर्णिजः उदकस्य रूपाणि दधीरन् ददते प्रयच्छंति । अथवा वां युवाभ्यां घृतस्य निर्णिजः रूपाणि घृतानीत्यर्थः। तानि दधीरन् दीयंते। नोऽस्माकं संबंधि हव्यं मित्रः सुजातः सुष्ठु प्रादुर्भूतः अर्यमा राजा सर्वस्य स्वामी सुक्षत्रः शोभनबलो वरुणश्चैते जुषंत सेवंताम् ॥

( P. 102. ) २. हे राजाना सर्वस्य स्वामिनौ हे महो महत ऋतस्योदकस्य यज्ञस्य गोपा गोपायितारौ सुबामंत्रिते परांगवत्स्वर इति परांगवद्भावात् षष्ठ्यामंत्रितसमुदायस्य निघातत्वं हे सिंधुपती नद्याः पालयितारौ हे क्षत्रिया बलवंतौ युवां अर्वाक् अस्मदभिमुखं आयातं आगच्छतम् । किंच हे मित्रावरुणा मित्रावरुणौ हे जीरदानू क्षिप्रदानौ युवां नो अस्मभ्यं इळामन्नं उतापि च पुष्टिं तत्साधकां वृष्टिं च दिवोऽंतरिक्षात् अव अवस्तात् इन्वतं प्रेरयतम् ॥

३. मित्रो वरुणो देवोऽर्योऽर्यमा चैते त्रयोऽपि नोऽस्मान् तत् तदा यदस्माकं अपेक्षितं तदा साधिष्ठेभिः साधकतमैः पथिभिर्मार्गैः नयंतु प्रापयंतु । किंच नोऽस्मान् सुदासे शोभनदानाय जनाय अरिरर्यमा यथा ब्रवत् असौ अनुकंप्य इति ब्रूयात् तथा कुर्वंतु । अर्यम्णः पुनरभिधानमादरार्थं । देवगोपाः देवा यूयं गोपायितारो येषामस्माकं ते वयं इषा युष्माभिर्दातव्येनान्नेन सह पुत्रादिसहिता मदेम हृष्येम ॥

४. हे मित्रावरुणौ यो वां युवयोर्गर्तं गर्तं रथं मनसा तक्षत् स्तोमानि संकल्पयेत । तथा कृत्वा ऊर्ध्वां उन्नतां धीतिं कर्म स्तुतिरूपं कृणवत् कुर्यात् उच्चैः स्तुयात् । एवं कृत्वा धारयच्च यागं धारयेत् हे राजाना स्वामिनौ मित्रावरुणा मित्रावरुणौ ता तौ युवां जनं घृतेनोदकेन उक्षथां सिंचतम् । तस्मै सुक्षितीः शोभननिवासाः प्रजाः तर्पयेथां । यथा सुक्षितयो भवंति तथा तर्पयेथामिति ॥

५. अनया स्तुतिमुपसंहरति । हे वरुण हे मित्र तुभ्यं युवयोः वायवे वायुर्गंता आदित्यः स एवार्यमा तस्मै चैष स्तोमः स्तवः अयामि अकारि । किमिव । शुक्रो दीप्तः सोमो न युष्मभ्यं प्रीतिकरः सोमो यथा दीयते तद्वत् । धियः कर्माण्यस्मदीयानि अविष्टं पुरंधीः स्तुतीः जिगृतं प्रबुध्यतम् । अन्यद्गतम् ॥

इति पंचमस्य पंचमे षष्ठो वर्गः ॥

---

## 65.

प्रति वां सूर इति पंचर्चं दशमं सूक्तं वसिष्ठस्यार्षं मैत्रावरुणम् । प्रति वामित्यनुक्रांतम् । द्वितीये छंदोमे प्रउगशस्त्रेऽप्येष तृचः । सूत्रितं च । प्रति वां सूर उदिते सूक्तैर्धेनुः प्रत्नस्येति ॥

१. सूरे सूर्ये उदिते प्रातःसवने मित्रं पूतदक्षं शुद्धबलं वरुणं वां सूक्तैर्हुवे आह्वये । ययोर्मित्रावरुणयोः अक्षितं अक्षीणं अत एव ज्येष्ठं असुर्यं बलं आचिता आचिते उपचिते शूरसंघैरुपेते यामन् यामनि संग्रामे विश्वस्य शत्रुसंघस्य जिगत्नु जेतृ भवति ॥

(P. 103.) २. ता हि तौ खलु देवौ देवानां मध्ये असुरा बलवंतौ अर्या अर्यौ तौ सर्वस्येश्वरौ ता तौ नोऽस्माकं क्षितीः पुत्रादिरूपाः प्रजा ऊर्जयंतीः प्रवृद्धाः करतं कुरुतम् । हे मित्रावरुणा मित्रावरुणौ वयं वां युवां अश्याम व्याप्नुयाम । यत्र यस्यां युवयोर्व्याप्तौ द्यावा द्यावापृथिव्यौ । सर्वदा तयोः सहभावादयमर्थो लभ्यते । अहा च एतद्रात्रेरुपलक्षणं अहोरात्राणि च पीपयन् अस्मान् प्याययेयुः ॥

३. ता तौ मित्रावरुणौ भूरिपाशौ प्रभूतबंधनसाधनपाशोपेतौ अनृतस्य यागरहितस्य सेतू सेतुवद्बंधकौ रिपवे मर्त्याय वैरिजनाय दुरत्येतू दुरतिक्रमौ भवतः । हे मित्रावरुणा तादृशौ मित्रावरुणौ वां युवयोर्ऋतस्य यज्ञस्य युवयोरर्थायानुष्ठीयमानस्य यागस्य पथा मार्गेण दुरिता दुःखानि तरेम नावा अपो न प्रभूतान्युदकानीव ॥

४. मैत्रावरुणे पशावा नो मित्रावरुणेत्येषा चतुर्थ्यनुवाक्या । सूत्रितं च । आ नो मित्रावरुणा हव्यजुष्टिं युवं वस्त्राणि पीवसा वसाथे इति ॥

हे मित्रावरुणा मित्रावरुणौ नोऽस्माकं हव्यजुष्टिं हविःसेवनवंतं यज्ञं आगच्छतमिति शेषः। आगत्य चेळाभिरन्नैः सह घृतैरुदकैर्गव्यूतिमस्मदीयां भूमिं उक्षतं सिंचतम्। वां युवां प्रति अत्रास्मिन् लोके वरं उत्कृष्टं हविः स्तोत्रं वा कः आ यच्छेदिति शेषः। अतः केवलं कृपयैव दिव्यस्य दिवि भवस्य चारोश्चरणीयस्य उद्नः उदकस्य कर्माणि षष्ठीं उक्तलक्षणमुदकं पृणीतं प्रयच्छतम्॥

५. एष स्तोम इति पंचमी गता ( ६४. ५. )

इति पंचमस्य पंचमे सप्तमो वर्गः॥

---

## 66.

प्र मित्रयोरित्येकोनविंशत्यृचमेकादशं सूक्तं वसिष्ठस्यार्षम्। अत्रेयमनुक्रमणिका। प्र मित्रयोरेकोना गायत्रं दशम्याद्यास्त्रयः प्रगाथाः पुरउष्णिक् चतुर्थ्याद्या दशादित्यास्तिस्रः सौर्य इति। दशमी बृहती एकादशी सतोबृहती द्वादशी बृहती त्रयोदशी सतोबृहती चतुर्दशी बृहती पंचदशी सतोबृहती षोडशी पुरउष्णिक् शिष्टा गायत्र्यः। चतुर्थ्याद्यास्त्रयोदश्यंता आदित्यदेवत्याः चतुर्दश्याद्यास्तिस्रः सूर्यदेवत्याः। आद्यंत्यौ तृचौ पूर्ववन्मैत्रावरुणौ। अग्निष्टोमे माध्यंदिनसवने मैत्रावरुणशस्त्रे आदितो नवर्चः शस्याः। प्र मित्रयोर्वरुणयोरिति नवेति सूत्रितत्वात्। पृष्ठ्याभिप्लवषडहयोः स्तोमवृद्धिनिमित्तमावापार्था आद्याः षडृचः। सूत्रितं च। प्र मित्रयोर्वरुणयोरिति षळिति॥

१. मित्रयोर्वरुणयोः मित्रावरुणयोरित्यर्थः उभयत्र प्रतियोगापेक्षया द्विवचनत्वं तुविजातयोः बहुप्रादुर्भावयोर्देवयोः नोऽस्मदीयः शूष्यः सुखकरो नमस्वानन्नवान् हविर्भिर्युक्तः स्तोमः स्तोत्रं प्रैतु गच्छतु। अहोरात्रं वै मित्रावरुणाविति श्रुतिः। अनयोरहोरात्रापेक्षत्वात्तयोः पुनः पुनरागमनादनयोस्तुविजातत्वम्। अथवा बहूनामुपकारायानयोः प्रादुर्भावात्तुविजातत्वम्॥

२. या यौ युवां धारयंत। के। देवाः आदिकर्तारः असुर्याय बलकरणाय। कीदृशौ युवाम्। सुदक्षा शोभनबलौ दक्षपितरा बलस्य पालकौ स्वामिनौ वा बलप्रदावित्यर्थः। प्रमहसा प्रकृष्टतेजस्कौ तौ साधयतमित्युत्तरत्रान्वयः॥

( P. 104. ) ३. ता तौ स्तिपा स्त्यायंत इति स्तयो गृहाः तान्पात इति स्तिपौ तनूपा तन्वः पातारौ हे वरुण हे मित्र उक्तलक्षणौ युवां जरितॄणां नोऽस्माकं धियः कर्माणि स्तुतिरूपाणि साधयतं सफलवंति कुरुतम्॥

४. यद्धनमस्माकमपेक्षितं तदद्यास्मिन्काले सूर उदिते सति प्रातःसवने अनागाः पापहंता मित्रोऽर्यमा सविता भगश्चैते प्रत्येकं सुवाति प्रेरयेत्। अथवा अनागा मित्रोऽर्यमा दाता भवतु। तदीप्सितं धनं भगो भजनीयः सविता सुवाति प्रेरयतु॥

५. स क्षयः स निवासः सुप्रावीरस्तु सुष्ठु प्रकर्षेण रक्षितास्तु प्रावीः रक्षणार्थः प्रकर्षेण नु क्षिप्रं भवत्विति शेषः कदेत्युच्यते हे सुदानवः सुदाना युष्माकं यामन् यामनि गमने सति। कीदृशानां गमने। ये यूयमागत्य नोऽस्माकं अंहः पापमतिपर्षथ अतिपारयथ तेषां गमन इति॥

इति पंचमस्य पंचमेऽष्टमो वर्गः॥

६. उतापि च ये मित्रादयस्त्रयः स्वराजः सर्वस्य स्वामिनः अदितिः तेषां माता च संति अदब्धस्य अहिंसितस्य महो महतो व्रतस्यास्य कर्मणो राजानः स्वामिनः ते ईशते समर्था भवंति अभिमतं दातुमिति शेषः। अथवैवं योज्यम्। ते मित्रादयोऽदितिश्च अदब्धस्य व्रतस्य स्वराजः स्वराजस्ते महो महतोऽस्मदभिमतधनस्य राजानः स्वामिनः संत ईशतेऽस्मभ्यं तद्दातुम्॥

७ प्रति वामित्येष तृचश्चातुर्विंशिकेऽहनि प्रातःसवने मैत्रावरुणस्य पर्यासार्थः। सूत्रितं च। प्रति वां सूर उदिते व्यंतरिक्षमतिरदिति॥

हे मित्रावरुणौ मित्रं त्वां वरुणं च युवां रिशादसं शत्रूणामत्तारं अर्यमणं च प्रति प्रत्येकं गृणीषे स्तुवे। कदेत्युच्यते। सूरे सूर्ये उदिते सति प्रातरित्यर्थः॥

८. हिरण्यया हितरमणीयेन राया धनेन सहिताय अवृकाय अहिंस्याय शवसे ऽस्माकं बलाय इयमिदानीं क्रियमाणा मतिः स्तुतिर्भवत्विति शेषः। हिरण्ययेत्यत्र सुपां सुलुगिति तृतीयैकवचनस्य याजादेशः। किंच हे विप्राः प्राज्ञाः इयं मे च स्तुतिर्मेधसातये यज्ञलाभाय च भवतु॥

९. हे देव वरुण ते वयं तव स्तोतारः स्याम समृद्धा भवेम। न केवलं वयमेव यजमानाः किंतु सूरिभिः स्तोतृभिर्ऋत्विग्भिः सह। तथा हे मित्र देव ते वयं सूरिभि सह स्याम भवेम। किंच इषमन्नं स्वर्दृशं च धीमहि धारयामहे॥

१०. आश्विनशस्त्रे बहवः सूरचक्षस इति प्रगाथः। सूत्रितं च। बहवः सूरचक्षस इति प्रगाथा इति। दशरात्रे पंचमेऽहनि मरुत्वतीयेऽप्ययं प्रगाथः। सूत्रितं च। बहवः सूरचक्षस इमा उ वां दिविष्टय इति॥

बहवो महांतः सूरचक्षसः सूर्यसदृशप्रकाशाः सूरः प्रकाशको येषामिति वा अग्निजिह्वाः अग्निरेव जिह्वा अदनसाधनं येषां तादृशाः। ऋतावृधो यज्ञस्य वर्धयितारो मित्रादयः। किंच ये त्रीणि विदथानि ज्ञानानि विदथानि क्षित्यादिस्थानानि क्षित्यादीनि परिभूतिभिः परिभावुकैः धीतिभिः कर्मभिः येमुः प्रयच्छंति ते क्षत्रमाशते-त्युत्तरत्र संबंधनीयम्। अथवात्रैव ये त्रीणि स्थानानि प्रयच्छंति ते बहुत्वादिगुणो-पेता आगच्छंत्वित्यध्याहार्यम्॥

इति पंचमस्य पंचमे नवमो वर्गः॥

११. ये मित्रादयः शरदं संवत्सरं वि दधुः अकुर्वन् आत् अनंतरमेव मासं अनंतरं अहः अनंतरमाहःसाध्यं यज्ञं आत् अनंतरमक्तुं रात्रिं च ऋचं मंत्रांश्च। यद्वा सर्वत्र

आदित्ययमपीत्यर्थे वर्तते। तथा सति क्रमोऽविवक्षितः। ते मित्रो वरुणो ऽर्यमा च त्रयः अनाप्यमन्यैरप्राप्तं क्षत्रं बलं राजानः राजमानाः आशत व्याप्तवंतः॥

(P. 105.) १२. तत्प्रसिद्धमद्यास्मिन्यागकाले वो युष्मान्मनामहे याचामहे। कैः साधनैः सूक्तैः। कस्मिन्काले सूर उदिते प्रातःकाल इत्यर्थः। यद्वनं हे ऋतस्योदकस्य रथ्यः नेतारो यूयं वरुणादय ओहते यूयमित्यनेन सामानाधिकरण्यादोहत इत्यत्र पुरुषव्यत्ययः ओहध्व इत्यर्थः। तद्धनं मनामह इति॥

१३. ये यूयं ऋतावान ऋतवंतः यज्ञवंतः उदकवंतो वा ऋतजाताः। उक्त ऋतशब्दार्थः तदर्थमुत्पन्नाः। अथवा ऋतात्प्रजापतेः सकाशादुत्पन्नाः ऋतावृध उक्तार्थस्य ऋतस्य वर्धयितारः घोरासो घोराः अनृतद्विषः अयष्टृद्वेष्टारः तेषां वो युष्माकं सुच्छर्दिष्टमे सुखतमे सुम्ने धने अत्यंतरमणीयगृहयुक्ते सुखे वा ये वयं ये चान्ये सूरयः स्तोतारः ते सर्वे स्याम भवेम॥

१४. सोमातिरेके माध्यंदिनसवने नैमित्तिके शस्त्रे उदु त्यदित्ययं प्रगाथोऽनुरूपः सूत्रितं च। बण्महाँ असि सूर्योदु त्यद्दर्शतं वपुरिति प्रगाथौ स्तोत्रियानुरूपाविति चातुर्विंशिकेऽहनि माध्यंदिनसवनेऽयमेव वैकल्पिकः स्तोत्रियस्तृचः। सूत्रितं च। उदु त्यद्दर्शतं वपुरुदु त्ये मधुमत्तमा इति॥

त्यत्तत् दर्शतं दर्शनीयं वपुर्मंडलं दिवोऽतरिक्षस्य प्रतिह्वरे समीप उदु एति उदेति। उ इति पूरणः। यदीं यदेतन्मंडलं आशुः शीघ्रगामी एतशः एतवर्णोऽश्वो वहति धारयति। किमर्थम्। विश्वस्मै सर्वस्मै अरं चक्षसे सम्यक् सर्वलोकदर्शनाय॥

१५. शीर्ष्णःशीर्ष्णः सर्वस्यापि शिरसः तृतीयार्थे पंचमी स्वस्वशिरसेत्यर्थः अयं वहंतीत्यनेन संबध्यते। अथवा शिरःशब्देन तद्वान्पदार्थो लक्ष्यते वीप्सया तस्य कार्त्स्न्यमुच्यते सर्वस्य श्रेष्ठमित्यर्थः। जगतो जंगमस्य तस्थुषः स्थावरस्य पतिं स्वामिनं रथे वर्तमानं सूर्यं विश्वं रजः समया सर्वलोकस्य समीपे अभितः-परितःसमयेत्यादिना समयाशब्दयोगात् द्वितीया सप्त सप्तसंख्याकाः स्वसारोऽन्यनिरपेक्षेण स्वयमेव सरंत्यो हरितो हरितवर्णा अश्वा वहंति॥

इति पंचमस्य पंचमे दशमो वर्गः॥

१६. तत्प्रसिद्धं चक्षुः सर्वस्य प्रकाशकं देवहितं देवानां हितं तेषां हविःस्वीकारस्यैतदधीनत्वात्। अथवा देवेन हितं शुक्रं निर्मलं सूर्यमंडलमुच्चरत् उद्गच्छति। तच्छरदः शतं शतसंवत्सरं पश्येम जीवेम शरदः शतं पुनःश्रुतिरादरार्था॥

१७. पृष्ठ्याभिप्लवषडहयोः स्तोमनिमित्ते आवापे काव्येभिरदाभ्येति तृचः। काव्येभिरदाभ्येति तिस्र इति हि सूत्रितम्॥

( P. 106. ) हे अदाभ्या अदंभनीयौ हे वरुण त्वं मित्रश्च द्युमत् द्युतिमंतौ युवां काव्येभिरस्मत्कृतैः स्तोत्रैरायातम्। किमर्थम्। सोमपीतये सोमपानाय॥

१८. हे वरुण त्वं मित्रश्च अद्रुहा अद्रोग्धारौ युवां दिवो द्युसंबंधिभ्यो धामभिः धामभ्यः स्थानेभ्यः पंचम्यर्थे तृतीया। अथवा धामभिस्तेजोभिः विभूतिभिः सार्धं आ

यातं अस्मद्यज्ञमागच्छतम् । आगत्य च आतुजी शत्रूणां सर्वतो हिंसकौ आदातारौ वा धनानां एवंरूपौ संतौ सोमं पिबतम् । तुजि पिजि हिंसाबलादाननिकेतनेषु अत्र हिंसायामादाने वा वर्तते ॥

११. हे मित्रावरुणा मित्रावरुणौ हे नरा यागनेतारौ आहुतिं सोमलक्षणां जुषाणौ प्रियमाणौ संतौ आ यातं आगच्छतं यज्ञम् । आगत्य च हे ऋतावृधा यज्ञस्य वर्धकौ युवां सोमं पातं पिबतम् ॥

इति पंचमस्य पंचम एकादशो वर्गः ॥

---

## 67.

प्रति वां रथमिति दशर्चं द्वादशं सूक्तम् । प्रति वां दशाश्विनं तु तदित्यनुक्रमणिका । ऋषिर्वसिष्ठः । छंदस्त्रिष्टुप् । तुह्यादि शरिभाश्ये न्दश्य ञ्निर्यष्ट सूक्तान्याश्विदेवत्यानि । प्रातरनुवाके आश्विने क्रतौ त्रैष्टुभे छंदस्येतदादिसूक्तसप्तकं द्वितीयवर्जं शंस्यम् । तथा च सूत्रम् । प्रति वां रथमिति सप्तानां द्वितीयमुद्धरेदिति ॥

१. हे नृपती नृणां ऋत्विग्यजमानानां स्वामिनावश्विनौ वां युवयो रथं जरध्यै जरा स्तुतिः स्तोतुं प्रतिगच्छामीति शेषः । के ---- ति तदुच्यते । हविष्मता हविर्युक्तेन यज्ञियेन यज्ञार्हेण मनसा स्तोत्रेण । यो रथो वां हे धिष्ण्यौ धिषणार्हौ धिषणा स्तुतिः यां युवां दूतो न दूत इव अजीगर्जागरयति प्रबोधयति अस्मान्प्रति गंतुं तं रथमच्छा विवक्मि आवच्मि । प्रबोधने दृष्टांतः । सूनुर्न पितरा पुत्रो मातापितराविव । अथवा अत्र यो रथो युवामजीगः तेन रथेन गंतुं बुध्यमानौ युवामच्छा विवक्मीति वा योज्यम् ॥

२. अस्मे अस्माभिः समिधानः समिध्यमानः सन् अग्निः अशोचि दीप्यते । तमसश्चित् तमसोऽपि अंताः पर्यंताः प्रदेशाः उपो अदृश्रन् उपदृश्यंते सर्वैः । केतुः सर्वस्य प्रज्ञापकः सूर्यो दिवो दुहितुरुषसः पुरस्तात् पूर्वस्यां दिशि श्रिये शोभायै जायमानः सन् अचेति ज्ञायते । यस्मादेवं तस्माद्युवयोरागमनसमयः । अत आगच्छतमिति शेषः ॥

३. हे अश्विना वां युवां सुहोता सुष्ठु देवानां स्तोता विवक्वान् स्तुतीनां वक्ताहं हे नासत्या सत्यभूतौ इदमाश्विनावित्यत्र योज्यं स्तोमैः सिषक्ति सेवते । अतोऽर्वाक् अस्मदभिमुखं पूर्वीभिः पथ्याभिः पूर्वक्षुण्णैर्मार्गैः स्वर्विदा स्वर्गमुदकं वा जानता स्वरणवता वा वसुमता धनवता च रथेन यातं गच्छतम् ॥

(P. 107.) ४. हे अश्विना अश्विनौ अवोः रक्षित्रोः युवाभ्यां युवाकुः युवां कामयमानोऽहं नूनमद्य स्वभूतो भवामीति शेषः । यद्यस्मात् हे माध्वी मधुरस्य सोमरसस्यार्हौ मधुविद्यासंबंधिनौ वा वां युवां सुते अभिषुते सोमे वसूयुर्वसुकामो इवे स्तौमि अतो वा स्वभूतः वां युवां आवहंतु । के । स्थविरासः स्थूलाः प्रवृद्धाः अश्वाः । एतयोरतिप्रवृद्धत्वात् शीघ्रगतेरपेक्षितत्वाच्च स्थविरै रेव भाव्यम् । आगमनानंतरं अस्मे अस्माभिः सुषुता सुष्ठु अभिषुतानि मधूनि मधुररसान् पिबाथः पिबतम् ॥

५. हे अश्विना अश्विनौ देवा देवौ युवां प्राचीं ऋज्वीं अमृध्रां अहिंसितां वसूयुं धनमिच्छंतीं मे मम धियं बुद्धिं स्तुतिं कर्म वा सातये लाभायोचितां कृतं कुरुतम्। किंच वाजे आ संग्रामेऽपि विश्वाः पुरंधीरस्मदीया बुद्धीरविष्टं रक्षतम्। हे शचीपती शचीति कर्मनाम कर्मणां पालकौ ता तौ युवां शचीभिः अस्मदीयैः स्तुत्यादिरूपैः कर्मभिर्नोऽस्मान् शक्तं प्रयच्छतं धनमिति शेषः ॥

इति पंचमस्य पंचमे द्वादशो वर्गः ॥

६. हे अश्विना अश्विनौ नोऽस्मान् धासु धीषु एषु कर्मसु अविष्टं रक्षतम्। नोऽस्मभ्यं अह्रयं अक्षीणं प्रजावत्पुत्राद्युपेतं पुत्रोत्पादनसामर्थं रेतोऽस्तु। वां युवयोरनुग्रहात् लब्धे तोके पुत्रे तनये तत्पुत्रादौ च तूतुजानाः अभिमतं धनं प्रयच्छंतः सुरत्नासः शोभनधनाश्च संतो देववीतिं देवानां वीतिः प्राप्तिर्यस्मिन् तादृशं यज्ञं आ गमेम आगच्छेम ॥

७. एष पुरतो दीयमानः स्य स युवयोः प्रियत्वेन प्रसिद्धः सोमो हे माध्वी मधुप्रियावश्विनौ वां युवयोः पुरतः निधिः निधिस्थानीयो हितः स्थापितोऽस्मे अस्माभिः रातो दत्तः संकल्पितः संनिहितः। किमिव। सख्ये सख्यार्थं पूर्वगत्वेव पुरतो गंता दूत इव। स यथा प्रियं जनयन् स्वामिनः पुरतो वर्तते तद्वदित्यर्थः। यस्मादेवं तस्मात् अहेळता अक्रुध्यता मनसा अनुग्रहयुक्तेन चेतसा अर्वाक् अस्मदभिमुखं आ यातं आगच्छतम्। अश्नंता हव्यं हविः सांनाय्यिकं अश्नंतौ अभ्यवहरंतौ। कुत्र। मानुषीषु विक्षु मनुष्यरूपासु प्रजासु वर्तमानम् ॥

८. हे भुरणा सर्वस्य भर्तारौ युवयोरेकस्मिन् समाने उभयसाधारणे योगे ऽस्मद्विषये सति वां युवयोः रथः सप्त स्रवतः सर्पणस्वभावाः सप्तसंख्याका वा गंगाद्याः परि यात् परिगच्छति शीघ्रमागच्छतीत्यर्थः। तद्रथानुकूलाः सुभ्वः सुभवनाः देवयुक्ताः देवाभ्यां युवाभ्यां युक्ताः अश्वाः शीघ्रगमने न वायंति न शुष्यंति न श्राम्यंते। येऽश्वाः वां धूर्षु रथस्य तरयः तारकाः शीघ्रगंतारो वहंति युवां ते न वायंतीति ॥

(P. 108.) ९. असश्चता कुत्राप्यसज्यमानौ युवां मघवद्भ्यो धनवद्भ्यो हविष्मद्भ्यो यजमानेभ्यः तेषामर्थाय भूतं हि भवतम्। तेभ्य एवानुरक्तौ भवतम्। अनुग्राह्या एव विशेष्यंते। ये राया धनेन निमित्तेन राया युक्ता वा मघदेयं दातव्यं मघं धनं हविर्लक्षणं वा जुनंति प्रेरयंति यच्छंति। ये च बंधुं स्नेहेन बध्नातीति बंधुः तं स्वसंबंधिनम्। अथवा कर्मणा बध्नातीति बंधुरध्वर्य्वादिः तं सूनृताभिः प्रियसत्यात्मिकाभिर्वाग्भिः प्र तिरंते प्रवर्धयंति। प्रपूर्वस्तिरतिर्वर्धनार्थः। किं कुर्वंतः। गव्या गोरूपाणि अश्व्या अश्वरूपाणि च मघानि धनानि पृंचंतोऽर्थिभ्यः प्रयच्छंतः तेभ्यो मघवद्भ्यो भूतमिति ॥

१०. हे युवाना नित्ययौवनौ नु अद्य युवां मे हवमस्मदीयां स्तुतिं आ शृणुतम्। श्रुत्वा च हे अश्विनौ इरावत् हविर्युक्तं वर्तिर्गृहं यासिष्टं आगच्छतम्। आगत्य च रत्नानि रमणीयानि धनानि धत्तं दत्तम्। सूरीन् स्तोतॄन् जरतं वर्धयतम्। धातूनामनेकार्थत्वात्। शिष्टं स्पष्टम् ॥

इति पंचमस्य पंचमे त्रयोदशो वर्गः ॥

68.

आ शुभ्रा यातमिति नवर्चं त्रयोदशं सूक्तं वसिष्ठस्यार्षमाश्विनम् । आदितः सप्त विराजः अष्टमीनवम्यौ त्रिष्टुभौ । अनुक्रम्यते च । आ शुभ्रा नव सप्ताद्या विराज इति सूक्तविनियोगो लैंगिकः ॥

१. हे शुभ्रा दीप्तौ स्वश्वा शोभनाश्वौ हे अश्विना अश्विनौ आ यातं अस्मद्यज्ञमागच्छतम् । दस्रा शत्रूणां क्षपयितारौ युवां युवाकोर्युवां कामयमानस्य मम गिरः स्तुतीर्जुजुषाणा सेवमानौ भवतमिति शेषः । न केवलं स्तुतिं किंतु नोऽस्मदीयानि प्रतिभृता संभृतानि हव्यानि हवींषि च वीतं भक्षयतम् ॥

२. प्र वामंधांसीत्येषा आश्विनशस्त्रयाज्या । सूत्रितं च । प्र वामंधांसि मद्यान्यस्थुरुभा पिबतमश्विनेति ॥

हे अश्विनौ वां युवाभ्यां मद्यानि मदजनकानि अंधांसि सोमलक्षणान्यन्नानि प्रास्थुः प्रास्थिषत गृहीतान्यासन्नित्यर्थः अतो युवां मे मम हविषो वीतये पानाय अरं अत्यर्थं शीघ्रं गंतं आगच्छतम् । अर्यः अरेः अस्मद्विरोधिनो हवनानि तिरः तिरस्कृत्य नोऽस्मदाह्वानं श्रुतं शृणुतम् । श्रुतमित्यस्य वाक्यादित्वादनिघातः ॥

३. हे सूर्यावसू सूर्यायाः सह रथे वसंतौ वां युवयोः रथः अस्मभ्यमस्मदर्थं इयानो याच्यमानः सन् इयर्ति आगच्छति अस्मद्यज्ञम् । अथवा वां प्रेरयति गमनाय । कीदृशो रथः । मनोजवाः मनोवेगः शचीभिः अपरिमिताभिर्नियतरक्षणः । किं कुर्वन् । रजांसि लोकान् तिरः तिरस्कृत्य अतिक्रम्य इयर्तीति ॥

४. यद्यदा वां युवां प्रति देवया देवौ युवां कामयमानः उ इति पूरणः अयमद्रिः अभिषवग्रावा सोमसुत् सोममभिषुण्वन् युवाभ्यां युवाभ्यामर्थाय अभिषुण्वन्निति संबंधः । एवं कुर्वन् ऊर्ध्वः उन्नतः सन् विवक्ति उच्चैः शब्दयति तदानीं वल्गू सुंदरौ युवां विप्रो मेधावी यजमानो हव्यैर्हविर्भिः आ ववृतीत आवर्तयति ॥

(P.109.) ५. हे अश्विनौ वां युवयोश्चित्रं चायनीयं यद्भोजनं धनं अस्ति ह अस्ति खलु न्विति पूरणः तदस्मभ्यं दत्तमित्यर्थः । अथ तयोः स्तुतिः । अत्रये एतन्नामकादृषेः पंचम्यर्थे चतुर्थी तस्मान्महिष्वंतं ऋबीसं नि युयोतं पृथक्कुरुतम् । योऽत्रिः प्रियः सन् स्तोतृत्वाद्युवाभ्यां प्रियभूतः सन् युवाभ्यामेव कृतमोमानं रक्षणं सुखं दधते धारयति ॥

इति पंचमस्य पंचमे चतुर्दशो वर्गः ॥

६. उतापि च हे अश्विना अश्विनौ वां युवयोः कर्म कुर्वते जुरते जूर्णाय हविर्दे हविर्दात्रे च्यवानायैतन्नामकाय महर्षये त्यक्तप्रतीत्यं प्रतिगमनं तत्तस्य रूपस्य प्रत्याहृत्यै भूत् अभूत । किं तदिति । यद्द्रापी रूपं इत ऊति इतोगमनाख्यं मृत्योः सकाशादितःप्रातिरूपं अधि धत्थः अध्यधत्तम् । युवं च्यवानमश्विना जरंतं पुनर्युवानं चक्रथुः शचीभिरित्यादिषु च्यवनस्य युवयोर्नवीकरणं प्रसिद्धम् ॥

७. उतापि च त्यं तं भुज्युं एतन्नामानं समुद्रे मध्ये समुद्रोदकस्य मध्ये सखायो भुज्युसखिभूता दुरेवासो दुष्टगमनाः जहुः त्यक्तवंतः। ईमेनं समुद्रमध्ये क्षिप्तं निः पर्षत् निरपारयतम्। यो भुज्युर्युवाकुः युवां कामयिता अरावा अरणवान् अभिगंता च तमेनं निरपारयतम्। अत्राश्विनेषु सूक्तेषु कथाः सूच्यंते अत्रिभुज्युवादीनामग्निजलादिभ्यो रक्षणरूपास्ताः सर्वा महता प्रपंचेनास्माभिर्नासत्याभ्यां वर्हिरिवेत्यत्र प्रपंचिताः। तास्तत्र द्रष्टव्याः ॥

८. वृकाय धनादात्रे अभिलषतं इत्यर्थः। चिदिति पूरणः। अथवा परेभ्यो धनानि प्रयच्छते। यद्वा वृकाय वृकवद्धिंसकायैतन्नामकाय जसमानाय कर्मभिरुपक्षीयमाणाय ऋषये शक्तं अभिमतं धनमदत्तम्। शकेर्दानार्थस्य लुङ्येतद्रूपं अडभावश्छांदसः। उतापि च शयवे एतन्नामकाय ऋषये हूयमाना आहूयमानौ युवां श्रुतं अशृणुतम्। यौ युवां अघ्न्यां गां अपिन्वतं अपूरयतं क्षीरेण अपो न अद्भिरिव नदीं तां यथोदकेन पूरयतस्तद्वत्। कीदृशीमघ्न्याम्। स्तर्यं चित् स्तरीमपि निवृत्तप्रसवां वृद्धामपि शक्ती शक्त्या सामर्थ्येन दोहनलक्षणेन युक्तां कृत्वा शचीभिर्युष्मदीयैः कर्मभिः हे अश्विनाविति। शयवे चिन्नासत्या शचीभिर्जसुरये स्तर्यं पिप्यथुर्गामित्याद्युक्तम्॥

**९. एष स्तोता स्य स प्रसिद्धो वसिष्ठः कारुः स्तोता उषसामग्रे प्रातःसवने बुधानो** बुध्यमानः सुमन्मा शोभनमतिः सुष्टुतिर्वा सूक्तैर्जरते स्तौति। तं इषान्नेन वर्धत् वर्धयतम्। वचनव्यत्ययः। अघ्न्या अहंतव्या गौश्च वर्धत् वर्धयतु। अथवैकमेव वाक्यम्। अघ्न्या गौर्वसिष्ठस्य प्रतिनियता अग्निहोत्रार्था गौः इषान्नेन घृतादिनेत्यर्थः। पयोभिश्च तं वसिष्ठं वर्धत् वर्धयतु। एवमात्मानं परोक्षेण निर्दिदेश। शिष्टं स्पष्टम्॥

इति पंचमस्य पंचमे पंचदशो वर्गः॥

---

69.

आ वां रथ इत्यष्टर्चं चतुर्दशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाश्विनम्। अनुक्रम्यते च। आ वां रथोऽष्टाविति। प्रातरनुवाकाश्विनशस्त्रयोर्विनियोग उक्तः॥

१. हे अश्विनौ वां रथो वृषभिः युवभिरश्वैर्युक्तः सन्नायातु यज्ञमस्मदीयम्। कीदृशो रथः। रथो विशेष्यते। रोदसी द्यावापृथिव्यौ बद्बधानो बाधमानो हिरण्ययः हिरण्मयः घृतवर्तनिः घृतमुदकं वर्तन्यां यस्य तादृशः पविभी रथनेमिभिः मधुपात्रैर्वा रुचानो दीप्यमानः इषां वोळ्हा यजमानैर्दत्तानां हविषां वाहकः दातव्यानां वान्नानां वोळ्हा नृपतिः नृणां यजमानानां स्वामी वाजिनीवानन्नवान्॥

(P. 110.) २. स रथः पंच भूम भूतानि सर्वप्राणिनः पप्रथानः प्रथमानः त्रिवंधुरः वंधुरमुच्चावचं सारथ्यवस्थानं काष्ठमयं तादृशैस्त्रिभिर्युक्तो मनसास्मत्स्तुत्या युक्तोऽभ्यायातु। येन रथेन देवयंतीर्विशो यजमानान्प्रति गच्छथः। हे अश्विना अश्विनौ कुत्र चित् यत्र क्वापि यामं गमनं दधाना धारयंतौ येन विशो गच्छथः स यात्विति॥

३. हे देवौ स्वश्वा शोभनाश्वेन यशसा च अर्वाक् अस्मदभिमुखं यातं आगच्छतम् । हे दस्रा शत्रूणामुपक्षपयितारौ मधुमंतं मधुररसोपेतं निधिं निधिवन्निहितं सोमं पिबाथः पिबतम् । वां युवयो रथो वध्वा सूर्यया सह याद्मानो गंतव्यान्प्रति गच्छन् गमयन्नित्यर्थः । एवं कुर्वन् वर्तनिभ्यां स्वचक्राभ्यां दिवोऽंतान् पर्यंतप्रदेशान् बाधते शीघ्रगमनेन पीडयति ॥

४. युवोर्युवयोः श्रियं श्रयत इति श्री रथः तं सेवामेव वा योषा सर्वदा मिश्रयंती योषित् सूरः सूर्यस्य दुहिता पर्यवृणीत । कदा । परितक्म्यायां रात्रौ परितस्तकनवति संग्रामे यज्ञे वा गंतव्ये । किंच । यद्यदा देवयंतं देवकामं यजमानं यज्ञं वा शचीभिर्युवयोर्गमनादिलक्षणैः कर्मभिः अवथः रक्षथः तदानीं घ्रंसं दीप्तं वयोऽन्नं सोमादिलक्षणं ओमना अवनेन रक्षणेन निमित्तेन वां परिगात् पर्यगात् ॥

५. यो रथो हेति पूरणः स्य स प्रसिद्धो रथो हे रथिरा रथिनौ मत्वर्थीयो रः उस्राः तेजांसि वस्ते आच्छादयति । यश्च रथो युजानः अश्वैर्युक्तः सन् वर्तिर्मार्गं यजमानगृहं वा परियाति परिगच्छति तेन रथेन हे अश्विना अश्विनौ नोऽस्माकमस्मिन् यज्ञे उषसो व्युष्टौ प्रातःकाले शं शमनाय पापानां योः मिश्रणाय च सुखानां नि वहतं नितरां प्राप्नुतम् ॥

६. हे नरा नेताराविश्विनौ गौरेव गौरा मृगीव विद्युतं विशेषेण दीप्यमानं सोमं प्रति तृषाणा तृष्णायुक्तौ अद्यास्माकं सवना सवनानि उप यातं उपागच्छतम् । पुरुत्रा बहुषु यज्ञेषु वां युवां यजमाना मतिभिः स्तुतिभिर्हवंते हि स्तुवंति अतो वां युवां अन्ये यष्टारो देवयंतो देवौ कामयमानाः वां युवां मा नि यमन् मा नियंतु ॥

( P. 111. ) ७. हे अश्विना अश्विनौ युवं भुज्युं एतन्नामकं अवविद्धं विक्षिप्तं सखिभिः समुद्रे तन्मध्ये निमग्नं अर्णस उदकादुदूहथुः । किं कुर्वंताविति तदुच्यते । अस्रिधानैः अक्षीयमाणैः अश्रमैः अव्यथिभिश्च पतत्रिभिः पतनवद्भिः गमनवद्भिः रथे नियुक्तैरश्वैः दंसनाभिः शारीरैः कर्मभिश्च पारयंता पारयंतौ समुद्रमर्णस उदूहथुरिति । नासत्या भुज्युमूहथुः पतंगैरित्युक्तम् ॥

८. नू मे हवमित्यष्टमी सिद्धा ( ६८. १०. ) ॥

इति पंचमस्य पंचमे षोडशो वर्गः ॥

---

## 70.

आ विश्ववारेति सप्तर्चं पंचदशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाश्विनम् । अनुक्रम्यते च । आ विश्ववारा सप्तेति । प्रातरनुवाके आश्विनशस्त्रे च विनियोग उक्तः । आद्यस्तृचस्तृतीये छंदोमे प्रउगशस्त्रे विनियुक्तः । आ विश्ववाराश्विना गतं नोऽयं सोम इंद्र इति सूत्रितत्वात् ॥

१. हे विश्ववारा सर्वैर्वरणीयावश्विनाश्विनौ नोऽस्माकं यज्ञमागमागतमागच्छतं वां युवयोस्तत्स्थानं पृथिव्यां वेद्यां प्रावाचि प्रोच्यते । तदर्थं शुनपृष्ठः सुख-

करपृष्ठभागः अत्यंतविपुलत्वादारूढानां सुखकरपृष्ठभाग इत्यर्थः । वाजी वेगवानश्वो न अश्वोऽस्थात् तिष्ठतु युवयोः समीपे । यत् यमित्यर्थः । यमश्वं आसेदथुः आसीदथः सोऽश्वः । यद्वा यत्स्थानमासीदथ तत्स्थानमश्व आश्रयत्वितो गमनाय । स्थितौ दृष्टांतः । ध्रुवसे ध्रुवाय निवासाय योनिं न योनिं स्थानमिव ॥

२. सा सुमतिः अस्माभिः क्रियमाणा शोभना स्तुतिश्चनिष्ठा कमनीयतमा अतिशयेनान्नवती वां युवां सिषक्ति सेवते । किंच घर्मः प्रवर्गश्च मनुषो मनुष्यस्य यजमानस्य दुरोणे यागगृहे अतापि तप्तोऽभूत् । यद्धर्म इत्यतपत्तद्धर्मस्य घर्मत्वमिति श्रुतिः । यज्ञस्य शिरःस्थानीयत्वादस्य । यो घर्मो वां युवां प्राप्नुवन्निति शेषः । समुद्रान् सरितश्च पिपर्ति पूरयति वृष्टिद्वारा । एतग्वा चिन्न चिदिति पूरणः अश्वाविव यथा सुयुजा सुष्ठु युक्तौ रथे भवतस्तथेत्यर्थः । नेत्युपमार्थे । तद्वद्युवां यज्ञे युजानो योजयन् यज्ञः स एवं करोति ॥

(P.112.) ३. हे अश्विना युवां दिवो द्युलोकादागत्य यानि स्थानानि दधाथे कुरुथः । कुत्रेत्युच्यते । यह्वीषु महतीषु ओषधीषु विक्षु यजमानेषु च । तौ युवां पर्वतस्य मेघस्यांतरिक्षस्य वा मूर्धनि स्थाने सदंता निषीदंतौ इषमन्नं दाशुषे हविर्दात्रे जनाय यजमानाय वहंता प्रापयंतौ भवतमिति शेषः ॥

४. हे देवा देवौ युवां ओषधीषु ओषधिविकारान् चरुपुरोडाशादिकान् अप्सु सोमरसान् चनिष्टं अत्यंतकमनीयतमं कामयेथामित्यर्थः । यद्यस्मात् योग्या युवयोरुचिता ओषधीरपश्च ऋषीणां संबंधिनीः अश्नवैथे व्याप्नुथः तस्मादस्मदीया अपि कामयेथामित्यर्थः । यद्वा ऋषीणामस्माकमिति पूजार्थं बहुवचनम् । यद्यस्मादोषधीष्वप्सु च चनिष्टं योग्याः स्तुतीश्च अश्नवैथे तस्मादस्मे अस्मासु पुरूणि बहूनि रत्ना रमणीयानि धनानि नि दधतौ पूर्व्याणि युगानि मिथुनानि जायापतिरूपाणि अनु चख्यथुः ख्यातवंतौ अनुकृष्टवंतावनुग्रहार्थम् ॥

५. हे अश्विना अश्विनौ चिदिति पूरणः युवां शुश्रुवांसा श्रुतवंतौ संतौ पुरूणि बहूनि ब्रह्माणि परिवृढानि कर्माणि स्तुतिलक्षणानि ऋषीणामस्माकं संबंधीनि अभि चक्षाथे अभिपश्यथो युवाम् । अतो जनाय यजमानस्य मम वरं यज्ञं प्रति प्र यातम् । वां युवयोश्चनिष्ठोक्तलक्षणा सुमतिरनुग्रहमतिरस्मे अस्मासु भस्तु भवतु ॥

६. हे नासत्या अश्विनौ वां युवयोर्यो यज्ञो यजमानः समर्यः ऋत्विग्रूपैर्मर्त्यैः सहितः सन् हविष्मान् हविषा युक्तः कृतब्रह्मा कृतस्तोत्ररूपकर्मा भवाति भवति तं वरं वरणीयं वसिष्ठं आ उप प्र यातं प्रकर्षेणोपागच्छतम् । इमा इमानि ब्रह्माणि मंत्रजातानि युवभ्यां युवाभ्यामर्थाय आगमनाय ऋच्यंते स्तूयंते क्रियंत इत्यर्थः ॥

७. अथ सप्तम्या स्तुतिमुपसंहरति । हे अश्विना अश्विनौ इयं मनीषा स्तुतिर्युवयोः कृतेति शेषः । तदेवादरार्थं पुनरुच्यते । इयं गीः स्तुतिः कृता । हे वृषणा कामानां वर्षकौ इमानस्मत्कृतां सुवृक्तिं शोभनां स्तुतिं जुषेथां सेवेथाम् । इमा इमानि ब्रह्माणि कर्माणि स्तुतिरूपाणि युवयूनि युवां कामयमानानि सांति अग्मन् गच्छंतु युवाम् । यूयं पातेति सिद्धम् ॥

इति पंचमस्य पंचमे सप्तदशो वर्गः ॥

इति सप्तमे मंडले चतुर्थोऽनुवाकः ॥

## 71.

पंचमेऽनुवाके एकविंशतिः सूक्तानि । तत्र अप स्वसुरिति षड्टचं प्रथमं सूक्तं त्रैष्टुभमाश्विनम । अनुक्रम्यते च । अप स्वसुः षडिति । गतो विनियोगः ॥

१. स्वसुः स्वसृस्थानीयाया उषसः सकाशात् नक् नक्तं रात्रिरप जिहीते अपगच्छति । तस्याः अवकाशं दत्वा स्वयमपगतेत्यर्थः । स्वसा स्वस्रे ज्यायस्यै योनिमारैगित्युक्तम् । कृष्णीः कृष्णवर्णा रात्रिः अरुषाया आरोचमानायाह्ने सूर्याय वा पंथां पंथानं मार्गं रिणक्ति रेचयति । यस्मादेवं तस्माद्युवयोर्गमनसमयत्वात् हे अश्वामघा अश्वधनौ हे गोमघा गोधनौ उभयोः प्रदातारावित्यर्थः ईदृशौ वां युवां हवेम स्तुमः आह्वयामः । दिवा नक्तं सर्वदा शरुं हिंसकमस्मदस्मत्तो युयोतं पृथक्कुरुतम् ॥

२. हे अश्विनौ युवां उपायातं उपागच्छतमस्मदाह्वानं प्रति । किमर्थम् । दाशुषे हविषां दात्रे यजमानाय तदर्थं रथेन वामं वननीयं धनं वहंता वहंतौ । अस्मदस्मत्तो युयुतं पृथक्कुरुतम् । किम् । अनिरां इरा अन्नं तदन्नदारिद्र्यमित्यर्थः । अमीवां रोगं च । हे माध्वी मधुमंतौ युवां नोऽस्मान् दिवा नक्तं सर्वदा त्रासीथां रक्षतम् ॥

३. अवमस्यां आसन्नायां व्युष्टौ व्युच्छन्ने उपसि वां युवयो रथं सुम्नायवः सुखेन योजयंतोऽश्वाः वृषणो वर्षकाः युवां आ वर्तयंतु । स्यूमगभस्तिं सुखरश्मिं स्यूतरश्मिं वसुमंतं प्रदेयधनयुक्तं रथं हे अश्विनाश्विनौ ऋतयुग्भिः उदकयुक्तैरश्वैः उदकप्रदैरश्वैरावहेथाम् ॥

४. हे नृपती नृणां यजमानानां पालकौ अश्विनौ वां युवयोः रथः वोळ्हा युवयोर्वाहकोऽस्ति सर्वदा संनिहितो वर्तते । कीदृशोऽसौ । त्रिवंधुरः सारथ्यधिष्ठानस्थानत्रयोपेतो वसुमान् धनवान् उस्रयामा उस्रं दिवसं प्रति गंता एना एतेन रथेन हे नासत्या अश्विनौ नोऽस्मानुपायातम् । यत् यश्च रथो वां विश्वप्स्न्यो व्याप्तरूपोऽभि जिगाति अभिगच्छति । अथ आह यद्यस्माद्विश्वप्स्न्यो वासिष्ठो वां जिगाति स्तौति अत उपायातम् ॥

५. हे अश्विना युवं युवां च्यवानं जरसो जीर्णाद्रूपात् अमुमुक्तं अमुंचतम् । युवं च्यवानमश्विना जरंतं पुनर्युवानमिति ह्यन्यत्र । तथा पेदवे एतन्नामकाय राज्ञे आशुं शीघ्रगामिनमश्वं निरूहथुः न्यवहतं युद्धे । युवं श्वेतं पेदव इति निगमः । तथात्रिं महर्षिं अंहसः ऋबीसादग्नेः सकाशात्तमसश्च गुहांतःस्थिताच्च सकाशान्निष्पर्तं निपारयतम् । युवमृबीसमुत तप्तमत्रय ओमन्वंतं चक्रथुरिति निगमः । तथा जाहुषं शिथिरे शिथिले भ्रष्टे स्वराष्ट्रेऽतर्मध्ये पुनर्नि धातं न्यधातम् । परिविष्टं जाहुषं विश्वतः सीमिति ह्युक्तम् ॥

६. इयं मनीषेति षष्ठी गता ( ७०. ७. )

इति पंचमस्य पंचमेऽष्टादशो वर्गः ॥

---

## 72.

(P. 114.) आ गोमतेति पंचर्चं द्वितीयं सूक्तं वासिष्ठस्यार्षं त्रैष्टुभमाश्विनम् । अनुक्रम्यते च । आ गोमता पंचेति । विनियोगः प्रातरनुवाकाश्विनशस्त्रयोरुक्तः । आश्विने पशावाद्याश्चतस्रो याज्यानुवाक्याः । सूत्रितं च । आ गोमता नासत्या रथेनेति चतस्र इति ॥

१. हे नासत्या अश्विनौ गोमता गोयुक्तेन अश्वावता अश्वयुक्तेन अश्वैर्वृषभैश्चोढेनेत्यर्थः यद्वा गोमता गोप्रदेन पुरुश्चंद्रेण बहुधनेन धनप्रदेनेत्यर्थः तादृशेन रथेनायातं आगच्छतम् । वां विश्वाः बह्व्यो नियुतः स्तुतयः सचंते सेवंतेऽस्मत्प्रेरिताः हे स्पार्हया स्पृहणीयया श्रिया शोभया तन्वा शरीरेण च शुभाना दीप्यमानौ युवाम् ॥

२. हे नासत्या अश्विनौ युवां देवेभिरितरैर्देवैः सह सजोषसा समानप्रीतौ परस्परं संतौ नोऽस्माकमर्वाक् अभिमुखं रथेनायातं आगच्छतम् । आगमने बं ¯ ¯ तिशयमाह । युवोर्युवयोः नोऽस्माकं च सख्या सख्यानि पित्र्याणि पितृतः प्राप्तानि । नेदानीं स्तुत्याद्युपाधिना प्राप्तानि भवंतीत्यर्थः । तदेवाह । उतापि च युवयोर्मम च बंधुः बंधकः पितामहः समानः एक एव । तस्य वित्तं तस्येति कर्मणि षष्ठी तं बंधुं तद्बंधुत्वं वा वित्तं जानीतम् । विवस्वान्वरुणश्चोभावपि कश्यपाददितेर्जातौ विवस्वानश्विनोर्जनको वरुणो वसिष्ठस्येतीत्येवं समानबंधुत्वम् । तथा च बृहद्देवतायामुक्तम् ।

अभवन्मिथुनं त्वष्टुः सरण्युस्त्रिशिराः सह ।
स वै सरण्यूं प्रायच्छत्स्वयमेव विवस्वते ॥
ततः सरण्य्वां जाते ते यमयम्यौ विवस्वतः ।
तावप्युभौ यमावेव ह्यास्तां यम्या च वै यमः ॥
सृष्ट्वा भर्तुः परोक्षं तु सरण्यूः सदृशीं स्त्रियम् ।
निक्षिप्य मिथुनं तस्यामश्वा भूत्वा प्रचक्रमे ॥
अविज्ञानाद्विवस्वांस्तु तस्यामजनयन्मनुम् ।
राजर्षिरासीत्स मनुर्विवस्वानिव तेजसा ॥
स विज्ञाय अपक्रांतां सरण्यूमात्मरूपिणीम् ।
त्वाष्ट्रीं प्रति जगामाशु वाजी भूत्वा सलक्षणः ॥
सरण्युस्तु विवस्वंतं विज्ञाय स्वसरूपिणम् ।
मैथुनायोपचक्राम तां च तत्रारुरोह सः ॥
ततस्तयोस्तु वेगेन शुक्रं तदपतद्भुवि ।
उपाजिघ्रच्च सा त्वश्वा तच्छुक्रं गर्भकाम्यया ॥
आघ्राणमात्राच्छुक्रं तत्कुमारौ संबभूवतुः ।
नासत्यश्चैव दस्रश्च यौ स्तुतावश्विनावपि ॥

३. स्तोमासः स्तोमाः स्तवाः अश्विना अश्विनौ उदु अबुध्रन् उत्कृष्टं बोधयंति । उ इति पूरणः । जामि बंधुनामैतत् बंधुस्थानीयानि ब्रह्माणि कर्मपरिवृढानि कर्माणि देवीः द्योतमानाः उषसः चकारादश्विनौ च अबुध्रन् । विप्रो मेधावी वसिष्ठः इमे रोदसी

द्यावापृथिव्यौ धिष्ण्ये धिषणार्हे स्तुत्ये आविवासन् परिचरन् नासत्या अश्विनौ अच्छ अभिमुखं विवक्ति स्तौति ॥

४. हे अश्विनौ उषासः उषसः व्युच्छन्ति चेत् तमांसि विवासयन्ति । चेदिति पूरणार्थो वा । स च वक्ष्यमाणसूर्योदयापेक्षकः । चेद्योगादनिघातः । अतो युवयोः स्तुतिसमयत्वाद्ब्रह्माणि स्तोत्राणि कारवः स्तोतारः प्र भरन्ते प्रकर्षेण संपादयन्ति । ऊर्ध्वमश्नेन आश्रयति भानुं तेजः सविता देवः । अग्नयोऽपि समिधा समिंधनेन बृहत् अतिमहत् जरंते स्तूयंते ॥

(P. 115.) ५. आ पश्चातादिति पंचमी आश्विने पशौ वपाया अनुवाक्या । सूत्रितं च । आ पश्चातान्नासत्या पुरस्ताद्गोमता नासत्या रथेनेति ॥

हे नासत्या अश्विनौ पश्चातात् पश्चाद्देशात् आयातम् । तथा पुरस्तात् पूर्वस्माद्देशात् तथा अधरात् अधस्तनाद्देशाद्दक्षिणतः उदक्तात् उत्तरदेशात् । सर्वत्रायातमिति संबंधः । किं बहुना विश्वतः सर्वस्माद्देशात्पांचजन्येन पंचजनहितेन राया धनेन सह आयातम् । निषादपंचमाश्चत्वारो वर्णाः पंचजनाः ॥

इति पंचमस्य पंचम एकोनविंशो वर्गः ॥

---

## 73.

अतारिष्मेति पंचर्चं तृतीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाश्विनम् । अतारिष्मेत्यनुक्रमणिका । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

१. अस्य तमसोऽज्ञानस्य तत्कार्यस्य जननमरणवतः संसारदुःखस्य अथवा प्रकृतत्वात् प्रयोगविषयाज्ञानस्य पारं अतारिष्म तीर्णाः स्म । किं कुर्वंतः । देवयंतो देवकामाः स्तोमं स्तुतिं प्रति दधानाः देवेषु कुर्वाणाः । पुरुदंसा बहुकर्माणौ पुरुतमा प्रभूततमौ पुराजा पूर्वजातौ अत एवामर्त्या अमरणधर्माणौ अश्विनावश्विनौ गीःगरिता स्तोता वसिष्ठो हवते स्तौति आह्वयति वा ॥

२. प्रियो युवयोः प्रियभूतो मनुषो मानुषः मनुषः सकाशाज्जातो वा होता देवानामाह्वाता स्तोतायं निषादि न्यसादि निषण्णो भवति । युवयोः कर्माणि वदंत इत्यर्थः । हे नासत्याश्विनौ यो यजते यागं करोति वंदते स्तौति च तस्य संबंधिनं मध्वो मधुरं सोमरसं हे अश्विनावश्विनौ उपाके अंतिक एव समीपे स्थित्वैव अश्नीतं पिबतमित्यर्थः । विदथेषु यज्ञेषु वां युवां प्रयस्वान् अन्नवान् सन् आ वोचे आह्वये ॥

३. उराणाः उरु स्तोत्रं कुर्वाणाः स्तोतारो वयं पथां पततां आगच्छतां देवानामर्थाय यज्ञं यागं तत्साधनं हविर्वा अहेम वर्धयेमहे । वृषणा वर्षकौ कामानां इमां सुवृक्तिं शोभनस्तुतिं जुषेथां सेवेथाम् । वां युवां श्रुष्टीवेव श्रुष्टीति क्षिप्रनाम क्षिप्रगंता दूत इव प्रेषितोऽहं अबोधि बोधयामि शीघ्रं गंतव्यमिति । किं कुर्वन् । स्तोमैः स्तोत्रैः प्रति जरमाणः प्रतिस्तुवन् । कः । वसिष्ठोहं अबोधीति ॥

४. त्या त्यौ तौ वह्नी हविषां वोढारौ नोऽस्माकं विशं प्रजां ऋत्विजं उप गमतः उपगच्छताम्। कीदृशौ तौ। रक्षोहणा रक्षसां हंतारौ संभृता सम्यग्भृतौ पुष्टांगौ वीळुपाणी दृढपार्ष्णी। यद्वायमर्धर्चोऽश्वपरतया व्याख्येयः। तथा सति तौ रथस्य वोढारौ दृढपादौ अश्विनोरश्वौ उपगच्छतामिति तस्यार्थः। अंधांस्यन्नानि मत्सराणि मदकराणि सोमान् समग्मत गच्छतं च युवाम्। नो ऽस्मान् मा मर्धिष्टं मा हिंस्तं किं तु शिवेन मंगलेन धनेन सार्धमागतमागच्छतम्॥

(P. 116.) ५. आ पश्चातादिति पंचम्या विनियोगो व्याख्या च गता (७२.५.)॥

इति पंचमस्य पंचमे विंशो वर्गः॥

---

## 74.

इमा उ वामिति षडृचं चतुर्थं सूक्तमाश्विनं वसिष्ठस्यार्षम्। आद्यातृतीयापंचम्यो बृहत्यः शिष्टाः सतोबृहत्यः। तथा चानुक्रांतम्। इमा उ वां षट् प्रागाथमिति। प्रातरनुवाके आश्विने क्रतौ बार्हते छंदस्याश्विनशस्त्रे च सूक्तम्। सूत्रितं च। इमा उ वामयं वामिति। दशरात्रे पंचमेऽहनि प्रउगे शस्त्रे इमा उ वामित्ययमाश्विनस्तृचः। सूत्रितं च। इमा उ वां दिविष्टय पिबा सुतस्य रसिन इति॥

१. इमा दिविष्टयो दिवमिच्छंत्यः प्रजा ऋत्विजोऽपि उ इति चार्थे हे अश्विना उस्रा वासकौ वां हवंते आह्वयंति। अयं वसिष्ठोऽपि हे शचीवसू कर्मधनौ वां युवां अवसेऽस्मद्रक्षणाय युवयोस्तर्पणाय वा अह्वे आह्वयामि। किमर्थमेवं प्रजा अप्यहमपीत्यादरोक्तिरिति तत्राह। हि यस्मात्कारणात् युवां विशं विशं प्रजां प्रजां प्रति गच्छथः॥

२. हे अश्विनौ युवं युवां चित्रं चायनीयं भोजनं धनं ददथुः धारयेथे। तद्धनं सूनृतावते स्तुतिमते स्तोत्रे चोदेथां प्रेरयतम्। तदर्थं समनसा समानमनस्कौ संतौ रथं युवयोः संबंधिनं अर्वाक् अस्मदभिमुखं नि यच्छतम्। तथा कृत्वा सोम्यं सोमसंबंधिनं मधु मधुररसं पिबतम्॥

३. हे अश्विना अश्विनौ युवां आयातमागच्छतम्। आगत्य चोप समीपे भूषतं भवतम्। मध्वः मधुरं सोमरसं पिबतम्। पीत्वा च हे वृषणा वर्षकौ हे जेन्यावसू जेतव्यधनौ जितधनावित्यर्थः युवां पयो वृष्ट्युदकं अंतरिक्षाद्दुग्धम्। नोऽस्मान् मा मर्धिष्टं मा हिंस्तम्। ईदृशप्रार्थनाकरणमेव हिंसा। आगतमागच्छतं शीघ्रम्॥

४. येऽश्वासोऽश्वाः वां युवयोः स्वभूताः दाशुषो हविर्दातुर्गृहं युवां बिभ्रतो धारयंतो दीयंति गमयंतीत्यर्थः। मक्षूयुभिः शीघ्रगंतृभिर्हयेभिर्हयैरश्वैः हे नरा नेतारौ अश्विना अश्विनौ देवा देवौ अस्मयू अस्मान्कामयमानौ आयातं अस्मद्यज्ञमागच्छतम्॥

(P. 117.) ५. अधा ह अपि च अश्विना अश्विनौ यंतः स्तुतिभिर्गच्छंतो यजमानाः सूरयो मेधाविनः स्तोतारः पृक्षोऽन्नं प्रभूतं सचंत सेवंते संयंति वा। ता तौ युवां

मनवक्र्यांऽनवद्यंऽस्मभ्यं ध्रुवं अविचलितं यशोऽन्नं यश एव वा छर्दिर्गृहं यंसतः प्रयच्छतं हे नासत्याश्विनौ ॥

६. हे यजमानाः अप्नस्वानः परकीयधनस्यानाद्यातारः जनानां मनुष्याणां मध्ये नृपातारः ऋत्विग्भूताणां नृणां रक्षितारः संतो यशु युवां प्राप्नुवंति हविर्भिः। प्राप्तौ दृष्टांतः। रथा इव व्रीह्यादिपूर्णा रथा यथा प्राप्नुवंति स्वामिगृहम्। उतेत्ययमुत्तरवाक्यापेक्षः। अपि च नरो यजमानाः स्वेन शवसा स्वीयेन बलेन भूभुवुः वर्धंते। उतापि च सुक्षितिं सुनिवासं क्षियंति गच्छंति प्राप्नुवंति ॥

इति पंचमस्य पंचम एकविंशो वर्गः ॥

---

## 75.

व्युषा आव इत्यष्टर्चं पंचमं सूक्तं वसिष्ठस्यार्षम्। अत्रानुक्रमणिका। व्युषा अष्टावुषस्यं तु वा इति। तु वा इत्युक्तत्वात्तुह्यादिपरिभाषयेदमादीनि सप्त सूक्तान्युषोदेवत्यानि। प्रातरनुवाके उषस्ये क्रतौ त्रैष्टुभे छंदसि आश्विनशस्त्रे चेदमादीनि षट् सूक्तानि। तथा च सूत्र्यते। व्युषा आवो दिविजा इति षडिति त्रैष्टुभमिति। ऋग्विधाने आख्यातो विनियोगोऽत्र लिख्यते।

राज्या अपरकाले य उत्थाय प्रयतः शुचिः।
व्युषा इत्युपतिष्ठेत षड्भिः सूक्तैः कृतांजलिः ॥
प्राप्नुयात्स हिरण्यादि नानारूपं धनं बहु।
गा अश्वान्पुरुषान्धन्यान् स्त्रियो वासांस्यजाविकम् ॥

१. इयमुषा दिविजाः दिव्यंतरिक्षे प्रादुर्भूता सती व्यावः व्यौच्छत् विभानं कृतवतीत्यर्थः। वसिर्निवासवाची अत्र विपूर्वो व्युच्छने भवेत्। छंदस्यपि दृश्यत इत्याट्। दृशिग्रहणस्य विध्यंतरोपसंग्रहणार्थत्वादनजादेरप्याडागमः। हल्ङ्याब्भ्य इति लोपः। सैवोषा ऋतेन तेजसा महिमानं स्वमहत्त्वमाविष्कृण्वाना आगात् आगतवती। आगत्य च द्रुहोऽस्मद्द्रोग्ध्रृन् अजुष्टं सर्वेषामप्रियं तमश्च अपावः अपवृणोति। किंच अंगिरस्तमा अंगेर्गत्यर्थादंगिराः गंतृतमाः पथ्याः पदवीः अजीगः उद्गिरति। प्राणिनां व्यवहाराय प्रकाशयतीत्यर्थः ॥

२. अद्य नोऽस्माकं महे महते सुविताय सुखप्राप्तये सुखगमनाय वा बोधि भव। किंच हे उषः महे महते सौभगाय सौभाग्याय प्र यंधि प्रयच्छ अस्मान्। किंच चित्रं चायनीयं यशसं यशोयुक्तं रयिं धनं धेहि धारय अस्मे अस्मासु। हे मानुषि मनुष्यहिते देवि मर्त्येष्वस्मासु श्रवस्युं अन्नवंतं पुत्रं धेहीत्यनुषंगः ॥

३. दर्शतायाः दर्शनीयायाः प्रकाशयुक्ताया उषसः एते पुरो दृश्यमानाः त्ये ते प्रसिद्धाश्चित्राः पूज्या आश्चर्यभूता वा अमृतासोऽमरणाः अनश्वराः भानवो रश्मयः आगुः आगच्छंति। किं कुर्वंतः। दैव्यानि देवानां संबंधीनि व्रतानि कर्माणि जनयंतः

उत्पादयंतः। तदनुकूलप्रकाशप्रदानात्तदुत्पादकत्वमेषाम्। अंतरिक्षा अंतरिक्षाणि आपृणंतः आपूरयंतः। एकस्यैवांतरिक्षस्य वायुमेघपक्षिणामालंबनोपाधिना त्रिविधत्वं अतो बहुवचनमुपपन्नम्। एवं कुर्वंतो भानवो व्यस्थुः विविधं तिष्ठंति प्रसरंति ॥

( P. 118. ) ४. एषा स्या सोषाः परावात् दूरदेशात् दूरे स्थितापि युजाना उद्योगं कुर्वाणा प्रकाशाय पंच क्षितीः निषादपंचमाश्चत्वारो वर्णाः तान् सद्यः परि जिगाति। किं कुर्वती। जनानां प्राणिनां वयुना प्रज्ञानानि अभिपश्यंती साक्षित्वेनावलोकयंती। कीदृशी सा। दिवो दुहिता दुहितृस्थानीया भुवनस्य भूतजातस्य पत्नी पालयित्री। परिजिगातीत्यन्वयः ॥

५. वाजिनीवती बह्वन्ना यद्यप्युषोनामैतत् तथापि चित्रामघेत्यस्याप्युषोनामकस्य पृथग्विद्यमानत्वादत्रैको योगरूढोऽवगंतव्यः सूर्यस्य योषा योषित् चित्रामघा विचित्रधना विचित्ररश्म्याख्यधना वा रायो धनस्य अविशिष्टस्य तस्य वसूनां देवमनुष्यादिसर्वाश्रयाणां धनानां चेशे ईष्टे। अथवा वसवो वासका रश्मयः तेषामपीष्टे। ऋषिष्टुता ऋषिभिः स्तुता जरयंती प्राणिजातानि उषाः खलु पुनः पुनरावर्तमाना प्राणिनामायुः क्षपयति मघोनी धनवती उषाः वह्निभिः कर्मवोढृभिः यजमानैर्गृणाना स्तूयमाना उच्छति विभानं करोति ॥

६. द्युतानां द्योतमानामुषसं वहंतो धारयंतः अरुषासः आरोचमानाश्चित्राश्चायनीया अश्वाः प्रत्यदृश्रन् प्रतिदृश्यंते। सा चोषाः शुभ्रा दीप्यमाना विश्वपिशा बहुरूपेण रथेन याति सर्वत्र गच्छति। विधते परिचरते जनाय रत्नं रमणीयं धनं दधाति ददाति च ॥

७. सत्या अन्यैरबाध्या महती पूजनीया प्रवृद्धा वा गुणैः देवी द्योतमाना यजता यजनीयोषाः सत्येभिः सत्यैर्महद्भिर्देवैर्यजत्रैरुक्तलक्षणैः किरणैर्निपातभाग्भिरन्यैर्देवैर्वा सहिता सती दृळ्हान्यत्यंतस्थिराणि तमांसि रुजत् भिनत्ति। उस्रियाणां गोनामैतत् उत्स्राविण आसां भोगा इति तद्व्युत्पत्तिः तासां संचाराय ददत् ददाति। सामर्थ्यात्प्रकाशमित्यर्थः। अथवा उस्रिया गाः ददत् ददाति स्तोतृभ्यः। किंच गावः उपलक्षणमेतत् सर्वेऽपि तमोऽवरुद्धाः प्राणिनः उषसं वावशंत उशंति कामयंते। विशेषेण गवां प्रभाते संचारार्थमुषसोऽपेक्षितत्वात्तासां प्राधान्येनोक्तिः ॥

८. हे उषः नु नोऽस्मभ्यं गोमद्बहुभिर्गोभिर्युक्तं वीरवद्वीरैः पुत्रैरुपेतं रत्नं रमणीयं धनं पुरुभोजो बह्वन्नं चास्मे अस्मासु धेहि देहि। पादभेदादस्मे इति पुनरभिधानम्। नोऽस्माकं बर्हिर्यज्ञं पुरुषता पुरुषतायां पुरुषसमूहेष्वस्मत्सदृशेष्वित्यर्थः। निदे निंदायै मा कः मा कार्षीः। यथा ते निंदंति तथा मा कुर्वित्यर्थः ॥

इति पंचमस्य पंचमे द्वाविंशो वर्गः ॥

---

## 76.

उदु ज्योतिरिति सप्तर्चं षष्ठं सूक्तं त्रैष्टुभमुषस्यम् । तथा चानुक्रांतम् । उदु सप्तेति । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

(P. 119.) १. अमृतं अमृतत्वसाधकं अविनाशि वा विश्वजन्यं विश्वेषां जनानां हितकरं ज्योतिः विश्वानरः सर्वेषां नेता सविता देवः उदश्रेत् ऊर्ध्वं श्रयति देवानां व्यवहर्तॄणां स्तोतॄणां वा यजमानानां क्रत्वा कर्मणा निमित्तेन यागानुष्ठानमित्यर्थः तदर्थम् । यद्वा देवानां चक्षुश्चक्षुःस्थानीयमौषसं तेजः क्रत्वा कर्मणा निमित्तेन अजनिष्ट प्रादुरभूत् । उत्पन्ना चोषा विश्वं सर्वं भुवनं भूतजातमाविरकः प्रादुरकः अकरोत् समस्तं जगदाविष्कृतवती ॥

२. मे मया देवयानाः देवप्रापकाः पंथाः पंथानः प्राद्दृश्रन् प्रदृश्यंते । कीदृशाः पंथानः । अमर्धंतो अहिंसंतः वसुभिस्तेजोभिरिष्कृतासः संस्कृताः । पुरस्तात् पूर्वस्यां दिशि उषसः केतुः प्रज्ञापकं तेजः अभूत् अचेति ज्ञायते । सोषाश्च प्रतीची प्रत्यगंचना अस्मदभिमुखी हर्म्येभ्योऽधि उच्छ्रितेभ्यः प्रदेशेभ्यः हर्म्यशब्द उन्नतप्रदेशोपलक्षकः आगात् आगच्छति ॥

३. हे उषः तानीत् तान्येव तव तेजांसि बहुलान्यहानि आसन् उषःप्रकाशयुक्तस्यैव कालस्याहःशब्दव्यवहारात् । तानीत्युक्तं कानीत्याह । या यानि सूर्यस्य उदिता उदितौ उदये सति प्राचीनं तस्य प्राग्देशं प्रत्युदयंति । यद्वा सूर्यस्य प्राचीने देशे या यान्युदिता उदितानि तानीत्यर्थः । हे उषः यतो येभ्य तेजोभिः परि ददृक्षे दृश्यसे त्वं जार इव पत्याविव आचरंती समीपे संचरंती साध्वी नारीव जारे रात्रेर्जरयितरि सूर्ये संचरंती दृश्यसे । यथा लोके दुष्टं भ्रमणशीलमपि पतिमत्यक्त्वैव साध्वी संचरति तद्वत् तमविमुंचंती त्वमित्यर्थः । न पुनर्यतीव यती पतिं परित्यज्येतस्ततः संचरंती व्यभिचारिणीव सूर्यमपरित्यजंती त्वम् । पुनरित्ययं वैलक्षण्यद्योतनार्थः । एवं येस्तेजोभिर्युक्ता परिदृश्यसे तान्येवाहान्यासन्निति संबंधः ॥

४. त इत् ते अंगिरस एव ऋषीणां मध्ये देवानां सधमादः सह मादयंत आसन् अभवन् । त इत्युक्तं क इत्याह । ये ऋतावानः सत्यवंतः कवयोऽनूचानाः । ये वा अनूचानास्ते कवय इति श्रुतेः । पूर्व्यासः पूर्वकालीनाः पितरः पालयितारः सर्वस्यांगिरसो गूढं तमसावृतं ज्योतिः सौर्यं तेजोऽन्वविंदन् लब्धवंतो मंत्रसामर्थ्यात् सत्यमंत्राः सत्यस्तुतयः संतः उषासं उषसमजनयन् प्रादुरकुर्वन् । तुरीयेण ब्रह्मणाविंदद्भिः अत्रयस्तमन्वविंदन्निति निगमो । अत्रांगिरसां स्तुत्योषस एव स्तुतिर्ज्ञातव्या ॥

५. समाने सर्वेषां साधारणे ऊर्वे गोसमूहे पणिभिरपहृते पुनर्लब्धव्ये सति अधीत्यनर्थकः संगतासो मिलिताः संतः ते सं जानते एकबुद्धयो भवंति । न मिथः परस्परं यतंते सहैव साधनमनुतिष्ठंतीत्यर्थः । तेऽंगिरसो देवानां व्रतानि कर्माणि यागलक्षणानि न मिनंति न हिंसंति किंतु परिपालयंतीत्यर्थः । किं कुर्वंतः । अमर्धंतोऽहिंसंतो वसुभिर्वासकैरुषसां तेजोभिः याद्मानाः गच्छंतः ॥

(P. 120.) ६. हे सुभगे देव्युषः त्वा त्वां उषर्बुधः उषसि बुध्यंतः तुष्टुवांसः स्तुवंतः वसिष्ठाः स्तोमेभिः स्तोत्रैः ईळते स्तुवंति । गवां नेत्री प्रापयित्री वाजपत्नी अन्नस्य पालयित्री अन्नदात्रीत्यर्थः ईदृशी त्वं नोऽस्मदर्थं उच्छ विभाहि । हे उषः सुजाते सुप्रादुर्भावे प्रथमा इतरदेवेभ्यो मुख्यभूता जरस्व ॥

७. एषोषा राधसः स्तोतुः सूनृतानां स्तुतीनां नेत्री सती उच्छंती तमो विवासयंती वसिष्ठैः वसिष्ठगोत्रोत्पन्नैः रिभ्यते स्तूयते । दीर्घश्रुतं दीर्घं श्रूयमाणं सर्वत्र प्रसिद्धं रयिं धनमस्मे अस्मासु दधाना धारयंती ॥

॥ इति पंचमस्य पंचमे त्रयोविंशो वर्गः ॥

---

## 77.

उपो रुरुचे इति षडृचं सप्तमं सूक्तं वसिष्ठस्यार्षमुषस्यम् । तथा चानुक्रांतम् । उपो रुरुचे षडिति । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

१. इयमुषाः उपो समीप एव सूर्यस्य रुरुचे दीप्यते युवतिर्यौवनोपेता योषा न योषिदिव सा यथा वस्त्राभरणादिना पत्युः समीपे प्रदीप्यते तद्वत् । किं कुर्वती । विश्वं सर्वं जीवं जीवसंघं चराथै संचाराय प्रसुवंती प्रेरयंती । किंच अग्निः मानुषाणां मनुष्याणां अर्थाय समिधेऽभूत् समिधनीयोऽभवत् कृत्यार्थे केन् समिद्धः सन् तमांस्यंधकारान् बाधमाना बाधमानं ज्योतिस्तेजः संघं अकः अकार्षीत् । अथवा उषसं ज्योतिस्तमांसि बाधमाना बाध्यमानानि अकः अकरोत् ॥

२. विश्वं कृत्स्नं जगत्प्रति प्रतीची अभिमुखी सप्रथाः सर्वतः पृथुतरा उदस्थात् उदगच्छत् । उदित्य च रुशत् दीप्तं शुक्रं तेजोमयं वासो वसनीयं तेजःसमूहं बिभ्रती धारयंती अश्वैत् वर्धते । हिरण्यवर्णा हितरमणीयवर्णोपेता सुदृशीकसंदृक् संदर्शयतीति संदृक् तेजः सुष्ठु दर्शनीयं संदृक् तेजो यस्याः सा तादृशी गवां वाचां गवामेव वा माता निर्मात्री । उषःकाले हि पक्षिमनुष्यादीनां वाचो निर्गच्छंति । गवामपि तस्मिन्काले संचारात्तन्निर्मातृत्वम् । अथवा रश्मीनां निर्मात्री अरोचि रोचते अह्नां नेत्री दिवसानां प्रापयित्री ॥

३. देवानां चक्षुश्चक्षुःस्थानीयं तेजो वहंती धारयंती सुभगा शोभनधना सुदृशीकं सुदर्शनं अश्वं सर्वदा गंतारं आदित्यं नयंती प्रापयंती । किम् । श्वेतं श्वेतवर्णोपेतं सूर्यं प्रकाशयुक्तं कुर्वतीत्यर्थः । कीदृशी उषाः । रश्मिभिः स्वकीयैर्व्यक्ता अदर्शि दृश्यते च । चित्रामघा विचित्रधना विश्वमनु सर्वं जगदनुलक्ष्य प्रभूता प्रवृद्धा सर्वजगद्व्यवहारायेत्यर्थः ॥

( P. 121. ) ४. हे उषः अंतिवामा अंति अस्मदंतिके वामं वननीयं धनं यस्याः सा अंतिवामा त्वं अमित्रं अस्मच्छत्रुं दूरं अस्मत्तो विप्रकृष्टदेशे वर्तमानं कृत्वा व्युच्छ विभाहि । यथामित्रो दूरे भवति तथा व्युच्छेत्यर्थः । तथा उर्वीं गव्यूतिं भूमिमभयं

नोऽस्माकं कृधि कुरु। किंच द्वेषोऽस्मद्द्वेष्टॄन् यावय अस्मत्तः पृथक्कुरु। राधो धनं चोदय प्रेरय गृणते स्तुवते मह्यं हे मघोनि धनवति ॥

५. हे उषो देवि अस्मे अस्मभ्यं श्रेष्ठेभिः प्रशस्यैर्भानुभी रश्मिभिः प्रकाशैर्वि भाहि प्रकाशय। किं कुर्वती। नोऽस्माकमायुरायुष्यं प्रतिरंती वर्धयंती। हे विश्ववारे विश्वैः संभजनीये देवि नोऽस्मभ्यमिषं च गोमद्गोभिर्बहुभिरुपेतं अश्वावत् अश्वैरश्वोपेतं राधो धनं च दधती विभाहीति ॥

६. हे दिवो दुहितरुषः सुजाते शोभनजनने यां त्वा त्वां मतिभिः स्तोत्रैर्वसिष्ठा वर्धयंति सा त्वमस्मासु वसिष्ठेषु ऋष्वं प्रदीप्तं बृहंतं महांतं रयिं धनं धाः धेहि ॥

इति पंचमस्य पंचमे चतुर्विंशो वर्गः ॥

---

## 78.

प्रति केतव इति पंचर्चमष्टमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमुषस्यम्। प्रति पंचेत्यनुक्रमणिका। उक्तो विनियोगः ॥

१. अस्याः प्रथमाः प्रथमोत्पन्नाः केतवः प्रज्ञापका रश्मयः प्रत्यदृश्रन् प्रतिदृश्यंते। अस्या अंजयो व्यंजका रश्मयः ऊर्ध्वा ऊर्ध्वमुखा वि श्रयंते विविधं सर्वत्राश्रयंति। हे उषो देवि अर्वाचा अस्मदभिमुखेनागच्छता बृहता महता ज्योतिष्मता रथेन वामं वननीयं धनमस्मभ्यं वक्षि वहसि ॥

२. अग्निः समिद्धः सन् सीं सर्वतः प्रति जरते अभिवर्धते। विप्रासो विप्रा मेधाविन ऋत्विजश्च मतिभिः स्तुतिभिरुषसं गृणंतः स्तुवंतो जरंते। उषाश्च देवी ज्योतिषा विश्वा सर्वाणि तमांसि दुरितास्मद्दुरितानि अपबाधमाना याति ऊर्ध्वं गच्छति ॥

(P. 122.) ३. एता उ इति पूरणः त्याः ताः प्रसिद्धा एता विभातीर्विभात्यो विभानं कुर्वत्यो ज्योतिस्तेजो यच्छंतीः प्रयच्छंत्यः उषसः पुरस्तात्पूर्वस्यां दिशि प्रत्यदृश्रन् प्रतिदृश्यंते। ता उषसः सूर्यं यज्ञं अग्निं च अजीजनन् प्रादुरकुर्वन्। उषस उदयानंतरं तेषां संभवात्तज्जनकत्वमुपचर्यते। किंच अपाचीनं नीचीनमजुष्टमप्रियं सर्वेषां दृष्टिनिरोधकत्वादप्रियत्वं तादृशं तमः अगात् अपगतमभूत् ॥

४. दिवो दुहिता मघोनी धनवती उषाः अचेति सर्वैर्ज्ञायते। विश्वे सर्वेऽपि प्राणिनो विभातीं उच्छंतीं उषसं पश्यंति। तादृशी देवी स्वधयान्नेन युज्यमानं रथं आस्थात् आतिष्ठत् आरोहति। यं रथं सुयुजः शोभनयोजना अश्वासोऽश्वाः आ वहंति अभिमतदेशं प्रापयंति तं रथमास्थादिति ॥

५. हे उषस्त्वा त्वां अद्यास्मिन्काले सुमनसः शोभनस्तुतिका मघवानो हविर्लक्षणान्नवंतोऽस्माकासोऽस्माका अस्मदीयाः पुरुषा ऋत्विजः यद्वा मघवान इत्येतद्वयमित्येतस्य विशेषणं हविष्मंतो वयं प्रति बुधंत प्रत्यबोधयन् स्तुतिभिः। हे उषसो

युयं च विभातीर्व्युच्छंत्यः सत्यस्तिल्विलायध्वं जगत् स्निग्धभूमिकं कुरुत। तिल स्नेहन इत्यस्मात्तिलुः तिलुरिला भूमिः यस्य तत्तिल्विलं तत्कुरुत शिष्टं स्पष्टम्॥

इति पंचमस्य पंचमे पंचविंशो वर्गः॥

---

## 79.

व्युषा आव इति पंचर्चं नवमं सूक्तं वसिष्ठस्यार्षमुषस्यं त्रैष्टुभम्। व्युषा इत्यनुक्रमणिका। प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः॥

१. जनानां सर्वप्राणिनां पथ्या पथि हितोषाः व्यावः व्यौच्छत्। यद्वा जनानां हिताय व्यौच्छदिति योजना। किं कुर्वती। मानुषीर्मनुष्यरूपाः पंच क्षितीः निषादपंचमांश्चतुरो वर्णान्बोधयंती। ईदृश्युषाः सुसंदृग्भिः संदृश्यते संदर्शयतीति वा संदृक् तेजः सुतेजोभिः उक्षभिः गोभिर्भानुभिश्च। अरुणैरुषा आजिमधावदिति हि श्रुतिः। अरुण्यो गाव उषसामिति निरुक्तम्। सूर्यश्च रोदसी द्यावापृथिव्यौ तमोयुक्ते चक्षसा प्रकाशकेन तेजसा व्यावो विवृणोति॥

२. उषसः अक्तून् तेजांसि दिवोऽंतरिक्षस्यांतेषु पर्यंतप्रदेशेषु व्यंजते व्यक्तीकुर्वंतीत्यर्थः। युक्ताः परस्परं संयुताः विशो न प्रजा इव सेना इव यतंते तमोनाशनाय। अथ प्रत्यक्षवादः। हे उषसो तव गावो रश्मयस्तमोंऽधकारं समावर्तयंति नाशयंति। ज्योतिस्तेजो यच्छंति प्रयच्छंति सविता सूर्यो बाहू इव॥

(P. 123.) ३. इंद्रतमा सर्वस्येश्वरतमा मघोनी धनवती उषा अभूत् प्रादुरभूत्। सुविताय कल्याणाय श्रवांस्यन्नानि अजीजनत् उदपादयत् प्रकाशितवतीत्यर्थः। दिवो दुहिता अंगिरस्तमा गंतृतमा। यद्वा अंगिरोगोत्रैर्भारद्वाजैः सह रात्रेरप्युत्पत्ते रात्रिवसानस्योषोरूपत्वादंगिरस्तमेत्युच्यते। भारद्वाजैः रात्रेः सहोत्पत्तिरनुक्रमण्यामुक्ता रात्री कुशिकः सौभरो रात्रिर्वा भारद्वाजी इति। तादृश्युषाः सुकृते यजमानाय वसूनि धनानि वि दधाति करोति॥

४. हे उषो यावद्राधो धनं स्तोतृभ्यः पूर्वं अददो दत्तवत्यसि तावद्राधो धनं गृणाना स्तूयमाना अस्मभ्यमपि रास्व देहि। यां त्वा त्वां वृषभस्य रवेण लुप्तोपमैषा वृषभस्येति कर्मणि षष्ठी वृषभं रवेणेव त्वां प्रकाशेन जज्ञुः जानंति प्राणिनः। अथवा वृषभस्य प्रवृद्धस्य स्तोत्रस्य रवेण शब्देन जज्ञुः ज्ञापयंति दृळ्हस्य दृढस्याद्रेः दुरो द्वाराणि पणिभिर्गाः प्रवेश्य पिहितानि व्यौर्णोर्विवृतान्यकरोः॥

५. देवं देवं सर्वमपि स्तोतारं राधसे धनाय चोदयंती प्रेरयंती अस्मद्र्यक् अस्मदभिमुखं सूनृता वचांसि ईरयंती प्रेरयंती व्युच्छंती व्युच्छनं कुर्वती नोऽस्माकं सनये दानाय धनलाभाय धियो बुद्धीर्धाः धेहि। शिष्टं स्पष्टम्॥

इति पंचमस्य पंचमे षड्विंशो वर्गः॥

## 80.

प्रति स्तोमेभिरिति तृचात्मकं दशमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमुषस्यम् । प्रति तृच-मित्यनुक्रमणिका । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

१. विप्रासो मेधाविनो वसिष्ठा वसिष्ठगोत्राः स्तोमेभिः स्तोत्रैः प्रयुज्यमाना गीर्भिः स्तुतिभिः प्रथमा इतरयजमानेभ्यः पूर्वभूता संत उषसं प्रत्यबुध्रन् प्रतिबोध-यंति । कीदृशीमुषसं च । रजसी द्यावापृथिव्यौ समंते समानपर्यंते एकीभूतप्रांते विवर्तयंती व्यावर्तयंती विश्वा सर्वाणि भुवनानि भूतजातान्याविष्कृण्वंती प्रकाशी-कुर्वंती स्वभासा ॥

२. एषोषाः स्या सा गतदिवसेषु प्रसिद्धा दृश्यमानैषा नव्यं नवतरं आयुरायुष्यं यौवनमित्यर्थः तादृशं दधाना धारयंती गूढ्वी गूढं तमोऽन्धकारं ज्योतिषा स्वतेजसा निवारयंती अबोधि बुध्यते । अग्रे पुरोदेशे सूर्यस्य पुरस्तात् देवानामग्रे वा इतरदेवेभ्यः पूर्वमित्यर्थः युवतिर्नित्यतरुणी अह्रयाणा लज्जामनापन्ना अलज्जा युवतिरिव । सा यथा पत्युरग्रे संचरति तद्वत् सूर्यस्य पुरस्तादेति । एवंभूता सती सूर्यं यज्ञमग्निं च प्राचिकितत् प्रज्ञापयति ॥

(P.124.) ३. अश्वावतीर्बहुभिरस्मभ्यं दत्तैरश्वैस्तद्वत्यः तथा गोमतीर्गोमत्यो गोयुक्ता वीरवतीर्वीरवत्यः पुत्रवत्यः अत एव भद्राः स्तुत्या उषास उषसः नः सर्वदा उच्छंतु । पुनः कीदृश्यः । घृतं उदकं दुहानाः क्षरंत्यो विश्वतः प्रपीताः सर्वतः प्रवृद्धाः । यूयं पातेति गतम् ॥

इति पंचमस्य पंचमे सप्तविंशो वर्गः ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंध-रेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये

पंचमाष्टके पंचमोऽध्यायः समाप्तः ॥

---

## 81.

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरम् ॥

अथ षष्ठो व्याख्यायते । सप्तमे मंडले पंचमेऽनुवाके दश सूक्तानि व्याख्यातानि । प्रत्यु अदर्शीति षडृचमेकादशं सूक्तं वसिष्ठस्यार्षमुषस्यम् । प्रथमाद्या अयुजो बृ-हत्यः द्वितीयाद्या युजः सतोबृहत्यः । तथा चानुक्रांतम् । प्रत्यु षट् प्रागाथमिति । प्रातरनुवाके उषस्ये क्रतौ बार्हते छंदसि आश्विनशस्त्रे च इदं सूक्तम् । सूत्रितं च । प्रत्यु अदर्शि सह वामेनेति बार्हतमिति ॥

१. आयती आगच्छंती व्युच्छंती तमांसि विवासयंती वर्जयंती दिवः द्युलोकस्य सूर्यस्य वा दुहिता पुत्री एवंभूता उषाः प्रत्यदर्शि सर्वैः प्रतिदृश्यते। उ इति पूरकः। सैषा महि महत् तमो नैशमंधकारं अप उ इति निपातद्वयसमुदायः अपेत्यस्यार्थे अपो व्ययति अपवृणोति। किमर्थम्। चक्षसे दर्शनार्थम्। एवं कृत्वा सूनरी जनानां सुष्ठु नेत्री उषा ज्योतिः प्रकाशं कृणोति करोति॥

२. सूर्यः सर्वस्य प्रेरकः आदित्यः उस्रियाः रश्मीन् सचा सह युगपदेव उत्सृजते उद्गमयति। तथा उद्यत् प्रादुर्भवत् नक्षत्रं नभसि दृश्यमानं ग्रहनक्षत्रादिकं आर्चिवत् दीप्तिमत्करोति। सौरेण तेजसा हि नक्तं चंद्रप्रभृतीनि नक्षत्राणि भासंते। सुषुम्णः सूर्यरश्मिश्चंद्रमा गंधर्व इति हि निगमः। एवं च सति हे उषः उषोदेवते तव सूर्यस्य च व्युषि विवासने प्रकाशने सति भक्तेनान्नेन संगमेमहि संगच्छेमहि। इच्छब्दः पूरकः॥

३. हे दिवो दुहितः दिवोऽतंरिक्षाज्जायमाने हे उषः उषोदेवते त्वा त्वां जीराः क्षिप्रकारिणो वयं प्रत्यभुत्स्महि प्रतिबोद्धारो भवेम। हे वनन्वति वननं संभजनं संभक्तव्यं धनं वा तद्वति या त्वं पुरु बहु स्पार्हं स्पृहणीयं धनं वहसि प्रापयसि दाशुषे हवींषि दत्तवते यजमानाय रत्नं रमणीयं धनमिव मयः सुखं च या त्वं वहसि तां त्वां प्रत्यभुत्स्महीत्यन्वयः॥

४. हे महि महति देवि दानादिगुणयुक्ते उषोदेवते उच्छंती तमांसि वर्जयंती मंहना महिम्ना युक्ता यद्वा मंहतिर्दानकर्मा दानयुक्ता या त्वं स्वः सर्वं जगत् प्रख्यै प्रबोधनार्थं दृशे दर्शनार्थं च कृणोषि करोषि तस्यास्तादृश्याः रत्नभाजः रत्नानां रमणीयानां धनानां भाजयित्र्याः सेवयित्र्याः ईमहे याचामहे। किम्। रत्नभाज इति समभिव्याहाराद्रत्नानीति गम्यते। अपि च वयं तव प्रियतमाः स्याम भवेम मातुर्न सूनवः यथा मातुर्जनन्याः सूनवः पुत्राः प्रियतमा भवंति तद्वत्॥

(P.125.) ५. हे उषः तच्चित्रं चायनीयं राधो धनं आ भर आहर अस्मभ्यं प्रयच्छ। यद्धनं दीर्घश्रुत्तमं देशकालयोर्विप्रकर्षेऽप्यातिशयेन श्रोतव्यम्। अपि च हे दिवो दुहितः ते तव त्वया देयं मर्तभोजनं मर्तानां मनुष्याणां भोगयोग्यं यदन्नमस्ति तद्रास्व देह्यस्मभ्यम्। वयं च त्वद्दत्तं धनमन्नं च भुनजामहै अभ्यवहरेम॥

६. हे उषः सूरिभ्यः स्तोतृभ्योऽस्मभ्यं अमृतं मरणरहितं नित्यं वसुत्वनं वासकं वसुत्वयुक्तं वा श्रवः श्रवणीयं यशः रास्वेत्यनुषंगः। तथा गोमतो बहुभिर्गोभिर्युक्तान् वाजान् अन्नानि चास्मभ्यं रास्व। शिष्टः परोक्षकृतः। मघोनो हविष्मतो यजमानस्य चोदयित्री प्रेरयित्री सूनृतावती प्रियसत्यात्मिका वाक्सूनृता तद्वती उषाः स्रिधः शोषकान् शत्रून् अपोच्छत् अपगमयतु॥

इति पंचमस्य षष्ठे प्रथमो वर्गः॥

---

## 82.

इंद्रावरुणेति दशर्चं द्वादशं सूक्तं वसिष्ठस्यार्षं जागतम्। इदमादीनि चत्वारि सूक्तानींद्रावरुणदेवतानि। तथा चानुक्रांतम्। इंद्रावरुणा दशैंद्रावरुणं ह जागतं त्विति। तृतीये सवने उक्थ्ये प्रशास्तुः शस्त्रे एतत्सूक्तम्। सूत्रितं च। इंद्रावरुणा युवमा वां राजानाविति॥

१. हे इंद्रावरुणा इंद्रावरुणौ युवं युवां नोऽस्माकं विशे निवेशयित्रे परिचारकाय जनाय पुत्रपौत्रादिलक्षणाय अध्वराय यज्ञानुष्ठानार्थं महि महत् शर्म गृहं सुखं वा यच्छतं प्रयच्छतम्। अपि च दीर्घप्रयज्युं दीर्घप्रततयज्ञं अस्मदीयं जनं यः शत्रुः अति वनुष्यति अतिजिघांसति पृतनासु संग्रामेषु दूढ्यः दुर्धियः दुष्टाभिसंधीन् तान् शत्रून् वयं जयेम अभिभवेम॥

२. द्वितीयः पादः परोक्षकृतः शिष्टाः प्रत्यक्षकृताः। हे इंद्रावरुणौ वां युवयोर्मध्ये अन्य एको वरुणः सम्राट् सम्यग्राजमान इति उच्यते। ता सम्राजा घृतासुतीत्यादिषु कीर्त्यते। अन्य इंद्रः स्वराट् स्वयमेव अन्यनिरपेक्षयैव राजमान इति उच्यते। स्वराळिंद्रो दम इत्यादिषु कीर्त्यते। तथाविधाविंद्रावरुणा इंद्रावरुणौ महांतौ गुणैरधिकौ महावसू महाधनौ च भवतः। हे वृषणा कामानां वर्षिताराविंद्रावरुणौ वां युवां परमे व्योमनि उत्कृष्टे आकाशे विश्वे देवासः सर्वे देवाः ओजः सं दधुः समयोजयन् शरीरदार्ढ्याय तद्धेतुभूतं तदोज इत्युच्यते। स्मर्यते च। ओजोनामाष्टमी दशेति। तथा बलं वृत्रवधादेः कार्यस्य हेतुभूतं सामर्थ्यं च युवाभ्यां सं दधुः समयोजयन्॥

३. हे इंद्रावरुणौ अपामुदकानां खानि द्वाराणि वृत्रेण पिहितानि ओजसा बलेन अन्वतृंतं अन्वविध्यतम्। आवरकस्य वृत्रस्य वधेन वृष्टिप्रतिबंधं निराकृतवंतावित्यर्थः। तथा सूर्यं सर्वस्य प्रेरकमादित्यं दिव्यंतरिक्षे प्रभुं प्रभूतं संतं ऐरयतं अभ्यगमयतं स्वर्भानुनावृतं सूर्यं तद्वधेन प्रकाशितवंतावित्यर्थः। हे इंद्रावरुणा इंद्रावरुणौ मायिनः प्रज्ञाकरस्य अस्य सोमस्य पानेन मदे हर्षे सति अपितः जलरहिता नदीः अपिन्वतं जलेनापूरयतम्। तथा च निवित्पदमाम्नायते। अस्य मदे जरितरिंद्रोऽजिन्वदजुवोऽपिन्वदपित इति। अपि च धियः कर्माण्यस्माभिरनुष्ठितानि कर्माणि पिन्वतं सिंचतं फलेन पूरयतम्॥

(P. 126.) ४. हे इंद्रावरुणौ वह्नयो हविषां स्तोत्राणां वा वोढारः ऋत्विजः युत्सु युद्धेषु पृतनासु शत्रुसेनासु रक्षणार्थं युवामित् युवामेव हवंते आह्वयंति मितज्ञवः संकुचितजानुकाः अंगिरसोऽपि क्षेमस्य रक्षणस्य प्रसवे उत्पादने निमित्तभूते सति युवामेव हवंते। अतः कारणात् हे इंद्रावरुणौ कारवः स्तोतारो वयमपि उभयस्य दिव्यस्य पार्थिवस्य च वस्वो वसुनो धनस्य ईशाना ईश्वरौ सुहवा सुखेन ह्वातव्यौ युवामेव हवामहे आह्वयामहे॥

५. हे इंद्रावरुणौ यत् यौ युवां भुवनस्य लोकस्य संबंधीनि इमानि परिदृश्यमानानि विश्वा सर्वाणि जातानि जनिमानि भूतजातानि मज्मना आत्मीयेन बलेन चक्रथुः कृतवंतौ तयोर्युवयोर्मध्ये एकं वरुणं क्षेमेण रक्षणहेतुना मित्रो देवो

युवस्यति परिचरति। मित्रावरुणौ हि परस्परं प्राप्तसख्यौ अत एव सहचरौ दृश्येते। अन्य एक इंद्रः मरुद्भिर्मरुद्गणैः उग्र उद्गूर्णबलः सन् शुभं शोभनमलंकारं ईयते प्राप्नोति। यद्वा मरुद्भिर्मध्यस्थानैर्देवगणैः सार्धं उग्र ओजस्वी इंद्रः शुभमुदकं ईयते प्रेरयति॥

इति पंचमस्य षष्ठे द्वितीयो वर्गः॥

६. वरुणस्य उपलक्षणमेतत् इंद्रस्य वरुणस्य च त्विषे दीप्त्यर्थं ओजो बलं नु क्षिप्रं मिमाते स्तोत्रेण निर्मिमाते यजमानपत्न्यौ। स्तोत्रेण हि बलं जायते। किमर्थम्। महे महते शुल्काय धनाय ईदृशस्य धनस्य लाभार्थम्। अस्येंद्रस्य वरुणस्य च ध्रुवं नित्यं स्वं स्वकीयं असाधारणं यदोजो विद्यते तदोजो मिमाते इत्यन्वयः। तयोरिंद्रावरुणयोः अन्य एको वरुणः अजामिं अबंधुं अस्तुवंतं श्नथयंतं हिंसंतं कर्माण्यकुर्वंतं अस्तोतारमयजमानं च आतिरत् अभिहंति। अन्य एक इंद्रः दभ्रेभिरल्पैरेवोपायैः भूयसः बहुतरान् शत्रून् प्र वृणोति प्रकर्षेणावृतान् बाधितान् करोति। यद्वा भूयसो यजमानान् प्र वृणोति प्रवरानुत्कृष्टान्करोति॥

७. हे इंद्रावरुणा इंद्रावरुणौ तं मर्त्यं मनुष्यं अंहः पापं न नशते न व्याप्नोति। न च दुरितानि दुर्गमनानि पापफलानि च प्राप्नुवंति। कुतश्चन कस्मादपि निमित्तात्तपः संतापश्च तं न प्राप्नोति। हे देवा देवौ दानादिगुणयुक्ताविंद्रावरुणौ यस्य मर्त्यस्य मनुष्यस्य अध्वरं यज्ञं गच्छथः प्राप्नुथो युवां वीथः कामयेथे च यस्य हवींषि तं मनुष्यं परिह्वृतिः परिबाधा न नशते उक्तप्रकारेण न प्राप्नोति॥

८. हे नरा नेताराविंद्रावरुणौ दैव्येन देवसंबंधिना अवसा रक्षणेन सह अर्वाक् अस्मदभिमुखं आ गतं आगच्छतम्। आगत्य च मदीयं हवं स्तोत्रं शृणुतम्। यदि मे मम जुजोषथः प्रीयेथे मयि प्रीतिरस्ति चेत् युवाभ्यामागंतव्यं मदीयं स्तोत्रं श्रोतव्यं च भवतीत्यर्थः। युवोर्हि युवयोः खलु यत्सख्यं सखित्वं उत वा अपि च यदाप्यं आपित्वं बांधवं मार्डीकं मृडीकस्य सुखस्य साधनं तदुभयं हे इंद्रावरुणौ नि यच्छतं अस्मभ्यं प्रयच्छतम्॥

(P. 127.) ९. हे कृष्टयोजसा शत्रूणां कर्षकं ओजो बलं ययोः तादृशौ हे इंद्रावरुणौ भरेभरे संग्रामे संग्रामे अस्माकं पुरोयोधा पुरस्ताद्योद्धारौ भवतम्। यत् यौ वां युवां उभये उभयविधा पूर्वकालीना इदानींतनाश्च नरो नेतारः स्तोतारः स्पृधि युद्धे वां युवां हवंते। अध अपि च तोकस्य पुत्रस्य तनयस्य पौत्रस्य सातिषु संभजनीयेषु निमित्तभूतेषु च यौ युवां हवंते तावस्माकं पुरोयोधा भवतमित्यन्वयः॥

१०. अस्मे अस्मभ्यं इंद्रादयः द्युम्नं द्योतमानं धनं यच्छंतु प्रयच्छंतु। तथा महि महत् सप्रथः सर्वतः पृथु विस्तीर्णं शर्म गृहं च प्रयच्छंतु। अपि च ऋतावृधः ऋतस्य यज्ञस्य वर्धयित्र्याः अदितेरदीनाया देवमातुर्ज्योतिस्तेजश्च नोऽस्माकं अवध्रं अहिंसकमस्तु। वयं च देवस्य दानादिगुणयुक्तस्य सवितुः सर्वस्य प्रेरकस्य श्लोकं स्तोत्रं मनामहे जानीमः कुर्म इत्यर्थः। यद्वा देवेन सवित्रा अस्मभ्यं देयं श्लोकं यशः मनामहे याचामहे॥

इति पंचमस्य षष्ठे तृतीयो वर्गः॥

## 83.

युवां नरेति दशर्चं त्रयोदशं सूक्तं वसिष्ठस्यार्षं जागतं मैत्रावरुणम्। युवां नरेत्यनुक्रांतम्। आभिप्लविकेषूक्थ्येषु स्तोमवृद्धौ प्रशास्तुः इदं सूक्तमावापार्थम्। सूत्रितं च। युवां नरा पुनीषे वामिति॥

१. हे नरा नेताराविंद्रावरुणौ युवां षष्ठ्यर्थे द्वितीया युवयोः आप्यं बंधुभावं पश्यमानासः पश्यंतः युष्मद्बांधवलाभार्थिनः गव्यंतो गा आत्मन इच्छंतो यजमानाः पृथुपर्शवः पृथुर्विस्तीर्णः पर्शुः पार्श्वास्थि येषां ते तथोक्ताः विस्तीर्णाश्वपर्शुहस्ताः संतः प्राचा प्राचीनं ययुः बर्हिराहरणार्थं गच्छंति। पर्श्वा हि बर्हिराच्छिद्यते। तथा च तैत्तिरीयकम्। अश्वपर्श्वा बर्हिरच्छैतीति। हे इंद्रावरुणौ युवां दासा दासानि उपक्षपयितॄणि च वृत्राण्यावरकाणि शत्रुजातानि आर्याणि च कर्मानुष्ठानपराणि च शत्रुजातानि हतं हिंसतम्। अपि च सुदासं अस्मद्याज्यं एतत्संज्ञं राजानं अवसा रक्षणेन सार्धं अवतं आगच्छतम्॥

२. यत्र यस्मिन् संग्रामे नरो मनुष्याः कृतध्वजः उच्छ्रितध्वजाः समयंते युद्धार्थं संगच्छंते। तस्मिन्न् आजा आजौ युद्धे। चनेति निपातद्वयसमुदायो विभज्य योजनीयः। किंच किंचनापि प्रियमनुकूलं न भवति अपि तु सर्वं दुष्करं भवति। यत्र च युद्धे भुवना भुवनानि भूतजातानि स्वर्दृशः शरीरपातादूर्ध्वं स्वर्गस्य द्रष्टारो वीराश्च भयंते बिभ्यति तत्र तादृशे संग्रामे हे इंद्रावरुणौ नोऽस्मानधि वोचतं अस्मत्पक्षपातवचनौ भवतम्॥

३. हे इंद्रावरुणौ भूम्या अंताः पर्यंताः ध्वसिराः सैनिकैर्ध्वस्ताः समदृक्षत संदृश्यंते। तथा दिवि द्युलोके घोषः सैनिकानां शब्दश्च अरुहत आरूढोऽभूत्। जनानामस्मदीयानां भटानां अरातयः शत्रवः मामुपास्थुः उपस्थिताः। एवं प्रवर्तमानेऽस्मिन्युद्धे हे हवनश्रुता आह्वानश्रोताराविंद्रावरुणौ अर्वाक् अस्मदभिमुखं अवसा रक्षणेन सह आ गतं आगच्छतम्॥

(P. 128.) ४. हे इंद्रावरुणा इंद्रावरुणौ वधनाभिर्वधकारैरायुधैः अप्रतीतं अप्रातं भेदं एतत्संज्ञं सुदासः शत्रुं वन्वंता हिंसंतौ युवां सुदासं शोभनं ददातीति सुदाः एतत्संज्ञं मम याज्यं राजानं प्रावतं प्रकर्षेणारक्षतं एषां तृत्सूनां मम याज्यानां ब्रह्माणि स्तोत्राणि शृणुतं अशृणुतम्। किंच। हवीमनि आहूयंतेऽस्मिन्युद्धार्थं परस्परमिति हवीमा संग्रामः तस्मिन्। यस्मादेवं तस्मात्तृत्सूनां एतत्संज्ञानां मम याज्यानां पुरोहितिः मम पुरोधानं सत्या सत्यफलमभवत्। तेषु यन्मम पौरोहित्यं तत्सफलं जातमित्यर्थः॥

५. हे इंद्रावरुणौ अर्यः अरेः शत्रोः संबंधीनि अघान्याहंतॄण्यायुधानि मा मां अभ्यातपंति अभितो बाधंते। अपि च वनुषां हिंसकानां मध्ये अरातयः अभिगमनशीलाः शत्रवश्च मामभितपंति। युवं हि युवां खलु उभयस्य पार्थिवस्य दिव्यस्य वस्वो वसुनो धनस्य राजथः ईशाथे राजतिरैश्वर्यकर्मा। अध स्म अतः कारणात् पार्ये तरणीये दिवि दिवसे युद्धदिने नोऽस्मानवतं रक्षतम्॥

इति पंचमस्य षष्ठे चतुर्थो वर्गः॥

६. उभयासः उभयविधाः सुदाःसंज्ञो राजा तत्सहायभूतास्तृत्सवश्च एवं द्विप्रकारा जनाः आजिषु संग्रामेषु इंद्रं च वरुणं च युवां हवंते आह्वयंते । किमर्थम् । वस्वो धनस्य सातये संभजनार्थम् । यत्र येष्वाजिषु दशभिर्दशसंख्याकैः राजभिः शत्रुभूतैः नृभिः निबाधितं नितरां हिंसितं सुदासं तृत्सुभिः सह वर्तमानं प्रावतं युवां प्रकर्षेणारक्षतं तेष्वाजिष्वित्यन्वयः ॥

७. हे इंद्रावरुणौ दश दशसंख्याकाः राजानः सुदासः शत्रवः समिताः संगताः परस्परं समवेताः अयज्यवः अयजमानाः एवंभूतास्ते सुदासं एतत्संज्ञं एकमपि राजानं न युयुधुः न संप्रजह्रुः । युवाभ्यामनुगृहीतं तं प्रहर्तुं न शेकुः । तदानीं अद्मसदां अद्मनि अन्ने हविषि सीदंतीत्यद्मसद ऋत्विजः हविर्भिर्युक्तानां नृणां यज्ञस्य नेतॄणां ऋत्विजां उपस्तुतिः स्तोत्रं सत्या सफलाभूत् । अपि च एषां देवहूतिषु देवा हूयंत एष्विति देवहूतयो यज्ञाः तेषु सर्वे च देवा अभवन् युष्मदनुग्रहात्प्रादुर्भवंति ॥

८. हे इंद्रावरुणौ दाशराज्ञे दशशब्दस्य छांदसो दीर्घः विभक्तिव्यत्ययः दशभी राजभिः शत्रुभूतैः विश्वतः सर्वतः परियत्ताय परिवेष्टिताय सुदासे राज्ञे अशिक्षतं बलं प्रायच्छतम् । यत्र यस्मिन्देशे श्वित्यंचः श्वितिं श्वैत्यं नैर्मल्यं अंचंतो गच्छंतः कपर्दिनो जटिलाः धीवंतः कर्मभिर्युक्तास्तृत्सवः वसिष्ठशिष्याः एतत्संज्ञा ऋत्विजः नमसा हविर्लक्षणेनान्नेन धिया स्तुत्या च असपंत पर्यचरन् तस्मिन्देशे युवां तस्मै राज्ञे बलं प्रायच्छतमित्यर्थः ॥

(P. 129.) ९. हे इंद्रावरुणौ युवयोरन्य एक इंद्रो वृत्राणि शत्रून् समिथेषु संग्रामेषु जिघ्नते हंति । अन्य एको वरुणः सदा सर्वदा व्रतानि कर्माणि अभि रक्षते अभितः सर्वतो रक्षति । हे वृषणा कामानां वर्षिताराविंद्रावरुणौ तथाविधौ वां युवां सुवृक्तिभिः सुप्रवृत्ताभिः स्तुतिभिः हवामहे आह्वयामहे । आहूतौ च युवां अस्मे अस्मभ्यं शर्म सुखं यच्छतं दत्तम् ॥

१०. व्याख्यातेयम् (८२.१०.) अक्षरार्थस्तु । इंद्रादयोऽस्मभ्यं द्योतमानं प्रयच्छंतु सर्वतो विस्तीर्णं महद्गृहं च । यज्ञस्य वर्धयित्र्याः अदीनाया देवमातुः तेजश्च अस्माकमबाधकं भवतु । वयं च प्रेरकस्य देवस्य स्तोत्रं मनामहे कुर्महे ॥

इति पंचमस्य षष्ठे पंचमो वर्गः ॥

---

## 84.

आ वामिति पंचर्चं चतुर्दशं सूक्तं वासिष्ठं त्रैष्टुभमैंद्रावरुणम् । अनुक्रांतं च । आ वां पंचेति । उक्थ्ये तृतीयसवने मैत्रावरुणशस्त्र इदं सूक्तम् । सूत्रितं च । आ वां राजानाविंद्रावरुणा मधुमत्तमस्येति याज्येति ॥

१. हे राजानौ राजमानौ ईश्वरौ वा इंद्रावरुणौ अध्वरे हिंसारहितेऽस्मिन्यागे वां युवां हव्येभिर्हविर्भिर्नमोभिः स्तोत्रैश्च आ ववृत्यां आवर्तयामि । अपि च बाह्वोर्हस्तयोर्दधाना

धार्यमाणा विश्वरूपा रूप्यत इति रूपं हविः विविधरूपैर्युक्ता घृताची घृतमंचंती जुहूः त्मना आत्मना स्वयमेव वां युवां परि प्र जिगाति अभिप्रगच्छति । यद्वा विश्वरूपा नानाविधरूपौ वामिति योज्यम् ॥

२. हे इंद्रावरुणौ युवयोर्युवयोः बृहन्महत् राष्ट्रं राज्यं द्यौः द्युलोकरूपं इन्वति वृष्ट्या सर्वान् प्रीणयति । यौ युवां सेतृभिः बंधकैः अरज्जुभिः रज्जुरहितैः रोगादिभिः सिनीथः पापकृतो बध्नीथः षिञ् बंधन इति धातुः तयोर्युवयोः वरुणस्य वारयितुर्देवस्य हेळः क्रोधः नोऽस्मान्परि वृज्याः परिवृणक्तु परित्यज्यान्यत्र गच्छतु । इंद्र उ इंद्रश्च उरुं विस्तीर्णं लोकं स्थानं कृणवत् करोतु ॥

३. हे इंद्रावरुणौ नोऽस्माकं विदथेषु यज्ञेषु क्षिप्रागमं यज्ञं चारुं शोभनं फलसहितं कृतं कुरुतम् । तथा सूरिषु स्तोतृष्वस्मासु विद्यमानानि ब्रह्माणि परिवृढानि स्तोत्राणि प्रशस्ता प्रशस्तानि उत्कृष्टानि फलभांजि कृतं कुरुतम् । अपि च देवजूतः देवाभ्यां युवाभ्यां प्रेरितो रयिर्धनं नोऽस्मानुपैतु गच्छतु तथा । स्पार्हाभिः स्पृहणीयाभिरूतिभिः रक्षाभिर्नोऽस्मान् प्र तिरतं युवां वर्धयथां प्रपूर्वस्तिरतिर्वर्धनार्थः ॥

(P. 130.) ४. हे इंद्रावरुणौ अस्मे अस्मभ्यं रयिं धनं धत्तं प्रयच्छतम् । कीदृशम् । विश्ववारं विश्वैः सर्वैर्वरणीयं संभजनीयं वसुमंतं निवासयुक्तं पुरुक्षुं बह्वन्नं पुरुभिर्बहुभिः प्रशस्यं वा । आदित्यः अदितेः पुत्रो यो वरुणः अनृता अनृतानि सत्यरहितानि भूतानि प्र मिनाति प्रहिनस्ति मीङ् हिंसायामिति धातुः शूरः शौर्यवान् स वरुणः अमिता अमितानि अपरिमितानि वसूनि धनानि दयते स्तोतृभ्यो ददाति ॥

५. मे मदीया इयं गीः स्तुतिः इंद्रं वरुणं च अष्ट अश्नुतां व्याप्नोतु । तथा तूतुजाना मया प्रेर्यमाणा सा तोके पुत्रे तनये पौत्रे च विषये प्रावत् प्ररक्षत्वस्मान् । वयं च सुरत्नासः शोभनधनाः संतो देववीतिं देवैः कामयितव्यं यज्ञं गमेम प्राप्नुयाम । हे इंद्रावरुणादयः सर्वे देवाः यूयं स्वस्तिभिः कल्याणैर्नोऽस्मान् सदा सर्वदा पात रक्षत ॥

इति पंचमस्य षष्ठे षष्ठो वर्गः ॥

85.

पुनीषे वामिति पंचर्चं पंचदशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैंद्रावरुणम् । पुनीष इत्यनुक्रांतम् । आभिप्लविकेषूक्थ्येषु तृतीयसवने स्तोमवृद्धौ प्रशास्तुः इदमावापार्थम् । सूत्रितं च । युवां नरा पुनीषे वामिति ॥

१. हे इंद्रावरुणौ वां युवाभ्यां युवयोरर्थं अरक्षसं रक्षोरहितां राक्षसैरसंस्पृष्टां मनीषां स्तुतिं पुनीषे शोधयामि । किं कुर्वन् । इंद्राय वरुणाय च सोमं जुह्वत् इंद्रं वरुणं चोद्दिश्य सोममग्नौ प्रक्षिपन् । कीदृशीं मनीषाम् । देवीं द्योतमानां उषसं न उषसमिव घृतप्रतीकां दीप्तावयवाम् । शिष्टः परोक्षकृतः । ता ताविंद्रावरुणौ अभीके अभिगते युद्धे यामन् यामनि युद्धार्थं गमने सति नोऽस्मान् उरुष्यतां रक्षताम् ॥

२. देवहूये देवा विजिगीषवो योद्धारो हूयंते युद्धार्थं परस्परमाहूयंत इति देवहूय. संग्रामः अत्रास्मिन्देवहूये संग्रामे स्पर्धंते वै शत्रवो ऽस्माभिः स्पर्धंते खलु। उ इति पूरकः। येषु संग्रामेषु आजेषु पताकासु दिद्यवः शत्रुनिशितान्यायुधानि पतंति तान् तेषु संग्रामेषु विद्यमानान् अभिकान् शत्रून् हे इंद्रावरुणौ युवं युवां शर्वा शरुणा हिंसकेनायुधेन पराचः पराङ्मुखान् विषूचः विविधगतींश्च हतं हिंस्तम्। यथा ते शत्रवः पराङ्मुखा इतस्ततः पलायमानाश्च भवंति तथा तान्बाधेथामित्यर्थः ॥

३. आपश्चित् अपि च आपः सोमाश्च स्वयशसः स्वायत्तयशस्काः देवीर्द्योतमानाः संतः सदःसु सदनेषु स्थानेषु इंद्रं वरुणं च देवता एते द्वे देवते धुः धारयंति अवस्थापयंति। सोमेनाप्यायिता हि देवताः स्वे स्वे स्थानेऽवतिष्ठंते। यद्वा वसतीवर्याख्या आप एव सोमाभिषवद्वारा सदनेषु इंद्रं वरुणं च धारयंति। तयोरिंद्रावरुणयोरन्य एकः प्रविक्ताः पृथक्कृताः पुण्यापुण्यविवेकेन विचित्रफलभोक्त्रीः कृष्टीः प्रजा असांकर्येण धारयति। अन्य इंद्रः वृत्राणि शत्रुजातानि अप्रतीनि अन्यैरप्रतिगतानि हंति हिनस्ति ॥

(P. 131.) ४ सुक्रतुः शोभनकर्मा शोभनप्रज्ञो वा स होता स्तोता ऋतचित् ऋतस्योदकस्य यज्ञस्य वा चेता निचेतास्तु भवतु। हे आदित्या अदितेः पुत्राविंद्रावरुणौ छांदसः सांहितिको ह्रस्वः। यो नमस्वान् नमसा नमस्कारेण स्तोत्रेण वा युक्तः सन् शवसा बलेन युक्तो वां युवां परिचरतीति शेषः स सुक्रतुरित्यन्वयः। अपि च यो हविष्मान् हविर्भिर्युक्तः सन् अवसे तर्पणार्थं वां युवां आववर्तत् आवर्तयेत् स यजमानः प्रयस्वानन्नवान् भूत्वा सुविताय सुष्ठु प्राप्तव्याय फलाय असदित् भवेदेव ॥

५. व्याख्यातेयम् (८४,५.)। मदीया स्तुतिरिंद्रं वरुणं चाश्नुताम्। मया प्रेर्यमाणा सा पुत्रे पौत्रे च विषये अस्मान् प्ररक्षतु। वयं शोभनधनाः संतः उत्तरोत्तरं यागं प्राप्नुयाम। हे इंद्रावरुणादयो देवाः अस्मान् सर्वदा कल्याणैः रक्षत ॥

इति पंचमस्य षष्ठे सप्तमो वर्गः ॥

---

## 86.

धीरा त्वस्येत्यष्टर्चं षोडशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वरुणदेवत्यम्। तथा चानुक्रांतम्। धीराष्टौ वारुणं हीति। गतो विनियोगः ॥

१. अस्य वरुणस्य जनूंषि जन्मानि महिना महिम्ना तु क्षिप्रं धीरा धीराणि धैर्ययुक्तानि भवंति। यो वरुणः उर्वी विस्तीर्णे रोदसी चित् द्यावापृथिव्यावपि वि तस्तंभ विविधं स्तब्धे स्वकीये स्थाने स्थिते अकरोत्। यश्च बृहंतं महांतं नाकमादित्यं नक्षत्रं च ऋष्वं दर्शनीयं द्विता द्वैधं प्र नुनुदे प्रेरयति स्म। अहनि सूर्यं दर्शनीयं प्रेरयति रात्रौ नक्षत्रं तथेति द्विप्रकारः। भूम भूमिं च यः पप्रथत् अप्रथयत् विस्तारितवान् तस्यास्य वरुणस्येत्यन्वयः ॥

देवः अचितः अज्ञानतो ऽस्मान् अचेतयत् चेतयतु प्रज्ञापयतु । गृत्सं स्तोतारं च कवितरः प्राज्ञतरो देवः राये धनाय धनप्राप्त्यर्थं जुनाति जुनातु प्रेरयतु ॥

८. एकादशिने वारुणे पशौ अयमिति पुरोडाशस्यानुवाक्या । सूत्रितं च । अयं सु तुभ्यं वरुण स्वधाव एवा वंदस्व वरुणं बृहंतमिति ॥

हे स्वधावः अन्नवन्वरुण तुभ्यं त्वदर्थं क्रियमाणः अयं एतत्सूक्तात्मकं स्तोमः स्तोत्रं हृदि त्वदीये सु सुष्ठु उपश्रितः उपगतः समवेतोऽस्तु । चिदिति पूरकः । अप्राप्तस्य प्रापणं योगः प्राप्तस्य रक्षणं क्षेमः नोऽस्मदीये क्षेमे रक्षणे शं उपद्रवाणां शमनमस्तु । योगे च नोऽस्मदीये प्रापणे शमु शमनमेवास्तु उपद्रवाणाम् । हे वरुणाद्या देवाः नोऽस्मान सर्वदा स्वस्तिभिरविनाशैः पात रक्षत ॥

इति पंचमस्य षष्ठेऽष्टमो वर्गः ॥

---

## 87.

(p. 133.) रदत्पथ इति सप्तर्चं सप्तदशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वारुणम् ।अनुक्रांतं च । रदत्सप्तेति । गतो विनियोगः ॥

१. अयं वरुणो देवः सूर्याय सर्वस्य प्रेरकायादित्याय पथो मार्गान् अंतरिक्षप्रदेशान् रदत् प्रायच्छत् । समुद्रिया समुद्रे उदधौ भवानि यद्वा समुद्रवंत्यस्मादाप इति समुद्रमंतरिक्षम् । तत्र भवान्यर्णांस्युदकानि नदीनां प्र असृजत् । सर्गो न सृज्यते युद्धभूमौ सादिना प्रेर्यत इति सर्गोऽश्वः स यथा अर्वतीः वडवाः प्रति शीघ्रं गच्छति तद्वत् ऋतायन् ऋतं शीघ्रं गमनमात्मन इच्छन् महीर्महतीः अवनीः रात्रीः अहभ्यः अहोभ्यः सकाशाच्चकार भेदेन कृतवान् । अस्तं गच्छन् सूर्य एव वरुण इत्युच्यते । स हि स्वगमनेन रात्रीर्जनयति ॥

२. हे वरुण ते त्वदीयः त्वया अंतरिक्षे प्रेर्यमाणो वातो वायुरात्मा सर्वस्य प्राणिजातस्य प्राणरूपेण धारयिता । स च रज उदकं आ नवीनोत् समंतात् प्रेरयति । वातेन हि वृष्टिर्जायते । भूर्णिर्जगतो भर्ता स वायुर्यवसे घासे प्रक्षिप्ते सति यथा पशुरन्नवान् भवति तद्वत्ससवान् ससमित्यन्ननाम तद्वान् भवति । हविर्लक्षणमन्नमपि तस्मै प्रयच्छंतीत्यर्थः । यद्वा सनोतेः क्सौ रूपम् । ततः ससवान् संभक्तवान्वातः घासे सति पशुर्यथा भारवाही भवति तद्वज्जगतो भर्ता । हे वरुण मही महत्यौ बृहती परिवृढे इमे रोदसी द्यावापृथिव्यौ अंतर्मध्ये द्यावापृथिव्योर्मध्य इत्यर्थः । ते तव विश्वा सर्वाणि धाम धामानि स्थानानि तेजांसि वा प्रियाणि सर्वेषां प्रीतिकराणि भवंति ॥

३. स्पशंति स्पृशंतीति स्पशश्चराः वरुणस्य देवस्य स्पशश्चराः स्मदिष्टाः स्मदित्येतत् प्रशंसार्थे सहार्थे च वर्तते प्रशस्तगतयः यद्वा सह प्रेषिताः संतः सुमेके शोभनमेहने सुरूपे वा उभे रोदसी द्यावापृथिव्यौ परि पश्यंति परित ईक्षंते । उभयोर्लोकयोर्वर्तमानान्पुण्यापुण्यकारिणो जनान्पश्यंतीत्यर्थः । यस्मादेवं तस्मात्तद्भीत्या ऋ-

तावानः कर्मवंत यज्ञधीरा यज्ञेषु कृतबुद्धय प्रचेतस प्राज्ञा कवय क्रांतदर्शिनो ये जना· मन्म मननीयानि स्तोत्राणि इष्यंत गमयंति वरुणं प्रापयंति तानपि परिपश्यं· तीत्यर्थः । अतोऽस्मानपि स्तोतॄन् ज्ञात्वा पापान्मुंचत्विति ऋषिराशास्ते ॥

४· मेधिराय मेधाविने मे मह्यं वरुण उवाच उक्तवान् । किमुक्तवान् तदाह । त्रिः सप्त एकविंशतिसंख्याकानि नामानि अघ्न्या गौर्बिभर्ति धारयतीति । वागत्र गौरुच्यते । सा च उरसि कंठे शिरसि च बद्धानि गायत्र्यादीनि सप्त छंदसां नामानि बिभर्ति । यद्वा वेदात्मिका वाक् एकविंशतिसंस्थानां यज्ञानां नामानि बिभर्ति धारयति । अपर आह । गौः पृथिवी । तस्याश्च गौः ग्मा ज्मेति पठितान्येकविंशति नामानीति । अपि च विद्वान् जानन् विप्रो मेधावी स वरुणो युगाय युक्ताय उपगाय उप समीपे रममाणाय अंतेवासिने मह्यं शिक्षन् उपदिशन् पदस्योत्कृष्टस्य स्थानस्य ब्रह्मलोकलक्षणस्य संबंधीनि गुह्या गुह्यानि रहस्यानि उपदेशे गम्यानि तच्छब्दश्चार्थे इमानि च वोचत उक्तवान् । अतोऽहं वरुणस्य शिष्योऽस्मि । तस्मात्स वरुणोऽस्मान् पापान्मोचयत्वित्यर्थः ॥

५· तिस्रः त्रिप्रकाराः उत्तममध्यमाधमभावेन त्रिविधाः द्यावो द्युलोका अस्मिन्वरुणे अंतर्मध्ये निहिता । तिस्रः पूर्ववत्त्रिविधाः भूमीः भूम्यश्च । षड्विधानाः विधानं विधा वसंताद्यृतुभेदेन षड्विधाः प्रकाराः यासु तादृश्यः उपराः अस्मिन्नेव वरुणे उप्ताः अंतर्भूताः । लोकानां त्रित्वं च त्रयो वा इमे त्रिवृतो लोका इत्यादिना ब्राह्मणेनावगम्यते । तिस्रो भूमीर्धारयन्निति निगमश्च भवति । इमौ लोकौ आवृत्य वरुणस्तिष्ठतीत्यर्थः । अपि च गृत्सः स्तुत्यः राजेश्वरः स वरुणः दिव्यंतरिक्षे हिरण्ययं हिरण्मयं सुवर्णमयं हितरमणीयं वा प्रेंखं दोलावत् दिक्त्रयसंस्पर्शिनं एतं सूर्यं शुभे कं दीप्त्यर्थं चक्रे कृतवान् । दिवि सूर्यमदधात्सोममद्राविति हि श्रूयते ॥

(P. 134.) ६. वारुणे पशौ अव सिंधुमिति वपाया अनुवाक्या । सूत्रितं च ॥ अव सिंधुं वरुणो द्यौरिव स्थादयं सु तुभ्यं वरुण स्वधाव इति ॥

द्यौरिव सूर्य इव दीप्तो वरुणः सिंधुं समुद्रं अव स्थात् वेलायामवस्थापयति । यथा वेलां नातिक्रामति तथा करोतीत्यर्थः । कीदृशो वरुणः । द्रप्सो न द्रवणशील उदबिंदुरिव श्वेतः शुभ्रवर्णः मृगः लतामननेन गौरमृग इव तुविष्मान् बलवान् प्रवृद्धो वा गभीरशंसः गंभीरो महान् शंसः स्तोत्रं यस्य स तथोक्तः रजस उदकस्य विमानो निर्माता सुपारक्षत्रः सुष्ठु दुःखात्पारकं क्षत्रं बलं धनं वा यस्य तादृशो वरुणः सतो विद्यमानस्यास्य जगतो राजा ईश्वरो भवति ॥

७. आगोऽपराधं चकृषे चित् कृतवतेऽपि स्तोत्रे यो वरुणः मृळयाति उपदयां करोति तस्मिन्वरुणे अनागाः अनागसोऽनपराधाः संतो वयं स्याम वर्तमानाः भवेम । किं कुर्वंतः । अदितेरदीनस्य वरुणस्य संबंधीनि व्रतानि कर्माणि अनु आनुपूर्व्येण ऋधंतः समर्धयंतः । हे वरुणाद्यो देवाः यूयं अस्मान् सर्वदा कल्याणैः पालयत ॥

इति पंचमस्य षष्ठे नवमो वर्गः ॥

## 88.

प्र शुंध्युवमिति सप्तर्चमष्टादशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वारुणम् । प्र शुंध्युवमित्यनुक्रांतम् । गतो विनियोगः ॥

१. ऋषिरात्मानमेव प्रत्यक्षीकृत्य स्तुतौ नियुंक्ते । हे वसिष्ठ त्वं मीळ्हुषे सेक्त्रे वरुणाय शुंध्युवं शोधयित्रीं यद्वा स्वत एव शुद्धां श्रेष्ठां प्रियतमां मतिं मननीयामीदृशीं स्तुतिं प्र भरस्व प्रहर प्रापय । यो वरुण ईमेनं सूर्यमर्वाञ्चं अस्मदभिमुखं करते अंतरिक्षे करोति तस्मै वरुणायेत्यन्वयः । कीदृशं सूर्यम् । यजत्रं यष्टव्यं सहस्रामघं बहुधनं वृषणं कामानां वर्षकं बृहंतं महांतम् ॥

२. अधा अधुना अस्य वरुणस्य संदृशं संदर्शनं नु क्षिप्रं जगन्वान् गतवानहं अग्नेरनीकं ज्वालासंघं मंसि स्तवानि तं वरुणं यष्टुमिति शेषः । यद्यदा वरुणः स्वः सुखकरं अश्मन् अश्मनि अभिषवार्थे पाषाणे अभि स्थितं अभिषुतमित्यर्थः ईदृशं अंधः सोमलक्षणमन्नं अधिपाः अधिकं पाता भवेत् । छांदसः षष्ठ्यभावः । उ इति पूरकः । तदानीं मा मां वपुः शरीरं स्वीयं वपुरिति रूपनाम प्रशस्तं रूपं वा दृशये दर्शनार्थं अभि निनीयात् अभिप्रापयेत् ॥

३. यद्यदा वरुणे प्रसन्ने सति अहं वरुणश्चोभौ नावं द्रुममयीं तरणसाधनभूतां आ रुहाव उभावारूढावभूव तां च नावं यद्यदा समुद्रं मध्यं समुद्रस्य मध्यं प्रति प्रेरयाव प्रकर्षेण गमयाव यद्यदा च अपामुदकानां अधि उपरि स्नुभिः गंत्रीभिरन्याभिरपि नौभिश्चराव वर्तावहै तदानीं शुभे शोभार्थं प्रेंखे नौरूपायां दोलायामेव प्रेंखयावहै निम्नोन्नतैस्तरंगैरितश्चेतश्च प्रविचलंतौ संक्रीडावहै । कमिति पूरकः । यद्वा क्रियाविशेषणं कं सुखं यथा भवति तथेत्यर्थः ॥

(P. 135.) ४. एवं वसिष्ठेनात्मनोक्ते यद्वरुणेन कृतं तद्दर्शयति । वसिष्ठं ह वसिष्ठं खलु वरुणो नावि स्वकीयायां आ अधात् आरोहयत् । तथा तमृषिं अहोभिः रक्षणैः स्वपां स्वपसं शोभनकर्माणं चकार वरुणः कृतवान् । अपि च विप्रो मेधावी वरुणः अह्नां दिवसानां मध्ये सुदिनत्वे यत्फलत्वेन शोभनदिनत्वं तत्र स्तोतारं अस्थापयदिति शेषः । किं कुर्वन् । यात यातौ गच्छतो द्यावो दिवसान् यात् यातीरुषासः उषसा उपलक्षिता रात्रीश्च नु क्षिप्रं ततनन् सूर्यात्मना विस्तारयन् ॥

५. हे वरुण त्यानि तानि पुरातनानि नौ आवयोः सख्या सख्यानि सखित्वानि क्व कुत्र बभूवुः । पूर्वस्मिन् काले अवृकं अहिंस्यं आत्यंतिकं यत्सख्यमस्ति तत्सचावहे आवां सेवावहे । चिदिति पूरकः । अपि च हे स्वधावः अन्नवन्वरुण ते त्वदीयं गृहं जगम गच्छानि । लोडर्थे लिट् । कीदृशं गृहम् । बृहंतं महांतं मानं मांत्यस्मिन् सर्वाणि भूतानीति मानं सर्वस्य भूतजातस्य परिच्छेदकमित्यर्थः सहस्रद्वारं बहुद्वारम् ॥

६. हे वरुण यो वसिष्ठो नित्यो ध्रुव आपिर्बंधुः औरसः पुत्र इत्यर्थः । यः पूर्वं प्रियः सन् त्वां प्रति आगांसि अपराधान् कृणवत अकरोत् स इदानीं ते तव सखा सख्या समानख्यानः प्रियोऽस्तु । हे यक्षिन् यजनीय वरुण ते तव स्वभूता वयं एनस्वंत एनसा पापेन युक्ताः संतो मा भुजेम मा भुज्महि । त्वत्प्रसादात्पापरहिता एव संतो

भोगान् गुनजामः । विप्रो मेधावी त्वं च स्तुवते स्तोत्रं कुर्वते वसिष्ठाय वरूथं अनिष्टनिवारकं वरणीयं वा गृहं यंधि प्रयच्छ । स्मेति पूरकः ॥

७. अत्र ऋग्विधानम् ।

ध्रुवासु त्वासु क्षितिषु जपन् बंधात्प्रमुच्यते ।
तिष्ठन्रात्रौ जपेदेता पिशाचस्तं न गच्छति ॥

ध्रुवासु नित्यासु आसु दृश्यमानासु क्षितिषु भूमिषु क्षियंतः निवसंतो वयं हे वरुण त्वा त्वां स्तुम इति शेषः । स च वरुणः अस्मत् अस्मत्तः पाशं बंधकं पापं वि मुमोचत मोचयेत । तथा अदितेः अखंडनीयायाः पृथिव्याः उपस्थादुपस्थानात् अदो रक्षणं वरुणेन दत्तं वन्वानाः संभजमाना वयं स्याम । अन्यद्गतम् ॥

इति पंचमस्य षष्ठे दशमो वर्गः ॥

---

89.

मो षु वरुणेति पंचर्चमेकविंशं सूक्तं वारुणम् । अंत्या जगती शिष्टाश्चतस्रो गायत्र्यः । तथा चानुक्रांतम् । मो षु पंच गायत्रं जगत्यंतमिति । गतो विनियोगः ॥

१. हे राजन्नीश्वर वरुण त्वदीयं मृन्मयं मृदादिभिर्निर्मितं गृहं मो मा उ मैव अहं गमं गतोऽस्मि । अपि तु सुशोभनं सुवर्णमयमेव त्वदीयं गृहं प्राप्नवानि । स त्वं मां मृळ सुखय हे सुक्षत्र शोभनधन वरुण मृळय उपदयां च कुरु ॥

२. हे अद्रिवः आयुधवन्वरुण यद्यदा प्रस्फुरन्निव शैत्येन प्रविचलन्निव त्वद्भयाद्वेपमानो दृतिर्न दृतिरिव ध्मातो वायुना पूर्णः सन् त्वया बद्धोऽहं एमि गच्छामि तदानीं मृळ सुखय हे सुक्षत्र सुधन मृळय उपदयां कुरु ॥

(P. 136.) ३. हे समह सधन शुचे स्वभावतो निर्मल वरुण दीनता दीनतया अशक्ततया क्रत्वः कर्मणः कर्तव्यत्वेन विहितस्य श्रौतस्मार्तादिलक्षणस्य प्रतीपं प्रतिकूलं अननुष्ठानं जगम प्राप्तवानस्मि अत एव त्वया बद्धः तादृशं मां मृळ सुखय । अन्यद्गतम् ॥

४. अपां समुद्राणामुदकानां मध्ये तस्थिवांसं स्थितवंतमपि जरितारं तव स्तोतारं मां तृष्णा पिपासा अविदत् आवर्ती । लवणोत्कटस्य समुद्रजलस्य पानानर्हत्वात् । अतस्तादृशं मां मृळ सुखय । अन्यद्गतम् ॥

५. देवसुवां हविःषु वारुणस्य हविषः यत्किं चेदमिति याज्या । सूत्रितं च । यत्किं चेदं वरुण दैव्ये जन उप ते स्तोमान्पशुपा इवाकरमिति द्वे इति ॥

हे वरुण दैव्ये देवसमूहरूपे जने यदिदं किंचन अभिद्रोहं अपकारजातं मनुष्या वयं चरामसि चरामः निर्वर्तयामः तथा अचित्ती अचित्त्या अज्ञानेन तव त्वदीयं यद्धर्म धारकं कर्म युयोपिम वयं विमोहितवंतः हे देव तस्मादेनसः पापात् नोऽस्मान् मा रीरिषः मा हिंसीः ॥

इति पंचमस्य षष्ठ एकादशो वर्गः ॥
इति सप्तमे मंडले पंचमोऽनुवाकः ॥

## 90.

षष्ठेऽनुवाके पंचदश सूक्तानि । तत्र प्र वीरयेति सप्तर्चं प्रथमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वायव्यम् । यासु पंचम्याद्यासु द्विवचनमस्ति ता ऐंद्रवायव्यः । तथा चानुक्रांतम् । प्र वीरया सप्त वायव्यं ऐंद्र्यश्च या द्विवदुक्ता इति । तृतीये छंदोमे प्रउगशस्त्रे प्र वीरयेति वायव्यस्तृचः । सूत्रितं च । प्र वीरया शुचयो दद्रिरे वां ते सत्येन मनसा दीध्याना इति ॥

१. हे वायो वीरया वीराय विविधमीरयित्रे सुपां सुलुगिति चतुर्थ्या याजादेशः वां ते व्यत्ययेन द्विवचनं तुभ्यं शुचयः शुद्धाः मधुमंतः माधुर्योपेताः सुतासः अभिषुताः सोमाः ऐतरेयिभिः नवमेऽहनि प्रउगे अध्वर्युभिः अध्वरस्य नेतृभिः ऋत्विग्भिः प्र दद्रिरे प्रदीयंते । दद दान इत्यस्यैतद्रूपम् । यत एवमतः कारणात् हे वायो नियुतो वडवाः वह रथं प्रापय । तेन च रथेन अच्छ याहि अस्मद्यज्ञमभिगच्छ । अभिगत्य च सुतस्याभिषुतस्य अंधसः अन्नस्य सोमलक्षणस्य स्वकीयभागं पिब । किमर्थम् । मदाय मदोत्पत्त्यर्थम् ॥

२. शुनासीरीये पर्वणि वायव्यस्य हविष ईशानायेति याज्या । सूत्रितं च । स त्वं नो देव मनसेशानाय प्रहुतिं यस्त आनडिति । वायव्ये पशावेषैव पशुपुरोडाशस्य याज्या । सूत्रितं च । ईशानाय प्रहुतिं यस्त आनट् प्र वो वायुं रथयुजं कृणुध्वमिति ॥

हे वायो ईशानाय ईश्वराय ते तुभ्यं भवदर्थं प्रहुतिं प्रकृष्टामाहुतिं चरुपुरोडाशादिसाध्यां यो यजमान आनट् प्राप्नोत् दद्यादित्यर्थः । तथा हे शुचिपाः शुद्धस्य सोमस्य पातर्वायो तुभ्यं शुचिं शुद्धं सोमं च यः प्रयच्छति मर्त्येषु मनुष्येषु मध्ये तं यजमानं प्रशस्तं मुख्यं कृणोषि करोषि । स च जातोजातः सर्वत्र प्रादुर्भूतः प्रख्यातः सन् वाजी अस्य प्राप्तव्यस्य धनस्य प्राप्तये जायते अवकल्पते । सर्वं धनं लभत इत्यर्थः ॥

३. नियुत्वद्गुणविशिष्टवायुदेवताके पशौ राये नु यमिति पुरोडाशस्य याज्या । सूत्रितं च । राये नु यं जज्ञतू रोदसीमे प्र वायुमच्छा बृहती मनीषेति ॥

इमे रोदसी द्यावापृथिव्यौ यं वायुं राये धनार्थं नु क्षिप्रं जज्ञतुर्जनयामासतुः तं देवं दानादिगुणयुक्तं वायुं देवी द्योतमाना धिषणा स्तुतिः राये धनार्थं धाति धारयति । धनं यथा लभ्यते तथा प्रेरयतीत्यर्थः । अध अधुना एवं स्तुतौ प्रवृत्तायां स्वाः स्वकीयाः नियुतो वडवाः रथवाहाः वायुं सश्चत सचंते सेवंते । उत अपि च श्वेतं शुभ्रवर्णं निरेके नितरां रेको रिक्तता निरेकः दारिद्र्यमित्यर्थः तस्मिन् सति वसुधितिं वसूनां धातारं वायुं नियुतोऽस्मद्यज्ञं प्रापयंतीति शेषः ॥

(P. 137.) ४. द्वितीये छंदोमे प्रउगशस्त्रे वायव्यतृचस्य उच्छन्नुषस इति तृतीया सूत्रितं च । उच्छन्नुषसः सुदिना अरिप्रा इत्येकपातिन्य इति ॥

येऽगिरसो वायुमस्तोषत तेषां अरिप्राः पापरहिता उषसः सुदिनाः शोभनदिनस्य हेतुभूताः सत्यः उच्छन् औच्छन् व्यवासयन । ते च दीध्याना दीप्यमानाः

संतः उरु विस्तीर्णं ज्योतिः सूर्याख्यं विविदुः वायोः प्रसादाल्लभंत । अपि च उशिजः कामयमानास्तेऽंगिरसो गव्यं चित् गोसंघरूपमपि ऊर्वं धनं पणिभिरपहृतं वि वव्रुः व्यवृण्वन् अलभंत । तथा तेषामंगिरसामर्थाय प्रदिवः पुराण्य आपः अनु ग्मुः अन्वसरन् अन्वगच्छन् । हिताहिताचरणपरा आसन्नित्यर्थः । आवरकस्यासुरस्य वायुना हननादसुरेणाहृतानुषःप्रभृतीन् पुनर्लब्धवंत इत्यर्थः ॥

५. तृतीये छंदोमे प्रउगशस्त्रे ते सत्येनेत्यैंद्रवायवस्तृचः । सूत्रितं च । ते सत्येन मनसा दीध्याना दिवि क्षयंता रजसः पृथिव्यामिति ॥

ते प्रसिद्धाः सत्येन यथार्थेन मनसा मननीयेन स्तोत्रेण युक्ताः दीध्यानाः दीप्यमानाः स्वेन स्वकीयेन स्वविहितेन क्रतुना कर्मणा नित्यनैमित्तिकात्मना युक्तासो युक्ताः एवंभूताः यजमानाः हे इंद्रवायू वीरवाहं वीरैर्विशेषेण ईरयितृभिः स्तोतृभिः वहनीयं प्रापणीयं यद्वा वीरैरश्वैर्वहनीयं तं ईशानयोरीश्वरयोर्वां युवयोः स्वभूतं रथं वहंति स्वं स्वं यज्ञं प्रापयंति । तत्र च पृक्षोऽन्नानि हविर्लक्षणानि आनि सचंते युवामभिसेवंते ॥

६. हे इंद्रवायू ईशानास ईश्वराः प्रभवो ये जनाः नोऽस्मभ्यं गोभिरश्वेभिरश्वैर्वसुभिर्निवासकैः हिरण्यैश्च सहितं स्वः सुष्ठरणीयं सुखं दधंते ददति प्रयच्छंति यद्वा हिरण्यव्यतिरिक्तानि धनानि वसूनि तैर्हिरण्यैश्च सहेत्यर्थः ते सूरयो दातारः विश्वं व्याप्तमायुरन्नं जीवनं वा शत्रूणां स्वभूतं पृतनासु संग्रामेषु अर्वद्भिरश्वैः वीरैः शूरभटैश्च साधनभूतैः सह्युः अभिभवेयुः यद्वा सहार्थे तृतीया अर्वद्भिर्वीरैः पुत्रैश्च सहितं शत्रूणामायुरभिभवेयुरित्यर्थः ॥

७. अर्वंतो न अश्वा इव हविषां वोढारः श्रवसोऽन्नस्य द्वितीयार्थे षष्ठी अन्नं भिक्षमाणा याचमानाः वाजयंतः वाजं बलमात्मन इच्छंतो वसिष्ठाः वयं स्ववसे शोभनरक्षणाय सुष्ठु तर्पणाय वा सुष्टुतिभिः शोभनाभिः स्तुतिभिः इंद्रवायू इंद्रं वायुं च हुवेम आह्वयेमहि । अन्यद्गतम् ॥

इति पंचमस्य षष्ठे द्वादशो वर्गः ॥

---

## 91.

कुविदंगेति सप्तर्चं द्वितीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वायव्यम् । कुविदंगेत्यनुक्रांतम् । गतः सूक्तविनियोगः । वायव्ये पशौ कुविदंगेति वपाया याज्या । सूत्रितं च । कुविदंग नमसा ये वृधास ईशानाय प्रहुतिं यस्त आनडिति ॥

१. दीव्यंति स्तुवंतीति देवाः स्तोतारः पुरा पूर्वस्मिन्काले ये वृधासो वृद्धा देवाः । स्तोतारः कुविदिति बहुनाम अंगेति क्षिप्रनाम कुवित् बहुशः अंग क्षिप्रं कृतेन नमसा वायुविषयेण स्तोत्रेण नमस्कारेण वा अनवद्यासः अवद्यरहिताः आसन् तेऽप्यापि वायवे हवींषि दातुं सूर्येण सह उषसं अवासयन् उषसो व्युष्टिं सूर्योदयं च वायु-

भागार्थं कुर्वतीत्यर्थः । किमर्थम् । मनवे मनुष्याणां बाधिताय बाधितानां पुत्रादीनां रक्षणार्थमित्यर्थः । यद्वा मनवे बाधितायेति षष्ठ्यर्थे चतुर्थी । बाधितस्य मनोः प्रजापतेर्यागे वायवे हवींषि दातुमित्यन्वयः ॥

( P. 133.) २. द्वितीये छंदोमे प्रउगशस्त्र ऐंद्रवायवतृचस्य उशंतेत्येषा प्रथमा । सूत्रितं च । उशंता दूता न दभाय गोपा यावत्तरस्तन्वो यावदोज इत्येका द्वे चेति ॥

हे इंद्रवायू उशंता उशंतौ कामयमानौ दूतौ देवतेर्गतिकर्मणो दूतशब्दः गंतारौ गोपा गोपायितारौ ईदृशौ युवां दभाय हिंसायै न भवतम् । अपि तु मासो मासांश्च पूर्वीर्बह्वीः शरदः संवत्सरांश्च चिरकालमस्मान् पाथः रक्षतम् । अपि च हे इंद्रवायू सुष्टुतिरस्मदीया शोभना स्तुतिः वां युवां इयाना गच्छंती प्राप्नुवंती मार्डीकं सुखं ईट्टे याचते । यद्वा सुखं यथा भवति तथा युवामीट्टे स्तौति । तथा नव्यं प्रशस्यं सुवितं सुष्ठु प्राप्यं धनं च ईट्टे ।

३. नियुत्वद्वायुदेवताके पशौ पीवोअन्नानिति वपाया याज्या । सूत्रितं च । पीवोअन्नान्रयिवृधः सुमेधा राये नु यं जज्ञतू रोदसीमे इति । तथा द्वितीये छंदोमे प्रउग शस्त्रे वायव्यतृचस्यैषैव द्वितीया । सूत्रितं च । पीवोअन्नान्रयिवृधः सुमेधा उच्छन्नुषसः सुदिना अरिप्रा इति ॥

पीवोअन्नान् पीवांसि स्थूलानि प्रभूतान्यन्नानि येषां तान् रयिवृधः रय्या धनेन वृद्धान् एवंभूतानाढ्यजनान् सुमेधाः शोभनप्रज्ञः नियुतां वडवानां स्ववाहानां अभिश्रीरभिश्रयणीयः श्वेतः श्वेतवर्णो वायुः सिषक्ति सेवते । ते च जनाः समनसः समानमनस्काः संतः वायवे वायुमुद्दिश्य यष्टुं वि तस्थुः विविधमवतिष्ठंते । स्थित्वा च ते नरः कर्मणां नेतारो जनाः विश्वेत् विश्वानि सर्वाण्येव स्वपत्यानि शोभनापत्यहेतूनि यद्वा सुष्टु अपतनकारणानि वायुदेवत्यानि कर्माणि चक्रुः कुर्वंति ।

४. द्वितीये छंदोमे प्रउगशस्त्रे ऐंद्रवायवतृचस्य यावत्तर इत्यादिके द्वे ऋचौ । सूत्रं तु पूर्वमेवोदाहृतम् ॥

हे इंद्रवायू युवयोस्तन्वः शरीरस्य तरो वेगो यावदस्ति यावच्च ओजो बलं यावच्च नरः कर्मणां नेतार ऋत्विजः चक्षसा ज्ञानेन दीध्यानाः दीप्यमाना भवंति तस्य सर्वस्यानुरूपं शुचिपा शुचेः सोमस्य पाताराविंद्रवायू शुचिं शुद्धं सोमं अस्मे अस्मदीयं पातं पिबतम् । इदं वेद्यां स्तीर्णं बर्हिश्च आ सदतं पानार्थमासीदतं बर्हिष्युपविशतमित्यर्थः ॥

५. हे इंद्रवायू स्पार्हवीराः स्पृहणीयस्तोतृकान् नियुतः आत्मीयानश्वान् सरथं उभयोः समानमेकं रथं नियुवाना निमिश्रयंतौ युवां अर्वाक् अस्मदभिमुखं यातं गच्छतम् । इद हि इदं खलु मध्वो मधुरस्य सोमस्य अग्रं ग्रहेष्वाद्यमैंद्रवायवाख्यं ग्रहं वां युवयोरर्थं प्रभृतं प्रकर्षेण हृतं होमार्थमुत्तरवेदिं प्रति नीतम् । अध अथ तादृशस्य सोमस्य पानानंतरं प्रीणाना प्रीयमाणौ युवां अस्मे अस्मान् वि मुमुक्तं पापाद्विमोचयतम् ॥

६. प्रथमे छंदोमे प्रउगशस्त्रे ऐंद्रवायवतृचस्य या वां शतमिति तृतीया । सूत्रितं च । या वां शतं नियुतो याः सहस्रमित्येकपातिन्य इति ॥

हे इंद्रवायू या नियुतः शतं शतसंख्याकाः सन्त्यः वां युवां सचंते सेवंते याश्च विश्ववारा विश्वैर्वरणीया नियुतः सहस्रं सहस्रसंख्याकाः सत्यः युवां सचंते सुविदत्राभिः शोभनधनप्रदाभिस्ताभिर्नियुद्भिरर्वाक् अस्मदभिमुखं आ यातं आगच्छतम्। हे नरा नेतारौ प्रतिभृतस्य उत्तरवेदिं प्रति नीतस्य मध्वो मधुरस्य सोमस्य द्वितीयार्थे षष्ठी ईदृशं सोमं पातं पिबतम्॥

७. व्याख्यातेयम् (९०, ७.) अक्षरार्थस्तु। अश्वा इव हविषां वोढारोऽन्नं याचमानाः बलं कामयमाना वासिष्ठा वयं शोभनरक्षणाय शोभनैः स्तोत्रैरिंद्रवायू आह्वयमहीति॥

इति पंचमस्य षष्ठे त्रयोदशो वर्गः॥

---

## 92.

(P. 139.) आ वायो इति पंचर्चं तृतीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वायव्यम्। अनुक्रांतं च। आ वायो पंचेति। शुनासीरीये पर्वणि वायोर्नियुत्वतो यागस्य आ वायो इत्यनुवाक्या। सूत्रितं च। आ वायो भूष शुचिपा उप नः प्र याभिर्यासि दाश्वांसमच्छेति। नियुत्वद्वायुदेवताके पशौ एषैव वपाया अनुवाक्या। प्रथमे छंदोमे प्रउगशस्त्रे वायव्यतृचस्यैषैवाद्या। सूत्रितं च। समुद्रादूर्मिरित्याद्यया वायो भूष शुचिपा इति॥

१. हे शुचिपाः शुचेः शुद्धस्य सोमस्य पातर्वायो नोऽस्माकं उप समीपे आ भूष आगच्छ भू प्राप्तावित्यस्यैतद्रूपम्। हे विश्ववार विश्वैर्वरणीय ते तव वाहनभूता नियुतो वडवाः सहस्रं सहस्रसंख्याका विद्यंते। यत एवमतः शीघ्रमागच्छ। ते तव मद्यं मदकरं सोमलक्षणमंधोऽन्नमुपो उप उ उपायामि उपयतं पात्रे गृहीतमासीत्। हे देव वायो यस्य सोमस्य पूर्वपेयं प्रथमपानं दधिषे दधासि धारयसि। ऐंद्रवायवग्रहे प्रथमे वषट्कारे केवलाय वायवे हूयते द्वितीये त्विंद्रवायुभ्यामिति वायोः प्रथमपानम्। तादृशमंध उपायामीत्यन्वयः॥

२. प्रथमे छंदोमे प्रउगशस्त्रे ऐंद्रवायवतृचस्य प्र सोतेत्याद्या। सूत्रितं च। प्र सोता जीरो अध्वरेष्वस्थाद्ये वायव इंद्रमादनास इति॥

जीरः क्षिप्रकारी सोता अभिषोता अध्वर्युः इंद्राय वायवे च पिबध्यै पानार्थं अध्वरेषु यागेषु सोमं प्रास्थात् प्रातिष्ठिपत् पुरस्तादुत्तरवेदिं प्रापितवान्। हे इंद्रवायू यत् येषु यज्ञेषु मध्वः सोमस्य अग्रियं अग्रभवं प्रथमभागं देवयंतो देवकामा अध्वर्यवः शचीभिः कर्मभिः अभिषवादिलक्षणैर्वां युवयोरर्थं प्र भरंति प्रकर्षेण भरंति संपादयंति तेष्वध्वरेष्वित्यन्वयः॥

३. शुनासीरीये पर्वणि नियुत्वद्वायोर्यागस्य प्र याभिरिति याज्या। सूत्रितं च। प्र याभिर्यासि दाश्वांसमच्छा स त्वं नो देव मनसेति। तद्देवत्ये पशौ एषैव पुरोडाशस्यानुवाक्या। सूत्रितं च। प्र याभिर्यासि दाश्वांसमच्छा नो नियुद्भिः शतिनीभिरिति। प्रथमे छंदोमे प्रउगशस्त्रे एषैव वायव्यतृचस्य तृतीया। सूत्रितं च। आ वायो भूष शुचिपा उप नः प्र याभिर्यासि दाश्वांसमच्छेति॥

हे वायो दुरोणे यज्ञगृहे स्थितं दाश्वांसं हविषां दातारं यजमानं इष्टये यागाय याभिर्नियुद्भिर्वडवाभिरच्छ यासि अभिगच्छसि ताभिरस्मान्प्रत्यागच्छेति शेषः। आगत्य च नोऽस्मभ्यं सुभोजसं शोभनान्नयुक्तं रयिं धनं नि युवस्व नितरां मिश्रय प्रयच्छ। तथा वीरं पुत्रं गव्यं गोसंघं अश्व्यं अश्वसंघं एतदुभयात्मकं राधो धनं च नि युवस्व प्रयच्छ॥

४. प्रथमे छंदोमे प्रउगशस्त्रे ऐंद्रवायवतृचस्य ये वायव इंद्रेति द्वितीया। सूत्रितं च। ये वायव इंद्रमादनासो या वां शतं नियुतो याः सहस्रमिति॥

ये सूरयः स्तोतारः इंद्रमादनासः स्तोत्रैरिंद्रस्य तर्पयितारः तथा वायवे वायोश्च मादनास्तर्पका भवंति ये च आदेवासः आगतैरुपेताः अत एव अर्यः अरेः शत्रोर्नितोशनासो निहंतारः तैरस्मदीयैः सूरिभिः स्तोतृभिः वृत्राणि शत्रून् घ्नंतः हिंसंतः स्याम भवेम। किं कुर्वंतः। अमित्रान् शत्रुभटान् नृभिरस्मदीयैः पुरुषैर्युधा युद्धेभिः सासह्वांसोऽभिभवंतः॥

५. नियुत्वद्वायुदेवताके पशौ आ नो नियुद्भिरिति हविषोऽनुवाक्या। सूत्रितं च। आ नो नियुद्भिः शतिनीभिरध्वरं पीवोअन्नाँरयिवृधः सुमेधा इति। प्रथमे छंदोमे प्रउगशस्त्रे वायव्यतृचस्यैषैव तृतीया। सूत्रितं च। आ नो नियुद्भिः शतिनीभिरध्वरं प्र सोता जीरो अध्वरेष्वस्थादिति॥

हे वायो नोऽस्माकं अध्वरं हिंसारहितं यज्ञं शतिनीभिः शतसंख्यावतीभिः सहस्रिणीभिः सहस्रसंख्यावतीभिश्च नियुद्भिर्वडवाभिः उप आ याहि उपागच्छ। तदनंतरमस्मिन् सवने प्रातःसवने मादयस्व सोमेन तृप्यस्व। अन्यद्गतम्॥

इति पंचमस्य षष्ठे चतुर्दशो वर्गः॥

---

## 93.

(P. 140.) शुचिं न्वित्यष्टर्चं चतुर्थं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैंद्राग्नम्। अनुक्रम्यते हि। शुचिं न्वष्टावैंद्राग्नं त्विति। गतः सूक्तविनियोगः। ऐंद्राग्नस्य पशोर्वपायाः शुचिमित्येषा याज्या। सूत्रितं च। शुचिं नु स्तोमं नवजातमद्य गीर्भिर्विप्रः प्रमतिमिच्छमान इति॥

१. हे वृत्रहणा वृत्राणां शत्रूणां हंताराविंद्राग्नी शुचिं शुद्धं निरवद्यं नवजातं इदानीमुत्पन्नं स्तोममस्मदीयं स्तोत्रमद्यास्मिन्काले नु क्षिप्रं जुषेथां सेवेथां हि यस्मात्सुहवा सुखमाह्वातुं शक्यौ उभा उभौ वां युवां जोहवीमि पुनः पुनराह्वयामि। अत आगत्य सेवेथामित्यर्थः। किंच ता तौ तथाविधौ युवां उशते कामयमानाय यजमानाय वाजमन्नं बलं वा सद्यस्तदानीमेव शीघ्रं धेष्ठा धातृतमौ भवतम्॥

२. हे इंद्राग्नी ता तौ तादृशौ सानसी सर्वैः संभजनीयौ युवां शवसाना शत्रो बलं तद्वदाचरंतौ हि खलु भूतं बलमिव शत्रूणां भयंजनकावास्तामित्यर्थः। कीदृशौ सतौ साकंवृधा सह प्रवृद्धौ शवसा बलेन शूशुवांसा वर्धमानौ तथा रायो धनस्य

भूरेर्बहुलस्य यवसस्यान्नस्य क्षयंतावीश्वरौ । एवंविधौ युवं युवां स्थविरस्य स्थूलस्य घृष्वेः शत्रूणां घर्षकस्य वाजस्यान्नस्य क्रियाग्रहणमपि कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी इंद्रशमन्नं पृंक्तं संयोजयतं अस्मभ्यं प्रयच्छतमित्यर्थः ॥

३. वाजिनो हविष्मंतो विप्रा मेधाविनः प्रमतिं प्रकृष्टां मतिं इंद्राग्न्योरनुग्रहबुद्धिमिच्छमानाः आत्मन इच्छंतः यत् ये यजमानाः विदथं विदंति जानंति देवास्तत्र यष्टव्यत्वेनेति विदथो यज्ञः तं धीभिः कर्मभिः बुद्धिभिर्वा उपो युः उपगच्छंति । उ इति पूरकः । ते नरः कर्मणां नेतारो जनाः अर्वंतो न काष्ठां यथा अश्वाः शीघ्रं युद्धभूमिं व्याप्नुवंति तथा नक्षमाणा ऐंद्राग्नानि कर्माणि व्याप्नुवंत इंद्राग्नी इंद्रमग्निं च जोहुवतः पुनः पुनराह्वयंतो भवंति ॥

४. अनावाहस्यायमिंद्राग्नस्य हविषो गीर्भिरित्येषा याज्या । सूत्रितं च । इंद्राग्नी अवसा गतं गीर्भिर्विप्रः प्रमतिमिच्छमान इति । ऐंद्राग्ने पशौ पुरोडाशस्यैषैव याज्या । सूत्रं तूदाहृतम् ॥

हे इंद्राग्नी प्रमतिं युवयोरनुग्रहबुद्धिं इच्छमान इच्छन् विप्रो मेधावी वसिष्ठः यशसं यशसा युक्तं पूर्वभाजं पूर्वमेव संभजनीयं रयिं धनमुद्दिश्य गीर्भिः स्तुतिभिः ईट्टे युवां स्तौति । हे वृत्रहणा वृत्रस्य हंतारौ सुवज्रा शोभनायुधाविंद्राग्नी नव्येभिर्नवतरैः प्रशस्तैर्इष्णैर्शातव्यैर्धनैर्नोऽस्मान् प्रतिरतं प्रवर्धयतम् ॥

५. मही महत्यौ मिथ्नी परस्परं हिंसंत्यौ यद्वा मेथतिराक्रोशकर्मा परस्परमाक्रोशंत्यौ स्पर्धमाने स्पर्धां कुर्वंत्यौ तनूरुचा – – – हतं हिंस्तं तथा सोमसुता हतं सनतं हिंस्तम् । तथा सोमसुता सोममभिषुण्वता जनेन यजमानसंघेन असोमसुतं जनं हिंस्तम् ॥

इति पंचमस्य षष्ठे पंचदशो वर्गः ॥

(P. 141.) ६. हे इंद्राग्नी इमामु इमामेव नोऽस्मदीयां सोमसुतिं सोमाभिषवक्रियां सौमनसाय सुमनसो भावाय सु सुष्ठु उप यातं उपागच्छतम् । अपि च युवां अस्मान् परित्यज्य नू चित नैव मन्नाथे अन्यान् न मन्येथे अस्मानेव सर्वदा बुध्येथे । हि यस्मादेवं तस्माद्वां युवां शश्वद्भिर्बहुभिर्वाजैरन्नैर्हविर्लक्षणैः आ ववृतीय आवर्तयामि ॥

७. हे अग्ने स त्वं एना एनेन नमसा अन्नेन अस्मदीयेन हविषा समिद्धः संदीप्तः सन् मित्रं वरुणमिंद्रं च अच्छ वोचेः आभिब्रूयाः अयमस्मदीयो रक्षणीय इति कथय । वयं यदागोऽपराधं सीमिति परिग्रहार्थीयः सीं सर्वतो वाङ्मनःकायैश्चकृम कृतवंतो वयं तत्तस्मादागसः सु मृळ अस्मान् सुष्ठु रक्ष । तच्चागः अर्यमादितिर्मित्रादयश्च शिश्रथंतु अस्मत्तो वियोजयंतु ॥

८. हे अग्ने उपलक्षणमेतत् हे इंद्राग्नी एना इष्टीः इमान्यज्ञान् आशुषाणसः आशु शीघ्रं संभजमाना वयं युवोर्युवयोः स्वभूतान्वाजानन्नानि सचा सह युगपदेव अभ्यश्याम अभिप्राप्नुयाम । अपि च इंद्रो विष्णुर्मरुतश्च नोऽस्मान् परि ख्यन् अस्मान्परित्यज्यान्यान मा द्राक्षुः सर्वदास्मानेव पश्यंतु । अन्यद्गतम् ॥

इति पंचमस्य षष्ठे षोडशो वर्गः ॥

## 94.

इयं वामिति द्वादशर्चं पंचमं सूक्तं वसिष्ठस्यार्षमैंद्राग्नम् । द्वादश्यनुष्टुप् शिष्टा गायत्र्यः । तथा चानुक्रांतम् । इयं वां द्वादश गायत्रमंत्यानुष्टुबिति । ज्योतिष्टोमे प्रातःसवने अच्छावाकशस्त्रे आदितो नवर्चः शस्यंते । सूत्र्यते हि । इयं वामस्य मन्मन इति नवेति । आभिप्लविकेषूक्थ्येषु स्तोमेषु वृद्धावच्छावाकस्य प्रातःसवने इदं सूक्तमावापार्थमुत्तमावर्जम् । सूत्रितं च । इयं वामस्य मन्मन इत्येकादशेति । चातुर्विंशिकेऽहनि प्रातःसवने तस्यैवाद्यस्तृचः । सूत्रितं च । इयं वामस्य मन्मन इंद्राग्नी युवामिमे इति ॥

१. हे इंद्राग्नी इयं पूर्व्यस्तुतिः पूर्व्या मुख्या स्तुतिः अस्य मन्मन स्तोतुः अस्माद्वसिष्ठात् वां युवाभ्यां युवयोरर्थं अभ्रान्मेघाद्वृष्टिरिव बह्वी सती अजनि प्रादुर्भूता तां शृणुतमित्युत्तरत्र संबंधः ॥

(P. 142.) २. हे इंद्राग्नी जरितुः स्तोतुः हवमाह्वानं युवां शृणुतम् । श्रुत्वा च गिरस्तदीयाः स्तुतीर्वेनतं संभजतम् । तथा ईशाना ईश्वरौ युवां धियः अनुष्ठितानि कर्माणि पिप्यतं तत्स्थैः फलैः पूरयतम् ॥

३. हे नरा नेताराविंद्राग्नी नोऽस्मान् पापत्वाय पापवत्त्वाय हीनभावाय मा रीरधतं तथा अभिशस्तये शत्रुभिः कृतायाभिशंसनाय मा रारधतं तथा निदे निंदकाय जनाय नोऽस्मान् मा रीरधतं मा वशीकुरुतम् ॥

४. चातुर्विंशिकेऽहनि प्रातःसवने अच्छावाकस्य इंद्रे अग्नेत्ययं षडहस्तोत्रियसंज्ञकस्तृचः । सूत्रितं च । इंद्रे अग्ना नमो बृहत्ता हुवे ययोरिदमिति ॥

अवस्यवः रक्षणकामा वयं इंद्रे देवे अग्ना अग्नौ च बृहद्बृंहणं वर्धकं नमो हविर्लक्षणमन्नं सुवृक्तिं सुप्रवृत्तां स्तुतिं च आ ईरयामहे अभिप्रेरयामः । तथा धिया कर्मणा युक्ताः धेनाः वाङ्नामैतत् अप्रगीताः स्तुतिवाचश्च अभिप्रेरयामः ॥

५. ता हि तौ खलु इंद्राग्नी शश्वंतः बहवः विप्रासो मेधाविनो जनाः ऊतये रक्षणाय इत्था इत्थमनेन प्रकारेण ईळते स्तुवंति । तथा सबाधः समानं बाधमानाः परस्परं बाध्यमाना जनाः वाजसातये अन्नलाभाय तावेवेंद्राग्नी ईळते स्तुवंति । यद्वा वाजसातिरिति संग्रामनाम संग्रामार्थम् ॥

६. विपन्यवः स्तोत्रमिच्छंतः प्रयस्वंतः हविर्लक्षणेनान्नेनोपेताः सनिष्यवः सनिं धनमात्मन इच्छंतो वयं मेधसाता मेधानां सातौ संभजने निमित्तभूते सति हे इंद्राग्नी ता तौ वां युवां गीर्भिः स्तुतिभिः हवामहे आह्वयामहे ॥

इति पंचमस्य षष्ठे सप्तदशो वर्गः ॥

७. अमावास्यायामैंद्राग्नस्य हविष इंद्राग्नी अवसेत्यनुवाक्या । सूत्रितं च । इंद्राग्नी अवसा गतं गीर्भिर्विप्रः प्रमतिमिच्छमान इति ॥

हे चर्षणीसहा चर्षणीनां मनुष्याणां शत्रुभूतानामभिभवितारौ हे इंद्राग्नी अस्मभ्यं

स्तोतृभ्यां देयेन भवता अन्नेन सह आ गतं आगच्छतम् । दुःशंसो दुष्टाभिशंसनः पारुष्यवादी शत्रुश्च नोऽस्मान्मा ईशत ईशिष्ट अस्मान्बाधितुं मा शक्नोतु ॥

८. हे इंद्राग्नी कस्य कस्य चिदपि अररुषो ऽदत्तवतोऽस्य मनुष्यस्य संबंधिनी धूर्तिर्हिंसा नोऽस्मान्मा प्र णक् मा प्राप्नोतु । शर्म सुखं च अस्मभ्यं प्रयच्छतं दत्तम् ॥

९. हे इंद्राग्नी गोमत् गोभिर्युक्तं हिरण्यवत् हिरण्यैः सुवर्णैर्युक्तं अश्वावत् अश्वैश्चोपेतं यद्वसु वां युवामीमहे याचामहे तद्वसु युवयोः प्रसादात् वयं वनेमहि संभजेमहि ॥

१०. चातुर्विंशिकेऽहनि प्रातःसवने अच्छावाकशस्त्रे यत्सोम आ सुत इत्यारंभणीया अहर्गणेषु च द्वितीयादिष्वहःसु एषा प्रातःसवने तेनैव शंसनीया । सूत्रितं च । यत्सोम आ सुते नर इत्यारंभणीयाः शस्त्वेति ॥

सोमे सुते अभिषुते सति नरः कर्मणां नेतार ऋत्विजः सपर्यवः परिचरणकामाः संतः सप्नीवंता प्रशस्ताश्वौ इंद्राग्नी इंद्रमग्निं च यद्यदा आ अजोहवुः आभिहूयंते तदा युवामागच्छतमिति शेषः ॥

११. वृत्रहंतमा वृत्राणामावरकाणां हंतृतमौ मंदाना मोदमानौ या याविंद्राग्नी उक्थेभिः शस्त्रैः गिरा च स्तुत्या च आविवासतः परिचर्येते व्यत्ययेन कर्मणि कर्तृप्रत्ययः आंगूषैरघोषैरन्यैश्च स्तोत्रैः यावाविवासतः परिचर्येते तौ युवां आगच्छतमिति शेषः ॥

१२. हे इंद्राग्नी तौ युवां दुःशंसं दुष्टाभिशंसनं दुर्विद्वांसं दुर्विज्ञानं रक्षस्विनं बलवंतं आभोगं आहत्य अस्मत्तोऽपहृत्य भोक्तारं मर्त्यं मनुष्यं शत्रुं हन्मना हननसाधनेनायुधेन हतं हिंस्तम् । उक्तमेवार्थं दृष्टांतेन दृढयति । उदधि लुप्तोपममेतत् । उदधानं कुंभमिव । यथा कुंभोऽनायासेन भिद्यत एवमनायासेनैव शत्रुमायुधेन युवां हिंस्तम् ॥

इति पंचमस्य षष्ठेऽष्टादशो वर्गः ॥

---

95.

( P. 143. ) प्र क्षोदसेति षडृचं षष्ठं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं सरस्वतीदेवताकम् । तृतीया तु सरस्वद्देवताका । अनुक्रम्यते च । प्र क्षोदसा षट् सारस्वतं तु तृतीया सरस्वत इति । गतः सूक्तविनियोगः । प्रथमे छंदोमे प्रउगशस्त्रे प्र क्षोदसा धायसा सस्र एषेति प्रउगमिति । सारस्वते पशौ प्र क्षोदसेति वपाया याज्या । सूत्रितं च । प्र क्षोदसा धायसा सस्र एषा पावीरवी कन्या चित्रायुरिति ॥

१. एषा नदीवत्निगमा एषा दृश्यमाना नदीरूपा सरस्वती आयसी अयसा निर्मिता पूः पुरीव धरुणं लिंगव्यत्ययः धरुणा धारयित्री धायसा धारकेण क्षोदसा

उदकेन प्र सस्रे प्रधावति शीघ्रं गच्छति । सिंधुः स्यंदनशीला नदीरूपा सा अन्याः विश्वाः सर्वा अपः आपगाः महिना महिम्ना प्रबाबधाना भृशं बाधमाना रथ्येव प्रतीर्णेव विस्तीर्णा सती याति गच्छति । यद्वा रथ्येव रथिनेव यथा रथी रथेन मार्गस्थं तरुगुल्मादिकं चूर्णीकृत्य गच्छति तद्वत् स्वकीयेन वेगेन सर्वं संपिषती गच्छतीत्यर्थः ॥

सारस्वत एव पशौ वपाया एकाचेतदित्यनुवाक्या ।सूत्रितं च । एकाचेतत्सरस्वती नदीनामुत स्या नः सरस्वती जुषाणेति ॥

२. सहस्रवत्सरेण क्रतुना यक्ष्यमाणो नाहुषो नाम राजा सरस्वतीं नदीं प्रार्थयामास सा च तस्मै सहस्रसंवत्सरपर्याप्तं पयो घृतं च प्रददौ। अयमर्थोऽत्र प्रतिपाद्यते। नदीनामन्यासां मध्ये शुचिः शुद्धा गिरिभ्यः सकाशात् आ समुद्रात्समुद्रपर्यंतं यती गच्छंती एका सरस्वती नदी अचेतत् नाहुषस्य प्रार्थनामज्ञासीत् । तथा भुवनस्य भूतजातस्य भूरेर्बहुलस्य रायो धनानि चेतंती प्रज्ञापयंती प्रयच्छंती नाहुषाय राज्ञे घृतं पयश्च सहस्रसंवत्सरक्रतोः पर्याप्तं दुदुहे दुग्धवती दत्तवती ॥

३. सरस्वद्देवताके पशौ स वावृध इति पुरोडाशस्य याज्या । सूत्रितं च । स वावृधे नर्यो योषणासु यस्य व्रतं पशवो यंति सर्वे इति ॥

मध्यस्थानो वायुः सरस्वान् नर्यो नृभ्यो हितो वृषा सेचनसमर्थः शिशुरल्पः प्रादुर्भावसमयेऽल्पतया दृश्यमानो वृषभो वर्षिता एवंभूतः स सरस्वान् यज्ञियासु यज्ञार्हासु योषणासु योषित्सु आत्मनः कलत्रभूतासु मध्यमस्थानास्वप्सु मध्ये वावृधे वर्धते । स तादृशः सरस्वान् मघवद्भ्यो हविष्मद्भ्यो यजमानेभ्यो वाजिनं बलिनं पुत्रं दधाति ददाति । तथा सातये लाभार्थं तन्वं तेषां शरीरं वि मामृजीत विमार्ष्टि लाभार्थं संस्करोतीत्यर्थः । यद्यप्येषा सरस्वतः स्तुतिस्तथापि सरस्वत्याः प्रीणनार्थं तत्स्तवनमिति छांदोमिके सारस्वते तृचेऽस्या उक्तो विनियोगो न विरुध्यते॥

(P.144.) ४. दशरात्रे अष्टमेऽहनि प्रउगे उत स्या न इति सारस्वतः सप्तमस्तृचः । सूत्रितं च । उत स्या नः सरस्वती जुषाणेति प्रउगमिति । सारस्वते पशौ पुरोडाशस्य उत स्या न इत्यनुवाक्या । सूत्रितं च । उत स्या नः सरस्वती जुषाणा सरस्वत्यभि नो नेषि वस्य इति ॥

उत अपि च जुषाणा प्रीयमाणा सुभगा शोभनधना स्या सा सरस्वती नोऽस्माकमस्मिन्यज्ञ उप श्रवत् अस्मदीयाः स्तुतीरुपशृणोतु । कीदृशी सा । मितज्ञुभिः प्रह्वैर्जानुभिः नमस्यैर्नमस्कारैः देवैरियानोपगम्यमाना । चिच्छब्दश्चार्थे । युजा नित्ययुक्तेन राया धनेन च संगता सखिभ्य उत्तरोत्कृष्टतरा । ईदृशी अस्मदीयाः स्तुतीरुपशृणोत्वित्यन्वयः ॥

५. पवित्रेष्ट्यां सारस्वतस्य हविष इ जुह्वाना इति याज्या । सूत्रितं च । इमा जुह्वाना युष्मदा नमोभिर्दधिक्राव्णो अकारिषमिति ॥

हे सरस्वति इमा इमान्यस्मदीयानि हवींषि जुह्वानास्तुभ्यं जुह्वतो वयं नमोभिः त्वद्विषयैर्नमस्कारैः युष्मत्त्वत्सकाशात् आ उपसर्गश्रुतेर्योग्यक्रियाध्याहारः आ ददीमहि धनानीति शेषः । स्तोमं चास्मदीयं स्तोत्रं प्रति जुषस्व प्रतिसेवस्व । वयं च प्रियतमे

अतिशयेन प्रिये तव स्वकीये शर्मन् शर्मणि सुखे दधानाः निधीयमानाः संतः शरणं न वृक्षनाभयभूतं वृक्षमिव उप स्थेयाम त्वामुपतिष्ठेम संगच्छेमहि ॥

६. हे सुभगे शोभनधने सरस्वति अयं वसिष्ठः ते – – –ऋतस्य यज्ञस्य संबंधिन्यौ द्वारौ पूर्वापरे व्यावः विवृणोति । उ इति पूरकः । हे शुभ्रे शुभ्रवर्णे देवि वर्ध वर्धस्व । तथा स्तुवते स्तोत्रं कुर्वते वसिष्ठाय वाजान् अन्नानि रासि प्रदेहि । अन्यद्गतम् ॥

इति पंचमस्य षष्ठ एकोनविंशो वर्गः ॥

---

96.

बृहदु गायिष इति षडृचं सप्तमं सूक्तं वसिष्ठस्यार्षम् । आद्या बृहती तृतीया प्रस्तारपंक्तिः शिष्टास्तिस्रो गायत्र्यः । आद्यस्तृचः सरस्वतीदेवताकः अंत्यश्च सरस्वद्देवताकः । तथा चानुक्रांतम् । बृहदु प्रगाथः प्रस्तारपंक्तिः परास्तिस्रो गायत्र्यः सरस्वत इति । पंचमेऽहनि प्रउगशस्त्रे आद्यः प्रगाथः सरस्वतस्तृचः । सूत्रितं च । बृहदु गायिष इति बार्हतं प्रउगं प्रगाथानेकं इति ॥

१. अनया ऋषिरात्मानं संबोध्य सरस्वत्याः स्तुतौ प्रेरयति । हे वसिष्ठ त्वं बृहदु बृहदेव महदेव वचः स्तोत्रं गायिषे गायसि । किमर्थम् । नदीनां मध्ये असुर्या असुराशब्दाच्चतुर्थ्येकवचनस्य ड्यादेशः असुरायै बलवत्यै नदीरूपायै सरस्वत्यै अस्याः प्रीणनार्थमित्यर्थः । तथा रोदसी द्यावापृथिव्योः स्थितां दिवि देवतारूपेण भूम्यां वाग्रूपेण निवसंतीं सरस्वतीमित् सरस्वतीमेव सुवृक्तिभिः सुष्ठु दोषवर्जितैः स्तोमैः स्तोत्रैर्मह्य पूजय सर्वदा सरस्वतीमेव स्तुहि नान्यां देवतामिति भावः ॥

२. हे शुभ्रे शुभ्रवर्णे सरस्वति यत् यस्यास्ते तव महिना महिम्ना उभे अंधसी उभयविधं दिव्यं पार्थिवं चान्नं ग्राम्यमारण्यं वा पूरवः पूरयितव्या मनुष्याः अधिक्षियंति अधिगच्छंति सा त्वं अवित्री रक्षित्री सती नोऽस्मान् बोधि बुध्यस्व । अपि च मरुत्सखा मरुतां माध्यमिका देवगणाः ते सखायो यस्या माध्यमिकाया वाचः तादृशी त्वं मघोनां हविर्लक्षणधनोपेतानामस्माकं राधो धनं चोद प्रेरय ॥

३. भद्रा कल्याणी भजनीया वा सरस्वती भद्रमित् भद्रमेव कल्याणमेव कृणवत् अस्माकं करोतु । तथा अकवारी अकुत्सितगमना वाजिनीवती अन्नवती चेतति चेतयतु अस्मान् प्रज्ञापयतु । यद्वा मदीयं स्तोत्रं चेतति जानातु । तथा जमदग्निवत् जमदग्निना ऋषिणेव मया गृणाना स्तूयमाना वसिष्ठवत् अर्हार्थे वतिप्रत्ययः वसिष्ठार्हं वसिष्ठस्यानुरूपं स्तुवाना स्तूयमाना च भव ॥

(P. 145.) ४. सरस्वद्देवताके पशौ जनीयंत इति तिस्रः पुरोडाशहविषां क्रमेणानुवाक्याः । सूत्रितं च । जनीयंतो न्वग्रव इति तिस्रो दिव्यं सुपर्णं वायसं बृहंतमिति ॥

जनीयंतः जायंत आत्मनस्त्वपत्यानीति जनयो जायाः ता इच्छंतः पुत्रीयंतः पुत्रान्का-

मयमानाः सुदानवः शोभनदानाः अमवः उपगंतारो वयं नु अद्य सरस्वंतं देवं हवामहे स्तुमहे आह्वयामहे वा ॥

५. हे सरस्वः सरस्वन् देव ते त्वदीया ये ऊर्मयो जलसंघा मधुमंतो रसवंतः घृतश्चुतः घृतस्य वृष्ट्युदकस्य क्षारिणो भवंति तेभिस्तैरूर्मिभिः नोऽस्माकमविता रक्षिता भव ॥

६. अन्वारंभणीयायां सरस्वतो यागस्य पीपिवांसमित्यनुवाक्या । सूत्रितं च । पीपिवांसं सरस्वतो दिव्यं सुपर्णं वायसं बृहंतमिति ॥

पीपिवांसं प्रवृद्धं सरस्वतो देवस्य स्तनं शब्दायमानं स्तनवद्रसाधारं वा मेघं भक्षीमहि भजेमहि प्राप्नुयामः । यो विश्वदर्शतो विश्वैः सर्वैर्दर्शतो भवति दृश्यमानो भवति तं स्तनं मेघमित्यर्थः । तथा प्रजां पुत्रादिरूपां इषमन्नं च सरस्वतः प्रसादाद्भक्षीमहि ॥

इति पंचमस्य षष्ठे विंशो वर्गः ॥

---

## 97.

यज्ञे दिव इति दशर्चमष्टमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभम् । प्रथमा ऐंद्री तृतीयानवम्योरिंद्राब्रह्मणस्पती देवता दशम्या इंद्राबृहस्पती शिष्टानां तु बृहस्पतिः । तथा चानुक्रांतम् । यज्ञे दशैंद्यादि बार्हस्पत्यमंत्यैंद्री च तृतीयानवम्यावैंद्राब्राह्मणस्पत्ये इति । आग्निमारुतिकेषूक्थ्येषु तृतीयसवने स्तोत्रवृद्धौ ब्राह्मणाच्छंसिन इदमुत्तरं च सूक्तमावापार्थम् । सूत्रितं च । यज्ञे दिव इति ॥

१. यत्र यस्मिन्यज्ञे देवयवो देवान्कामयमाना नरो नेतार ऋत्विजो मदंति हृष्यंति यत्र यस्मिंश्च सवनानि अभिषोतव्याः सोमाः इंद्राय इंद्रार्थं सुन्वे अभिषूयंते पृथिव्याः संबंधिनि नृषदने नृणां नेतॄणां सदनभूते तस्मिन्यज्ञे प्रथमं सर्वेभ्यो देवेभ्यः पूर्वं दिवो द्युलोकात् गमत् आगच्छतु । किमर्थम् । मदाय मदार्थं सोमं पातुमित्यर्थः । तथा वयश्च गंतारः तदीया अश्वाश्च गमत् आगच्छंतु ॥

२. हे सखायः समानख्यानाः स्तोतारो वयं दैव्या दैव्यानि देवसंबंधीनि अवांसि रक्षणानि आ वृणीमहे प्रार्थयामहे । नोऽस्माकं हविः बृहस्पतिः बृहतां पालयिता देवः आ मंहे महतिर्दानार्थः आ महते आदत्ते लोपस्त आत्मनेपदेष्विति तलोपः । यो बृहस्पतिः पराचतो दूरदेशात् धनान्याहृत्य पुत्रेभ्यः पितेव नोऽस्मभ्यं दाता भवति तस्मै मीळ्हुषे सेक्त्रे बृहस्पतये अनागाः अनागसः अनपराधा यथा वयं भवेम हे सखायः तथा यूयं परिचरतेति शेषः ॥

३. ज्येष्ठं प्रशस्यतमं सुशेवं सुसुखं ब्रह्मणो मंत्रस्य पतिं पालयितारं एतत्संज्ञं तमु तमेव देवं नमसा नमस्कारेण हविर्भिश्चरुपुरोडाशादिभिश्च सार्धं गृणीषे गृणे स्तुवे । अपि च महि महांतमिंद्रं दैव्यः देवार्हः श्लोकः अस्मदीयः स्तावको मंत्रः सिषक्तु सेवताम् । ब्रह्मणोऽन्नस्य मंत्रस्य वा देवकृतस्य देवैः स्तोतृभिः कृतस्य य इंद्रो ब्रह्मणस्पतिर्वा राजा ईश्वरो भवति तमिंद्रं तं ब्रह्मणस्पतिमिति संबंधः ॥

(P. 146.) ४. प्रेष्ठः प्रियतमः स बृहस्पतिः नोऽस्माकं योनिं स्थानं वेदिलक्षणम् आ सदतु आसीदतु आगत्योपविशतु । यो बृहस्पतिः विश्ववारः विश्वैर्वरणीयो योऽस्ति भवति । अपि च रायो धनस्य सुवीर्यस्य शोभनवीर्यस्य च यः कामोऽस्माकमभिलाषोऽस्ति तं काममस्मभ्यं दात ददातु । काम्यमानं प्रयच्छत्वित्यर्थः । तथा सश्चतः उपद्रवैः संसक्तान् नोऽस्मानरिष्टानहिंसितान् कृत्वा अति पर्षत् अतिपारयति शत्रून् ॥

५. तं सर्वत्र भोक्तव्यतया प्रसिद्धं अमृताय अमरणत्वाय जीवनाय जुष्टं पर्याप्तमर्कमर्चनसाधनमन्नं पुराजाः पुराजाता इमेऽमृतासः अमरणा देवाः बृहस्पतेराज्ञया नोऽस्मभ्यं आ धासुः प्रदद्युः । वयं च शुचिक्रंदं शुद्धस्तोत्रं पस्त्यानां पस्त्यमिति गृहनाम तेन तद्वंतो लक्ष्यंते गृहिणां यजतं यष्टव्यं अनर्वाणं अप्रत्यृतं केनाप्यप्रतिगतं बृहस्पतिं बृहतां पालकं देवं हुवेम आह्वयाम स्तुयेम वा ॥

इति पंचमस्य षष्ठ एकविंशो वर्गः ॥

६. शग्मासः शग्माः सुखकराः शग्मा वा अरुषासः आरोचमानाः सहवाहः संहत्य वाहका अश्वाः तं बृहस्पतिं वहंति वहंतु यस्य बृहस्पतेः सहश्चित् बलं च भवति नीळवत् नीळं निलयो निवासः तद्युक्तं सधस्थं सहस्थानं च यस्य तं बृहस्पतिमित्यन्वयः । कीदृशा अश्वाः । नभो न आदित्यमिव अरुषं आरोचमानं रूपं वसानाः धारयंतः ॥

७. स हि स खलु बृहस्पतिः शुचिः शुद्धः शतपत्रः बहुविधवाहनः स एव शुंध्युः सर्वेषां शोधयिता हिरण्यवाशीः वाशीति वाङ्नाम हितरमणीयवाक् । यद्वा वाशीभिस्तक्षताश्मन्मयीभिरिति निगमात् वाशी आयुधं स्वर्णमयायुधः इषिरः गंता अभ्येषणीयो वा स्वर्षाः स्वर्गस्य संभक्ता यद्वा सरणशीलस्योदकस्य सनिता दाता स एव बृहस्पतिः स्वावेशः सुनिवासः ऋष्वः दर्शनीयः । ईदृशो देवः सखिभ्यः स्तोतृभ्यः पुरु बहुलं आसुतिमन्नं करिष्ठः कर्तृतमो दातृतमो भवति ॥

८. देवी देव्यौ दानादिगुणयुक्ते देवस्य बृहस्पतेर्जनित्री जनयित्र्यौ रोदसी द्यावापृथिव्यौ महित्वा महत्त्वेन युक्तं बृहस्पतिं ववृधतुः वर्धयामासतुः । हे सखायो यूयमपि दक्षाय्याय वर्धनीयाय द्वितीयार्थे चतुर्थी वर्धनीयं तं बृहस्पतिं दक्षत वर्धयत । स च बृहस्पतिः ब्रह्मणे बृंहिताय प्रभूतायान्नाय तदर्थं सुतरा सुतरणानि सुखेन तरणीयानि सुगाधा सुखेनावगाहनीयानि उदकानि करत् करोतु ॥

(P. 147.) ९. हे ब्रह्मणस्पते तुभ्यं वज्रिणे वज्रवते इंद्राय च वां युवाभ्यां तादर्थ्ये चतुर्थी ब्रह्म मंत्ररूपा इयं सुवृक्तिः सुप्रवृत्ता स्तुतिः अकारि मया कृताभूत् । तौ युवां धियोऽस्मदीयानि कर्माणि अविष्टं रक्षतम् । तथा पुरंधीः पुरुधीः बह्वीः स्तुतीः जिगृतं निगिरतं शृणुतमिति यावत् । अर्यः अरीः अभिगंत्रीः वनुषां संभक्तॄणामस्माकं अरातीः शत्रुसेनाः जजस्तं उपक्षपयतम् ॥

१०. तृतीयसवन उक्थ्ये ब्राह्मणाच्छंसिनो बृहस्पते युवमिति शस्त्रयाज्या । सूत्रितं च । बृहस्पते युवमिंद्रश्च वस्व इति याज्येति । वाजपेयेऽतिरिक्तोक्थस्य एषैव परिधानीया । सूत्रितं च । बृहस्पते युवमिंद्रश्च वस्व इति परिधानीयेति ॥

हे बृहस्पते त्वं च इंद्रश्च युवां दिव्यस्य दिवि भवस्य वस्वो वसुनो धनस्य ईशाथे । अतः कारणात् स्तुवते स्तोत्रं कुर्वते कीरये स्तोतृनामैतत् स्तोत्रे रयिं धनं धत्तं दत्तम् । चिदिति पूरणः । अन्यद्गतम् ॥

इति पंचमस्य षष्ठे द्वाविंशो वर्गः ॥

---

## 98.

अध्वर्यव इति सप्तर्चं नवमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैंद्रं सप्तम्यैंद्राबार्हस्पत्या । तथा चानुक्रांतम् । अध्वर्यवः सप्तोक्तदेवतांत्येति । पूर्वसूक्तेन सहोक्तो विनियोगः ॥

१. हे अध्वर्यवोऽध्वरस्य नेतार ऋत्विजः क्षितीनां जनानां मध्ये वृषभाय श्रेष्ठायेंद्राय अरुणमारोचमानं दुग्धं अभिषुतं अंशुं सोमं जुहोतन जुहुत । अवपानं अवक्रम्य स्थितं दूरस्थं पातव्यं सोमं गौरात् गौरमृगादपि वेदीयान् अतिशयेन विद्वान् इंद्रः सुतसोमं अभिषुतसोमं यजमानमिच्छन् अन्विच्छन् विश्वाहा विश्वान्यहानि इत् एव सर्वदैव याति गच्छति । अतस्तस्मा इंद्राय सोमं जुहुतेत्यन्वयः ॥

२. हे इंद्र प्रदिवि प्रगतेषु दिवसेषु पूर्वस्मिन्काले चारु शोभनं यत्सोमलक्षणमन्नं दधिषे पानेनोदरे धारयसि अस्य सोमस्य पीतिमित् पानमेव दिवेदिवे प्रतिदिवसं इदानीमपि वक्षि कामयसे वश कांताविस्यस्य सिपि शपो लुकि षत्वकत्वषत्वेष्वेतद्रूपम् । उतापि च हे इंद्र हृदा हृदयेन उतशब्दश्चार्थे मनसा च जुषाणः सेवमानः उशन् अस्मान्कामयमानस्त्वं प्रस्थितान् पुरस्तान्नीतान् उत्तरवेदिस्थान् सोमान्पाहि पिब ॥

३. हे इंद्र त्वं जज्ञानो जायमान एव सहसे बलाय सोमं पपाथ पीतवानसि । ते तव महिमानं महत्त्वं माता त्वदीया जननी अदितिः प्रोवाच प्रोक्तवती । संवादसूक्तेऽयं पंथा इत्यादिकेनहीं न्वस्येत्यर्धर्चादारभ्य अदित्या इंद्रं मातेत्यस्योक्तत्वात् । अतः कारणात् हे इंद्र त्वमुरु विस्तीर्णमंतरिक्षं आ पप्रथ स्वतेजसा आपूरितवानसि । अपि च युधा युद्धेन देवेभ्यः स्तोतृभ्यो देवेभ्य एव वा वरिवो धनं चकर्थ कृतवानसि ॥

(P. 148.) ४ हे इंद्र महतः प्रभूतान् मन्यमानान् शत्रून् यद्यदा योधयाः अस्माभिर्योधयेः तैः सह योद्धुं बलं प्रयच्छेरित्यर्थः । तदानीं शाशदानान् हिंसतस्तान् शत्रून् बाहुभिः आयुधानिरपेक्षैर्हस्तैरेव त्वत्प्रसादात्साक्षाम सहेम अभिभवेम । यद्वा यदि वा हे इंद्र नृभिर्नेतृभिर्महद्भिर्वृतः परिवृतः त्वमेवाभियुध्याः अस्मदीयान् शत्रूनभियुध्यस्व सौश्रवसं श्रवोऽन्नं यशो वा शोभनस्य श्रवसा हेतुं तमाजिं संग्रामं त्वया सहायेन वयं जयेम ।

५. इंद्रस्य कृतानि वीर्यकर्माणि प्रथमा प्रथमानि पुरातनानि प्रवोचं प्रब्रवीमि । मघवा मघवानिन्द्रः या यानि चकार कृतवान् नूतना नूतनान्यभिनवानि च तानि प्रवोचम् । यदेत् यदेव अदेवीः आसुरीर्मायाः तैः कृतानि असहिष्ट अभ्यभूत् अथ अनंतरमेव अस्येंद्रस्य सोमः केवलः असाधारणोऽभवत् । तदाप्रभृत्येव सोमस्येंद्रस्य चासाधारणः संबंधो जात इत्यर्थः ॥

६. हे इंद्र पशव्यं पशवो द्विविधा द्विपादश्चतुष्पादश्च तेभ्यो हितं अभितः सर्वतो विद्यमानं इदं विश्वं सर्वं जगत् तव तवैव स्वभूतं सूर्यस्य प्रेरकस्यादित्यस्य चक्षसा तेजसा यद्विश्वं पश्यसि त्वं प्रकाशयासि। अपि च हे इंद्र एक एव त्वं गोपतिरसि। न केवलमेकस्या एव गोः पतिरपि तु सर्वासामित्याह गवामिति। अतः कारणात् ते त्वया प्रयतस्य प्रत्तस्य द्वितीयार्थे षष्ठी प्रत्तं वस्वो धनं भक्षीमहि भजेमहि॥

७. व्याख्यातेयम् (९७. १०.)। अक्षरार्थस्तु। हे बृहस्पते त्वं चेंद्रश्च युवां दिव्यस्य पार्थिवस्य चोभयविधस्य धनस्येश्वरौ भवथः। तौ युवां स्तुवते स्तोत्रे धनं दत्तमिति॥

इति पंचमस्य षष्ठे त्रयोविंशो वर्गः॥

---

## 99.

परो मात्रयेति सप्तर्चं दशमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभम्। उरुं यज्ञायेत्याद्यास्तिस्र ऐंद्रावैष्णव्यः शिष्टाः केवलविष्णुदेवताकाः। तथा चानुक्रांतम्। परो वैष्णवं तूरुमित्यैंद्राश्च तिस्र इति। गतः सूक्तविनियोगः। विष्णुदेवताके पशौ परो मात्रयेति पुरोडाशस्य याज्या। सूत्रितं च। परो मात्रया तन्वा वृधानेरावती धेनुमती हि भूतमिति॥

१. पर इति सकारांतं परस्तादित्यस्यार्थे परशब्दाच्छांदसोऽसिप्रत्ययः परो दिवा पर एना पृथिव्येति यथा। मात्रयेति व्यत्ययेन तृतीया। मात्रया परः परस्ताद्वर्तमानया अपरिमितया तन्वा शरीरेण वृधान वर्धमान हे विष्णो ते तव महित्वं महत्त्वं नान्वश्नुवंति नानुव्याप्नुवंति। त्रैविक्रमसमये यत्तव माहात्म्यं तत्सर्वैरपि जनैर्ज्ञातुं न शक्यत इत्यर्थः। ते तव उभे रजसी उभौ लोकौ पृथिव्या आरभ्य पृथिवीमंतरिक्षं च विद्म जानीमो वयं चक्षुषोपलभामहे नान्यत्। हे देव द्योतमान विष्णो त्वमेव परमस्य स्वर्गादेरुत्कृष्टलोकस्य द्वितीयार्थे षष्ठी परमं लोकं वित्से जानासि। अतस्तव महत्त्वं न केनापि व्याप्तुं शक्यमिति भावः॥

(P. 149.) २. पूर्वोक्त एव पशौ न ते विष्णो इति वपाया अनुवाक्या। सूत्रितं च। न ते विष्णो जायमानो न जातस्त्वं विष्णो सुमतिं विश्वजन्यामिति॥

हे देव दानादिगुणयुक्त विष्णो ते तव महिम्नः महत्त्वस्य परं विप्रकृष्टं अंतमवसानं जायमानः प्रादुर्भवन् जनः नाप न प्राप्नोति। तथा जातः प्रादुर्भूतोऽपि जनो नैव प्राप्नोति। तव महत्त्वस्यावसानं नास्ति अत एव सर्वैर्न ज्ञायत इति भावः। कोऽसौ महिमा तमाह। ऋष्वं दर्शनीयं बृहंतं महांतं नाकं द्युलोकं उदस्तभ्नाः त्वमूर्ध्वमधारयः यथा अधो न पतति तथा। पृथिव्या भूमेः संबंधिनीं प्राचीं ककुभं च दाधर्थ धारितवानसि। उपलक्षणमेतत् सर्वस्य भूतजातस्य। तथा च मंत्रांतरम्। य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वेति॥

३. पूर्वोक्त एव पशौ इरावती इति हविषो याज्या। सूत्रितं च। इरावती धेनुमती हि भूतं विश्वकर्मन्हविषा वावृधान इति द्वे इति॥

हे द्यावापृथिव्यौ मनुषे स्तुवते मनुष्याय दशस्या दित्सया युक्ते युवां इरावती अन्नवत्यौ धेनुमती गोमत्यौ सूयवसिनी शोभनयवसे च भूतमभूतम् । हिशब्दः प्रसिद्धौ । विष्णुना विक्रांतत्वात् युवामेवमेव खलु पूर्वमभूतमित्यर्थः । हे विष्णो एते इमे रोदसी द्यावापृथिव्यौ व्यस्तभ्नाः विविधमधारयः । पृथिवीमूर्ध्वमुखत्वेनेति विविधत्वम् । अपि च पृथिवीं प्रथितामिमां भूमिं अभितः सर्वत्र स्थितैर्मयूखैः दाधर्थ धारितवानसि । यथा न चलति तथा दृढीकृतवानित्यर्थः । पर्वता हि विष्णोः स्वभूताः । विष्णुः पर्वतानामधिपतिरिति श्रुतेः ॥

४. हे इंद्राविष्णू यज्ञाय यजमानाय उरुं विस्तीर्णं लोकं स्वर्गाख्यं चक्रथुरु कृतवंतौ खलु युवाम् । किं कुर्वंतौ । सूर्यं सर्वस्य प्रेरकमादित्यं उषसं तमोनिवारकमुषःकालं अग्निं च असुरैरावृतं जनयंतौ पुनः प्रादुर्भावयंतौ । हे नरा नेताराविंद्राविष्णू वृषशिप्रस्य एतत्संज्ञस्य दासस्य चित् उपक्षपयितुरसुरस्य मायाः पृतनाज्येषु संग्रामेषु जघ्नथुः जिहिंसथुः । युवां सूर्यादिकं जनयंतावित्युच्यते ॥

५. हे इंद्राविष्णू दृंहिताः दृढीकृताः नव नवतिं च नवोत्तरनवतिसंख्याकाः पुरः पुराणि शंबरस्य स्वभूतानि श्नथिष्टं अहिंसिष्टम् । श्नथ हिंसायाम् । अपि च शतं सहस्रं च वर्चिनोऽसुरस्य वीरान् अप्रति प्रतिद्वंद्विनो यथा न भवंति तथा साकं सह संघश एव हथः अहिंसिष्टम् । यो वर्चिनः शतमिंद्रः सहस्रमिति हि निगमांतरम् ॥

६. बृहती महतीयं मनीषा मननीया स्तुतिः बृहंता बृहंतौ महांतौ उरुक्रमा विस्तीर्णविक्रमौ । विष्णुना सहैकार्थीभावादिंद्रस्याप्युरुक्रमत्वम् । तवसा तव इति बलस्य वृद्धेर्वा नामधेयं तद्वंतौ एवंभूतौ युवां वर्धयंती प्रवृद्धौ कुर्वती अस्माभिः कृता । हे विष्णो हे इंद्र विदथेषु यज्ञेषु वां युवाभ्यां स्तोमं उक्तलक्षणं स्तोत्रं ररे ददे रा दान इति धातुः तौ युवां वृजिनेषु इषोऽन्नानि पिन्वतं अस्मभ्यं वर्धयतम् ॥

७. अभ्युदयेष्टौ विष्णोः शिपिविष्टस्य वषट्त इत्येषानुवाक्या । सूत्रितं च । भद्रा ते हस्ता सुकृतोत पाणी वषट्ते विष्णवास आ कृणोमीति ॥

हे विष्णो ते तुभ्यं आसः आस्यात् आ अभिमुखं वषट् कृणोमि करोमि । वषट्कारेण हविर्होवयामि । हे शिपिविष्ट शिपयो रश्मयः तैराविष्ट विष्णो तद्वषट्कृतं मे मदीयं हव्यं हविर्जुषस्व सेवस्व । सुष्टुतयः शोभनस्तुत्यात्मिका गिरो वाचश्च त्वां वर्धंतु वर्धयंतु । अन्यद्गतम् ॥

इति पंचमस्य षष्ठे चतुर्विंशो वर्गः ॥

---

## 100.

(P. 150.) १. नू मर्त इति सप्तर्चमेकादशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वैष्णवम् । नू मर्त इत्यनुक्रांतम् । उक्थ्येऽच्छावाकशस्त्रे इदं शंसनीयम् । सूत्रितं च । ऋतुर्जनित्री नू मर्तो दयते सनिष्यन्निति ॥

स मर्तो मनुष्यः सनिष्यन् धनमिच्छन् नु क्षिप्रं दयते धनमाप्नोति । दयतिरादा-नार्थे द्रष्टव्यः । यो मनुष्य उरुगायाय बहुभिः कीर्तनीयाय विष्णवे दाशत् हवींषि दद्यात् । यश्च सत्राचा सहांचता मनसा मननेन स्तोत्रेण प्र यजाते प्रकर्षेण पूजयेत् । एतावंतं एतावत्परिमाणं महांतं नर्यं नरेभ्यो हितं विष्णुं आविवासात् नमस्कारादिभिः परिचरेत् स मर्तो दयत इत्यन्वयः । यद्वा सनिष्यन्निति सनतेर्लाभार्थस्य लृटि रूपम् । स मर्तः सनिष्यन् धनादीनि लप्स्यमानो भवन्नेव हविरादिकं नु क्षिप्रं दयते विष्णवे ददातीति योज्यम् ॥

२. विष्णुदेवत्ये पशौ पुरोडाशस्य त्वं विष्णो इत्यनुवाक्या । सूत्रितं च । त्वं विष्णो सुमतिं विश्वजन्यां वि चक्रमे पृथिवीमेष एतामिति ॥

हे एवयावः एवा प्राप्तव्याः कामाः तान् यापयति प्रापयति स्तोतॄनित्येवयावः हे एवयावन् विष्णो त्वं विश्वजन्यां सर्वजनहितां दोषैर्वियुक्तां सुमतिं अनुग्रहबुद्धिं दाः अस्मभ्यं देहि । सुवितस्य सुष्ठु प्राप्तव्यस्य भूरेर्बहुलस्य अश्वावतोऽश्वयुक्तस्य पुरुश्चंद्रस्य पुरूणां बहूनामाह्लादकस्य रायो धनस्य पृचः संपर्को नोऽस्माकं यथा भवति तथा देहीत्यन्वयः ॥

३. वैष्णवस्योपांशुयाजस्य त्रिर्देव इति याज्या । सूत्रितं च । इदं विष्णुर्वि चक्रमे त्रिर्देवः पृथिवीमेष एतामिति । वैष्णव्ये पशावप्येषैव वपाया याज्या । सूत्रितं च । त्रिर्देवः पृथिवीमेष एतां परो मात्रया तन्वा वृधानेति ॥

एष देवो दानादिगुणयुक्तो विष्णुः शतर्चसं शतसंख्यान्यर्चींषि यस्यास्तादृशीमेतां पृथिवीं उपलक्षणमेतत् पृथिव्यादीन् त्रीन् लोकान्महित्वा महत्त्वेन त्रिर्वि चक्रमे त्रिभिः पदैर्विक्रांतवान् । तवसः तवस्विनो वृद्धादपि तवीयान् तवस्वितरो विष्णुः प्रास्तु अस्माकं प्रभवतु स्वामी भवतु । अस्य स्थविरस्य वृद्धस्य विष्णोर्नाम नामकं रूपं विष्णुरित्येतन्नामैव वा त्वेषं हि यस्माद्दीप्तं तस्मात्कारणात्स विष्णुः प्रभवत्वित्यर्थः ॥

४. पूर्वोक्त एव पशौ वि चक्रम इति वपाया अनुवाक्या । सूत्रितं च । वि चक्रमे पृथिवीमेष एतां त्रिर्देवः पृथिवीमेष एतामिति ॥

एष देवो विष्णुः एतां पृथिवीं पृथिव्यादीनिमांस्त्रीन् लोकान् क्षेत्राय निवासार्थं मनुषे स्तुवते देवगणाय दशस्यन् असुरेभ्योऽपहृत्य प्रदास्यन् वि चक्रमे विक्रांतवान् । अस्य च विष्णोः कीरयः स्तोतारो जनासो जनाः ध्रुवासो निश्चला भवंति । ऐहिकामुष्मिकयोर्लाभेन स्थिरा भवंतीत्यर्थः । सुजनिमा शोभनानि जनिमानि कीर्तनस्मरणादीनि सुखहेतुभूतानि यस्य तादृशो विष्णुः उरुक्षितिं विस्तीर्णनिवासं चकार स्तोतृभ्यः करोति ॥

५. तृतीयसवनेऽतिरात्रादूर्ध्वं सोमातिरेके सति नैमित्तिके होतुः शस्त्रे प्र तत्ते अद्येति स्तोत्रियस्तृचः । अभ्युदयेष्टौ विष्णोः शिपिविष्टस्य प्र तत्ते अद्येति याज्या । सूत्रितं च । वषट् ते विष्णवास आ कृणोमि प्र तत्ते अद्य शिपिविष्ट नामेति ॥

हे शिपिविष्ट रश्मिभिराविष्ट विष्णो ते तव तत्प्रसिद्धं विष्णुरिति प्रख्यातं नाम अर्यः स्वामी स्तुतीनां हविषां वा तथा वयुनानि ज्ञातव्यान्यर्थजातानि विद्वान् जानन्नहं अ-

द्येदानीं प्र शंसामि प्रकर्षेण स्तौमि। तवसं प्रवृद्धं तं त्वा त्वां विष्णुं अतव्यान् अतवीयान् अवृद्धतरोऽहं गृणामि स्तौमि। कीदृशम्। अस्य रजसो लोकस्य पराके दूरदेशे क्षयंतं निवसंतम्॥

(P.151.) ६. पुरा खलु विष्णुः स्वं रूपं परित्यज्य कृत्रिमं रूपांतरं धारयन् संग्रामे वासिष्ठस्य साहाय्यं चकार। तं जानन् ऋषिरनया प्रत्याचष्टे। अत्र निरुक्तम्। शिपिविष्टो विष्णुरिति विष्णोर्द्वे नामनी भवतः। कुत्सितार्थीयं पूर्वं भवतीत्यौपमन्यवः। किं ते विष्णोऽप्रख्यातमेतद्भवत्यप्रख्यापनीयं यन्नः प्रब्रूषे शेप इव निर्वेष्टितोऽस्मीत्यप्रतिपन्नरश्मिः। अपि वा प्रशंसानामैवाभिप्रेतं स्यात्। किं ते विष्णो प्रख्यातमेतद्भवति प्रख्यापनीयं यदुत प्रब्रूषे शिपिविष्टोऽस्मीति प्रतिपन्नरश्मिः। शिपयोऽत्र रश्मय उच्यंते तैराविष्टो भवति। मा वर्पो अस्मदपगूह एतत्। वर्प इति रूपनाम वृणोतीति सतः। यदन्यरूपः समिथे संग्रामे भवसि संयतरश्मिरिति। तत्र कुत्सितार्थपक्षे योजना। हे विष्णो ते तव तन्नाम किं परिचक्ष्यं प्रख्यापनीयं भूत् भवति। किंशब्दः क्षेपे। अप्रख्यापनीयमेव तद्भवति। यन्नामास्मभ्यं प्र ववक्षे प्रब्रूषे शिपिविष्टोऽस्मीति। अंतर्णीतोपमानमेतत्। शेप इव निर्वेष्टितस्तेजसा अनाच्छादितो भवामीति। तच्छीलार्थत्वादिदं नाम न प्रशस्तमित्यर्थः। तन्नाम किं परिचक्ष्यं वर्जनीयं परित्याज्यम्। विरुद्धार्थप्रतिपादकत्वात्त्वत एव परित्यक्तं हि तत्। शिष्टं समानं पूर्वेण। अत उक्तरूपविलक्षणं यद्वैष्णवरूपमस्त्येतद्वर्पो रूपमस्मदस्माकं मापगूहः अपगूढं संवृतं मा कुरु। गुहू संवरणे। अपि तु तदेव रूपं प्रकटय। वैष्णवस्य रूपस्य गूहने का प्रसक्तिरिति चेत्। यद्यस्मादन्यरूपो रूपांतरमेव धारयन् समिथे संग्रामे बभूथ अस्माकं सहायो भवसि तस्मादिदं गूहनं न कार्यमिति। प्रशंसापक्षे तु हे विष्णो ते तव तन्नाम किं परिचक्ष्यं भूत् किं प्रख्यापनीयं भवति। न प्रख्यापनीयम्। किं तन्नाम। शिपिविष्टो रश्मिभिराविष्टोऽस्मीति यन्नाम प्रब्रूषे। यत एवं प्रख्यातरूपस्त्वमतोऽस्माकमेतद्वैष्णवं रूपं संवृतं मा कार्षीः। इदानीं गूढरूपोऽपि यद्यस्मात्त्वं समिथे संग्रामेऽन्यरूपः कृत्रिमरूपः यदन्यद्वैष्णवं रूपं शौर्यादिलक्षणं तादृग्रूप एव बभूथ भवसि तस्मात्त्वं गूढोऽपि ज्ञायस एवेति व्यर्थमेव तस्य रूपस्य गूहनम्। अतो बहुतेजस्कं यद्वैष्णवं रूपं तदस्माकं प्रदर्शयेति तात्पर्यार्थः॥

७. व्याख्यातेयम् (९९. ७.)। अक्षरार्थस्तु। हे विष्णो तुभ्यं आस्यात् आस्येन वषट्करोमि। वषट्कृतं तन्मदीयं हविः हे शिपिविष्ट सेवस्व। शोभनस्तुतिरूपा मदीया वाचश्च त्वां वर्धयंत्विति। शिष्टः पादः सिद्धः॥

इति पंचमस्य षष्ठे पंचविंशो वर्गः॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये पंचमाष्टके षष्ठोऽध्यायः समाप्तः॥

---

## 101.

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरम् ॥

अथ सप्तमो व्याख्यास्यते । सप्तममंडलस्य षष्ठेऽनुवाक एकादश सूक्तानि व्याख्यातानि । तिस्रो वाच इति षडृचं द्वादशं सूक्तम् । अत्रानुक्रम्यते । तिस्रः षट् पार्जन्यं त्विति । एते कुमार आग्नेयोऽपश्यद्वसिष्ठ एव वेति वक्ष्यमाणत्वादग्निपुत्रः कुमार ऋषिर्वसिष्ठो वा । अनुक्तत्वात्त्रिष्टुप् । इदमुत्तरं च पर्जन्यदेवत्यम् । अत्र शौनकः ।

आस्यदघ्नं विगाह्यापः प्राङ्मुखः प्रयतः शुचिः ।
सूक्ताभ्यां तिस्रआदिभ्यामुपतिष्ठेत भास्करम् ॥
अनश्नंस्तज्जपेद्धव्यं वृष्टिकामेन यत्नतः ।
पंचरात्रेऽप्यतिक्रांते महतीं वृष्टिमाप्नुयात् ॥

१. ऋषिरात्मानं स्तुतौ प्रेरयति । हे ऋषे तिस्रः त्रिविधा ऋग्यजुःसामात्मिकाः स्तुतिरूपा वाचः प्र वद प्रब्रूहि । कीदृश्यो वाचः । ज्योतिरग्राः ज्योतिर्द्योतमानः प्रणवः अग्रे प्रमुखो यासां तादृशीः । या वाचः मधुदोघं मधुन उदकस्य दोहकं वृष्ट्युदकस्य कर्तारं एतत् नभसि दृश्यमानं ऊधः उद्धतं मेघं यद्वा लुप्तोपममेतत् ऊध इव पयस आश्रयभूतं मेघं दुह्रे दुहते दुहेर्लटि लोपस्त आत्मनेपदेष्विति तलोपः बाहुलकाद्रुट् स्तोत्रैः प्रीतो हि पर्जन्यो मेघैर्वर्षयति अतो वाच एव दुहंतीत्युपचर्यते । यद्वा वदेति व्यत्ययेन मध्यमः । तिस्र इति द्रुतविलंबितमध्यमभेदेन त्रिविधाः ज्योतिरग्राः विद्युत्प्रमुखा वाचः प्रवदतेति । या गर्जितलक्षणा वाचः वृष्टिप्रदमेतं मेघं दुह्रे उदकानि दुहंति । एवंभूतः स च पर्जन्यो वत्सं सह निवसंतं वैद्युताग्निं कृण्वन् प्रादुष्कुर्वन् तमेव ओषधीनां व्रीह्यादीनां च गर्भं कुर्वन् सद्यः शीघ्रं जातः प्रादुर्भूतो वृषभो वर्षिता सन् रोरवीति भृशं शब्दायते ॥

२. यः पर्जन्य ओषधीनां वर्धनो वर्धयिता । यश्च अपामुदकानां वर्धकः । यश्च देवो द्योतमानः पर्जन्यो विश्वस्य सर्वस्य जगत ईशे ईष्टे लोपस्त आत्मनेपदेष्विति तलोपः अधीगर्थेति कर्मणि शेषत्वेन विवक्षिते षष्ठी अनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः यद्वृत्तान्नित्यमिति निघातप्रतिषेधः । स पर्जन्यः त्रिधातु त्रिभूमिकं शरणं गृहं शर्म सुखं च यंसत् यच्छतु अस्मभ्यं ददात्वित्यर्थः । यमेर्लेट्यडागमः सिब्बहुलमिति सिप् इतश्च लोप इतीकारलोपः । तथा त्रिवर्तु त्रिष्वृतुष्वतिशयेन वर्तमानम् । श्रूयते हि । त्रीणि वा आदित्यस्य तेजांसि वसंते प्रातर्ग्रीष्मे मध्यंदिने शरद्यपराह्ण इति । एवंविधं स्वभिष्टि स्वभ्येषणं ज्योतिस्तेजश्च अस्मे अस्मभ्यं प्रयच्छतु ॥

३. त्वदिति तकारांतोऽन्यशब्दपर्यायोऽनुदात्तः सर्वनामसु पठितः । अस्य पर्जन्यस्य त्वत् अन्यद्रूपं स्तरीः निवृत्तप्रसवा गौः सा यथा न दोग्ध्री तद्वद्रूपकं न भवति । उ इति पूरकः द्वितीय उशब्दश्चार्थे । त्वत् अन्यच्च रूपं सूते धेनुवत्प्रसूते उदकानि

प्रवर्षति । एष पर्जन्यः तन्वं स्वकीयं शरीरं यथावशं यथाकामं स्तरीत्वेन धेनुत्वेन च चक्रे करोति । अपि च पितुर्दिवः सकाशात् पयः वृष्ट्युदकं माता पृथिवी प्रति गृभ्णाति प्रतिगृह्णाति हृग्रहोर्भ इति भत्वम् । प्रतिगृहीतेन तेन हविरात्मना परिणतेन पिता द्युलोको वर्धते । तेनैवोदकेन पुत्रः पृथिव्यां भवः प्राणिसंघोऽपि वर्धते ॥

(P. 152.) ४. यस्मिन्पर्जन्ये विश्वानि भुवनानि सर्वाणि भूतजातानि तस्थुः तिष्ठंति । यदधीनवृत्तीनि भवंतीत्यर्थः । यस्मिंश्च द्यावो द्युप्रभृतयो लोका अवतिष्ठंते । यस्माच्च आपस्त्रेधा सस्रुः प्राच्यः प्रतीच्योऽवाच्यश्च सत्यो निर्गच्छंति उपसेचनासः उपसेक्तारः त्रयः पौरस्त्यः प्रतीच्य उदीच्यश्चेति त्रिप्रकाराः कोशासो मेघा विरप्शं महांतं पर्जन्यमभितः परितः मध्वः कर्माणि षष्ठी मधु उदकं श्चोतंति क्षारयंति वर्षंति ॥

५. इदं वचो वचनं स्तोत्रं स्वराजे स्वायत्तदीप्तये पर्जन्याय क्रियते । एतच्च हृदस्तदीयस्य हृदयस्य अंतरं अंतर्गतमस्तु । स च तत्स्तोत्रं जुजोषत् सेवताम् । जुषी प्रीतिसेवनयोः लेट्यडागमच्छांदसः शपः श्लुः । मयोभुवः सुखस्य भावयित्र्यो वृष्टयः अस्मे अस्माकं तत्प्रसादात् संतु भवंतु । तथा देवगोपाः देवः पर्जन्यो गोपायिता रक्षिता यासां तथाविधाः ओषधीरोषधयश्च सुपिप्पलाः सुफला अस्माकं भवंतु ॥

६. स पर्जन्यः शश्वतीनां बह्वीनामोषधीनां रेतोधाः रेतस उदकस्य बीजभूतस्य धाता विनिधाता भवति वृषभ इत्युपमा यथा कश्चिद्वृषभो बह्वीनां गवां गर्भस्याधाता भवति तद्वत् । अतस्तस्मिन् पर्जन्ये जगतो जंगमस्य तस्थुषः स्थावरस्य च आत्मा देहो वर्तते । तत्पर्जन्येन दत्तं ऋतं उदकं मा मां शतशारदाय शतसंवत्सरजीवनार्थं पातु रक्षतु । माशब्दस्य ऋत्यक इति प्रकृतिभावो ह्रस्वत्वं च । अन्यद्गतम् ॥

इति पंचमस्य सप्तमे प्रथमो वर्गः ॥

---

## 102.

पर्जन्यायेति तृचं त्रयोदशं सूक्तं गायत्रम् । पूर्ववदृषिदेवते । तथा चानुक्रांतम् । पर्जन्याय तृचं गायत्रमिति । वैश्वानरपार्जन्यायामन्वारंभणीयायां पार्जन्यस्य चरोः पर्जन्यायेत्यनुवाक्या । सूत्र्यते हि । पर्जन्याय प्र गायत प्र वाता वांति पतयंति विद्युत इति ॥

१. हे स्तोतारः पर्जन्याय देवाय प्र गायत प्रकर्षेण स्तोत्रमुच्चारयत । कीदृशाय । दिवोऽन्तरिक्षस्य पुत्राय । तत्र हि पर्जन्यः प्रादुर्भवति । मीळ्हुषे सेक्त्रे । स तादृशः पर्जन्यो नोऽस्मभ्यं यवसं ओषध्यादिलक्षणमन्नं दातुमिच्छतु ॥

२. यः पर्जन्य ओषधीनां व्रीह्यादीनां गवां अर्वतां अर्वतीनां पुरुषीणां नारीणां च

यः पर्जन्यो गर्भं प्रसूतिहेतुं बीजं उदकरूपं कृणोति करोति तस्मै पर्जन्यायेत्युत्तरत्र संबंधः ॥

(P. 153.) ३. तस्मा इत् तस्मा एव पर्जन्याय आस्ये देवानामास्यभूते अग्नौ मधुमत्तमं रसवत्तमं हविर्जुहोत जुहुत हे ऋत्विजः । स च पर्जन्यो नोऽस्मभ्यं इळामन्नं संयतं सम्यक् नियतं यथा भवति तथा करत् करोतु ददात्विति यावत् ॥

इति पंचमस्य सप्तमे द्वितीयो वर्गः ॥

---

## 103.

संवत्सरमिति दशर्चं चतुर्दशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं आद्या त्वनुष्टुप् । मंडूका देवता । तथा चानुक्रांतम् । संवत्सरं दश पर्जन्यस्तुतिः संहृष्टान्मंडूकांस्तुष्टावाद्यानुष्टुबिति । वृष्टिकामेनैतत्सूक्तं जप्यम् ॥

१. अत्र निरुक्तम् । वसिष्ठो वर्षकामः पर्जन्यं तुष्टाव तं मंडूका अन्वमोदंत स मंडूकाननुमोदमानान् दृष्ट्वा तुष्टावेति । मंडूका मज्जूका मज्जनान्मदतेर्वा मोदतिकर्मणो मंदतेर्वा तृप्तिकर्मणो मंडयतेरिति वैयाकरणा मंड एषामोक इति वा मंडो मदेर्वा मुदेर्वा तेषामेषा भवतीति । व्रतचारिणः व्रतं संवत्सरसत्रात्मकं कर्म आचरंतो ब्राह्मणा लुप्तोपममेतत् एवंभूता ब्राह्मणा इव संवत्सरं शरत्प्रभृति आ वर्षर्तोरेकं संवत्सरं शशयानाः शिश्यानाः वर्षणार्थं तपश्चरंत इव बिल एव संतः एते मंडूकाः पर्जन्यजिन्वितां पर्जन्येन प्रीतां यया वाचा पर्जन्यः प्रीतो भवति तादृशीं वाचं प्रावादिषुः प्रवदंति ॥

२. दिव्याः दिवि भवा आपः दृतिं न दृतिमिव शुष्कं नीरसं सरसी महत्सरः सरसी गौरादिलक्षणो ङीष् सरस्यां सुपां सुलुगिति सप्तम्या लुक् ईदूतौ च सप्तम्यर्थे इति प्रगृह्यसंज्ञा महति सरसि निर्जले घर्मकाले शयानं निवसंतं एनं मंडूकगणं यद्यदा आयन् अभिगच्छंति तदा अत्रास्मिन्वर्षणे पर्जन्ये वा सति वत्सिनीनां वत्सयुक्तानां गवां न मायुः गवां शब्द इव मंडूकानां वग्नुः शब्दः समेति संगच्छते । यथा वत्सैः संगतासु गोषु महान् घोषो जायते तद्वद्दृष्टे पर्जन्ये महान् कलकलशब्दो जायत इत्यर्थः । अहेति पूरकः ॥

३. उशतः कामयमानान् तृष्यावतः तृष्णावत एनान्मंडूकान् प्रावृषि वर्षर्तौ आगतायामागते सति यद्यदा अभ्यवर्षीत् पर्जन्यो जलैरभिषिंचति ईमिति पूरणः तदानीं अख्खलीकृत्य अख्खल इति शब्दानुकरणं अख्खलशब्दं कृत्वा पुत्रः पितरं न पितरमिव अन्यो मंडूको वदंतं शब्दयंतमन्यं मंडूकमुपैति प्राप्नोति ॥

४. एनोरेनयोर्द्वयोर्मंडूकयोरन्यो मंडूकोऽन्यं मंडूकमनुगम्य गृभ्णाति गृह्णाति । अपां उदकानां प्रसर्गे प्रसर्जने वर्षणे सति यद्यदा अमंदिषातां हृष्टावभूताम् । यद्यदा च अभिवृष्टः पर्जन्येनाभिषिक्तः कनिष्कन् स्कंदेर्यङ्लुगंतस्य रूपं भृशं स्कंदन् उत्प्लवं कुर्वन् पृश्निः पृश्निवर्णो मंडूको हरितेन हरितवर्णेनान्येन मंडूकेन वाचं संपृंक्ते संयोजयति । उभावप्येकविधं शब्दं कुर्वाते । तदानीमन्योऽन्यमनुगृभ्णातीत्यन्वयः ॥

५. हे मंडूकाः यद्यदेषां युष्माकं मध्ये अन्यो मंडूकोऽन्यस्य मंडूकस्य वाचं वदति अनुवदति अनुकरोति शिक्षमाणः शिक्ष्यमाणः शिष्यः शाक्तस्येव शक्तिमतः शिक्षकस्य वाचं यथानुवदति तद्वत् यद्यदा च सुवाचः शोभनवाचो यूयं सर्वे अप्सु वृष्टेषूदकेषु अधि उपरि प्लवंतो वदथन वदत शब्दं कुरुत तत्तदेषां युष्माकं सर्वं पर्व परुष्मत् शरीरं समृधेव समृद्धमेवाविकलावयवमेव भवति । इवशब्दोऽवधारणे । घर्मकाले मृद्भावमापन्ना मंडूकाः पुनर्वर्षणे सत्यविकलांगाः प्रादुर्भवंतीत्यर्थः ॥

इति पंचमस्य सप्तमे तृतीयो वर्गः ॥

(P. 154) ६. एषां मंडूकानां मध्ये एको मंडूको गोमायुः गोर्मायुरिव मायुः शब्दो यस्य तादृशो भवति । एकः अन्यो मंडूकः अजमायुरजस्य मायुरिव मायुर्यस्य तादृशो भवति । एकः पृश्निः पृश्निवर्णः । एकोऽपरो हरितो हरितवर्णः । एवं विश्वरूपा नानारूपा अपि समानमेकं मंडूका इति नाम बिभ्रतो धारयंतः पुरुत्रा बहुषु देशेषु वाचं वदंतः शब्दं कुर्वंतः पिपिशुः अवयवीभवंति प्रादुर्भवंति । पिश अवयवे । पुरुशब्दादेवमनुष्येत्यादिना त्राप्रत्ययः ॥

७. रात्रिमतीत्य वर्तत इत्यतिरात्रः अतिरात्रे न सोमे यथातिरात्राख्ये सोमयागे ब्राह्मणासो ब्राह्मणाः रात्रौ स्तुतशस्त्राणि पर्यायेण शंसंति हे मंडूकाः द्वितीयो नशब्दः संप्रत्यर्थे न संप्रति पूर्णं सरः अभितः सर्वतः वदंतः रात्रौ शब्दं कुर्वाणा यूयं तदहः तद्दिनं परि ष्ठ परितः सर्वतो भवथ । यदहः प्रावृषीणं प्रावृषेण्यं प्रावृषि भवं बभूव तस्मिन्नहनि वर्तमाना भवथेत्यर्थः ॥

८. सोमिनः सोमयुक्ताः परिवत्सरीणं सांवत्सरिकं गवामयनिकं ब्रह्म स्तुतशस्त्रात्मकं कृण्वंतः कुर्वंतो ब्राह्मणासः लुप्तोपममेतत् ब्राह्मणा इव वाचं शब्दमक्रत अक्रुषत इमे मंडूकाः । अपि च घर्मिणो घर्मेण प्रवर्ग्येण चरंतोऽध्वर्यवः अध्वरस्य नेतार ऋत्विज इव सिष्विदानाः स्विद्यद्गात्राः गुह्याः घर्मकाले बिलेऽभिगूढाः केचित् केचन मंडूकाः न संप्रति वृष्टौ सत्यां आविर्भवंति जायंते ॥

९. नरो नेतार एते मंडूकाः देवहितिं देवैः कृतं विधानं अस्यर्तोरयं धर्म इत्येवंरूपं जुगुपुः गोपायंति काले काले रक्षंति । अत एव द्वादशस्य द्वादशमासात्मकस्य संवत्सरस्य ऋतुं तं तं वसंतादिकं न प्र मिनंति न हिंसंति । स्तुतेरनुमोदनेन तत्तत्काले वृष्टिहेतवो भवंतीत्यर्थः । संवत्सरे संपूर्णे प्रावृषि वर्षतौ आगतायां आगते सति घर्माः पूर्वं घर्मकाले वर्तमानाः तप्तास्तापेन पीडिताः संप्रति विसर्गं विसर्जनं बिलान्मोचनमश्नुवते प्राप्नुवंति ॥

१०. गोमायुः गोरिव मायुः शब्दो यस्य तादृशो मंडूको वसूनि धनानि नोऽस्मभ्यं अदात् ददातु । अजमायुश्च अदात् ददातु । हरितो हरितवर्णश्च अदात् ददातु । पृश्निः पृश्निवर्णश्च अदात् ददातु । तथा सहस्रसावे सहस्रसंख्याका ओषधयः सूयंत उत्पद्यंत इति वर्षर्तुः सहस्रसावः तस्मिन् सति सर्वे मंडूकाः गवां शतान्यपरिमिता गाः ददतोऽस्मभ्यं प्रयच्छंतः आयुर्जीवनं प्र तिरंते प्रवर्धयंतु ॥

इति पंचमस्य सप्तमे चतुर्थो वर्गः ॥

## 104.

(P. 155) इंद्रासोमेति पंचविंशत्यृचं पंचदशं सूक्तं वसिष्ठस्यार्षम्। आद्याः षड् जगत्यः सप्तमी जगती त्रिष्टुप् वा अष्टादश्येकविंशीत्रयोविंश्यो जगत्यो ऽन्त्या प्रतिचक्ष्वेत्यनुष्टुप् शिष्टाश्चतुर्दश त्रिष्टुभः। नवमीद्वादशीत्रयोदश्यः सोमदेवत्याः एकादशी देवदेवत्या अष्टमीषोडश्याविंद्रदेवताके सप्तदशी ग्रावदेवत्या अष्टादशी मरुद्देवताका दशमीचतुर्दश्यावग्निदेवताके प्र वर्तयेत्याद्याः पंचर्च इंद्रदेवताकाः। मा नो रक्ष इति त्रयोविंश्याः पूर्वो ऽर्धर्चो वसिष्ठस्य प्रार्थनापरः अतस्तद्देवताकः उत्तरो ऽर्धर्चः पृथिव्यंतरिक्षदेवत्यः। शिष्टानां रक्षोहणाविंद्रासोमौ देवता। तथा चानुक्रांतम्। इंद्रासोमा पंचाधिकैंद्रासोमं राक्षोघ्नं शापाभिशापप्रायं षट् सप्त वाद्या जगत्य एकविंशीत्रयोविंश्यौ चाष्टादशी मारुती च दशमीचतुर्दश्यावाग्नेय्यौ दैव्येकादश्यंत्यानुष्टुप् नवमी द्वादशी त्रयोदशी सौम्यः सप्तदशी ग्राव्ण्यष्टमीषोडश्यावैंद्र्यौ प्र वर्तयेति पंचैंद्र्यो मा नो रक्ष इत्यृषेरात्मन आशीरुत्तरो ऽर्धर्चः पृथिव्यंतरिक्षदेवत इति। अत्र बृहद्देवतायामनुक्रम्यते।

संवत्सरं तु मंडूकानैंद्रासोमं परं तु यत्।
ऋषिर्ददर्श रक्षोघ्नं पुत्रशोकपरिप्लुतः।
हते पुत्रशते क्रुद्धः सौदासैर्दुःखितस्तदा॥

अतो रक्षोनिबर्हणार्थमेतत्सूक्तं जाप्यम्॥

१. हे इंद्रासोमा इंद्रश्च सोमश्च इंद्रासोमौ देवताद्वंद्वे चेति पूर्वपदस्यानङ् आमंत्रिताद्युदात्तत्वं रक्षो रक्षांसि जातावेकवचनं युवां तपतं संतापयतं आमंत्रितं पूर्वमविद्यमानवदित्यविद्यमानवत्त्वात् तपतमिति तिङंतस्य निघाताभावः तथा उब्जतं हिंस्तं उब्जतिर्हिंसाकर्मा तिङः परत्वान्निघाताभावः हे वृषणा वृषणौ कामानां वर्षितारौ न्यर्पयतं रक्षांसि नीचैर्दुःखं प्रापयतम्। तमोवृधः तमसा आवरकेण अंधकारेण मायारूपेण वर्धमानान् तमसि रात्रौ वर्धमानान्वा अचितः ज्ञानरहितान्मूढान्राक्षसान् पराशृणीतं पराङ्मुखा यथा भवंति तथा हिंस्तम्। तथा न्योषतं नितरां दहतं उष दाहे हतं तान्मारयतम्। नुदेथां अस्मत्तो हतांस्तान् प्रेरयेथाम्। अत्रिणः अदनशीलांस्तान्राक्षसान्नि शिशीतं नितरां तनूकुरुतम्॥

२. हे इंद्रासोमौ अघशंसं अघस्यानर्थस्य शंसितारं अघमागत्य हंतारं राक्षसं सं सहैव अभीति श्रुतेर्योग्यक्रियाध्याहारः अभिभवतम्। स च तपुः युवयोस्तेजसा तप्यमानो राक्षसः अग्निवानिव अग्नियुक्तः अग्नौ प्रक्षिप्तः चरुरिव ययस्तु यसु प्रयत्ने केवलो ऽप्ययमाङ्पूर्वार्थे द्रष्टव्यः आयस्यतु आयासं प्राप्नोतु उपक्षीयतामित्यर्थः। अपि च ब्रह्मद्विषे ब्राह्मणेभ्यो ऽस्मभ्यं द्विष्टे क्रव्यादे क्रव्यं मांसं भक्षयित्रे घोरचक्षसे घोरदर्शनाय परुषभाषिणे वा किमीदिने किमिदानीमिति चरते पिशुनाय द्वेषः द्वेष्यभावं अनवायं अव्यवायं अनवयवं नैरंतर्येण यथा भवति तथा धत्तं दत्तम्॥

३. हे इंद्रासोमौ दुष्कृतो दुष्कर्मकारिणो राक्षसान् वव्रे वारके अंतर्मध्ये ऽनारंभणे आलंबनरहिते तमस्यंधकारे प्र विध्यतं प्रवेश्य ताडयतम्। यथा येन प्रकारेण एषां मध्ये एकश्चन एको ऽपि राक्षसः अतः अस्मात्तमसः पुनर्न उदयत् उद्गच्छेत् तथा

विध्यतमित्यर्थः । एतेर्लेट्यडागमः इतश्च लोप इतीकारलोपः गुणायादेशौ । तत्प्रसिद्धं मन्युमत्क्रोधयुक्तं वां युवयोः शर्धो बलं सहसे रक्षसामभिभवनाय अस्तु भवतु ॥

४. हे इंद्रासोमौ दिवोऽंतरिक्षात् द्युलोकाद्वा वधं हननसाधनमायुधं संवर्तयतं उत्पादयतम् । पृथिव्याः अस्मादपि लोकात्तर्हणं हिंसकमायुधं अघशंसाय अघशंसमनर्थस्याशंसकं राक्षसं हंतुमुत्पादयतम् । तथा पर्वतेभ्यः पर्वतवद्भ्यो मेघेभ्यः सकाशात् स्वर्यं स्वृ शब्दोपतापयोः उपतापकं अशनिं उत्तक्षतं उद्धृतं कुरुतम् । येनाशनिना वावृधानं वर्धमानं प्रवृद्धं वा रक्षो राक्षसं निजूर्वथः निहथः जुर्वी हिंसायां तमशनिमुत्तक्षतमित्यर्थः ॥

५. हे इंद्रासोमौ दिवोऽंतरिक्षात्परितः सर्वतः वर्तयतं आयुधानि प्रेरयतम् । युवं तौ युवां अग्नितप्तेभिः अग्निना संतप्तैस्तपुर्वधेभिस्तापकप्रहारैः अजरेभिर्जरारहितैर्दृढैः अश्महन्मभिः अश्मसारभूतस्यायसो विकारैर्हननसाधनैस्तैरायुधैः अत्रिणो राक्षसस्य पर्शाने पार्श्वस्थाने नि विध्यतं निहतम् । ते च राक्षसा निःस्वरं निःशब्दं यंतु अपयंतु निर्गच्छंतु ॥

इति पंचमस्य सप्तमे पंचमो वर्गः ॥

(P. 156.) ६. हे इंद्रासोमौ इयमस्माभिः क्रियमाणा मतिर्मननीया स्तुतिर्वाजिना वाजिनौ बलवंतौ वां युवां विश्वतः सर्वतः परि भूतु परिगृह्णातु व्याप्नोतु वा । तत्र दृष्टांतः । कक्ष्या कक्षं बंधनी रज्जुः अश्वेव यथाश्वं परिगृह्णाति तद्वत् । यां होत्रां वाचं वां युवाभ्यां मेधया परिहिनोमि प्रेरयामि सेयं मतिरिति संबंधः । अपि च इमा इमान्यस्माभिः कृतानि ब्रह्माणि स्तोत्राणि धनैः पूरयंति तथा जिन्वतं फलैः पूरयतम् ॥

७. हे इंद्रासोमौ तुजयद्भिः त्वरमाणैः एवैर्गंतृभिरश्वैः प्रति स्मरेथां अभिगच्छतं उपसर्गवशेनात्र स्मरतिरत्रार्थांतरे वर्तते यथा प्रस्मरणं प्रस्थानमिति । अभिगत्य च द्रुहो द्रोग्धॄन् भंगुरावतः भंजनकर्मवतः रक्षसो राक्षसान् हतं हिंस्तम् । हे इंद्रासोमौ दुष्कृते पापकारिणे राक्षसाय सुगं सुखं मा भूत् मा भवतु । द्रुहा द्रोहेण युक्तो यो नोऽस्मान् कदाचिदपि अभिदासति अभिहंति तस्मै दुष्कृत इत्यन्वयः ॥

८. पाकेन पक्केन शुद्धेन मनसा चरंतं वर्तमानं सत्यवादिनं यो मां राक्षसः अनृतेभिरनृतैः असत्यैर्वचोभिर्वचनैः अभिचष्टे अभिशंसति मय्यसत्यवाचमारोपयति हे इंद्र काशिना मुष्टिना संगृभीता सम्यक् गृहीताः आप इव यथा आपो विशीर्णा भवंति तथा असतोऽसत्यस्य वक्ता स राक्षसः असन्नस्तु अविद्यमानो भवतु नश्यत्वित्यर्थः ॥

९. ये राक्षसाः पाकशंसं परिपक्ववचनं सत्यभाषिणं मां एवैः एतव्यैः प्राप्तव्यैः आत्मीयैः कामैर्हेतुभूतैर्विहरंते विशेषेण हरंति उपक्षयंति यथाकामं परिवदंतीत्यर्थः । ये वा स्वधाभिर्बलैर्युक्ताः भद्रं कल्याणवर्तनं मां दूषयंति दुष्टं कुर्वंति तान् सर्वान् सोमः अहये वा सर्पाय वा प्रददातु निर्ऋतेः पापदेवतायाः उपस्थे उत्संगे वा आ दधातु प्रक्षिपतु ॥

१०. हे अग्ने यो राक्षसः नोऽस्माकं पित्वोऽन्नस्य रसं सारं दिप्सति जिघांसति यश्च अश्वानामस्मदीयानां रसं दिप्सति यश्च गवां रसं दिप्सति यश्च तनूनामस्मदीयानां शरीराणां रसं दिप्सति रिपुर्बाधकः स्तेनश्चौरः स्तेयकृत् धनस्यापहर्ता स सर्वो

जनः इभ्रं हिंसां एतु प्राप्नोतु । अपि च स बाधकः तन्वा स्वकीयेन शरीरेण तना च तनयेन च नि हीयतां निहीनो भवतु ॥

इति पंचमस्य सप्तमे षष्ठो वर्गः ॥

(P. 157.) ११. स राक्षसः तन्वा तना च व्यत्ययेन तृतीया तन्वाः शरीरस्य तनयस्य च परः परस्तादस्तु वर्तमानो भवतु उभाभ्यां विमुक्तो भवत्वित्यर्थः । विश्वा व्याप्तास्तिस्रः पृथिवीः त्रीन् लोकान् अधो ऽस्तु अधस्ताद्भवतु । लोकत्रयादपि प्रच्युतो भवत्वित्यर्थः । हे देवाः अस्य शत्रोः यशोऽन्नं कीर्तिर्वा प्रति शुष्यतु यो राक्षसो नोऽस्मान् दिवा अहनि दिप्सति जिघांसति यश्च न रात्रौ नक्तं जिघांसति अस्यैवंभय-विधस्य यशः प्रतिशुष्यत्विति संबंधः ॥

१२. प्रायेणेमाभिर्ऋग्भी राक्षसेन सह ऋषिणा शपथः क्रियते । अत्र केचिदाहुः ।

हत्वा पुत्रशतं पूर्वं वसिष्ठस्य महात्मनः ।
वसिष्ठं राक्षसोऽसि त्वं वासिष्ठं रूपमास्थितः ॥
अहं वसिष्ठ इत्येवं जिघांसू राक्षसोऽब्रवीत् ।
अत्रोत्तरा ऋचो दृष्टा वसिष्ठो न इति श्रुतम् ॥

चिकितुषे विदुषे जनाय इदं सुविज्ञानं विज्ञातुं सुशकं भवति । किं तत् । सच्च सत्यं च असच्च असत्यं च । वचसी सत्यासत्यरूपे वचने पस्पृधाते मिथः स्पर्धेते । तयोः सदसतोर्मध्ये यत्सत्यं यथार्थं वचनं यतरत् यच्च ऋजीयः ऋजुतमं अकुटिलं तदित् तदेव अकुटिलं सत्यं भाषणं सोमोऽवति रक्षति । असत् उक्तविलक्षणमसत्यं हंति हिनस्ति । एवं सति आवयोर्मध्ये कतरोऽनृतभाषीति विद्वद्भिः सुविज्ञानमित्यर्थः ॥

१३. वृजिनं पापकारिणं राक्षसं सोमो देवः न वा उ न खलु हिनोति प्रेरयति । गच्छ त्वमिति न मुंचति । तथा क्षत्रियं क्षत्रं बलं तद्वंतं मिथुया मिथ्याभूतं वचनं धारयंतं बिभ्रतमसत्यवादिनं पुरुषं न च हिनोति न विसृजति । अपि तु रक्षो राक्षसं हंति । असत् असत्यं वदंतं च हंति हिनस्ति । उभौ राक्षसानृतवादिनौ तौ सोमेन हतौ इंद्रस्य संबंधिनि प्रसितौ बंधने शयाते निवसतः । यद्वा इंद्रस्येति तृतीयार्थे षष्ठी । इंद्रेणेश्वरेण सोमेन प्रसितौ बद्धौ षिञ् बंधने अस्मात्कर्माणि निष्ठा गतिरनंतर इति गतेः प्रकृतिस्वरत्वम् ॥

१४. यदि वा अहं अनृतदेवः अनृता असत्यभूताः देवा यस्य तादृशो यद्यहं आस अस्मि । अथवा मोघं वा निष्फलं वा देवान् अप्यूहे उपगच्छामि । अहं यदि उक्तरूपोऽस्मि हे अग्ने तर्हि मां बाधस्व न ह्यहं तथाविधोऽस्मि । एवं सति हे जातवेदः जातानां वेदितरग्ने अस्मभ्यं किंकारणं हृणीषे क्रुध्यसि तव क्रोधोऽस्मासु न जायतां इत्यर्थः । द्रोघवाचः अनृतवाचो राक्षसास्ते तव निर्ऋथं निःपूर्वोऽर्तिर्हिंसायां वर्तते निर्ऋथं निःशेषेणार्तिं हिंसां सचंतां सेवंताम् ॥

१५. इयमपि शपथरूपैव । यद्यहं वसिष्ठो यातुधानो राक्षसोऽस्मि अद्य अस्मिन्नेव

दिने मुरीय म्रियेय। अपि वा पुरुषस्य मनुष्यस्य आयुर्जीवितं यद्यहं राक्षसो भूत्वा ततप हिंसितवानस्मि तर्ह्यद्यहमद्य म्रियेयेत्यन्वयः। अधा अथैवं स्यात् अहं वसिष्ठस्त्वं राक्षस इति तर्हि स त्वं दशभिर्वीरैः पुत्रैः उपलक्षणमेतत् सर्वैर्बंधुजनैर्वि यूयाः वियुक्तो भवेः। यो राक्षसो मा मां मोघं मृषैव हे यातुधान हे राक्षस इति संबोध्याह॥

इति पंचमस्य सप्तमो वर्गः॥

(P. 158.) १६. यो राक्षसः मां अयातुं अराक्षसं संतं हे यातुधान हे राक्षसेति संबोध्य आह ब्रूते। यो वा यश्च रक्षाः राक्षसः शुचिरस्मि शुद्धो भवामि न राक्षसोऽस्मीत्याह ब्रूते तमुभयविधं राक्षसमिंद्रो महता प्रौढेन वधेनायुधेन वज्रेण हंतु हिनस्तु। स च विश्वस्य सर्वस्य जंतोर्जनस्य अधमो निकृष्टः सन् पदीष्ट पततु॥

१७. या राक्षसी नक्तं रात्रौ द्रुहा द्रोहेण युक्ता खर्गलेव उलूकीव प्र जिगाति प्रगच्छति। किं कुर्वती। तन्वं स्वकीयं शरीरं अप गूहमाना अपवृण्वती प्रकाशयंती सा राक्षसी अनंतान् अपर्यंतान् वव्रान् गर्तान् अव पदीष्ट अवाङ्मुखी पततु। ग्रावाणः सोमाभिषवार्थाः पाषाणाश्च उपब्दैः अभिषवशब्दैः रक्षसो राक्षसान् घ्नंतु हिंसंतु॥

१८. हे मरुतो यूयं विक्षु प्रजासु वि तिष्ठध्वं विविधं तिष्ठत। तत्र रक्षसान् हंतुमिच्छत अन्विच्छत। तदनंतरं रक्षसस्तान्राक्षसान् गृभायत गृह्णीत। गृहीत्वा च सं पिनष्टन चूर्णयत। ये राक्षसा वयः पक्षिणो भूत्वी भूत्वा नक्तभिः रात्रिभिः रात्रिषु पतयंति आगच्छंति ये वा ये च देवे दीप्तेऽध्वरे यागे रिपो हिंसा दधिरे विदधिरे तान्राक्षासान् संपिनष्टनेत्यन्वयः॥

१९. हे इंद्र दिवोऽंतरिक्षात् अश्मानं अशनिं प्र वर्तय प्रेरय राक्षसान् हंतुम्। तथा सोमशितं सोमेन तीक्ष्णीभूतं यजमानं हे मघवन् धनवन्निंद्र सं शिशाधि संस्कुरु। अपि च प्राक्तात् प्राच्याः अपाक्तात् प्रतीच्याः अधरादवाच्याः उदक्तादुत्तरतः सर्वस्मादपि दिग्भागात् रक्षसो राक्षसान् पर्वतेन पर्वता वज्रेण अभि जहि मारय॥

२०. त्ये ते एते राक्षसाः श्वयातवः श्वभिः परिकरभूतैः हिंसंतः श्वभिः सह यांतो वा पतयंति पतंति ये दिप्सवो जिघांसवः संतः अदाभ्यं अहिंस्यमिंद्रं दिप्संति जिघांसंति तेभ्यः पिशुनेभ्यः पिशुनान् कपटान् हंतुं शक्रः शक्त इंद्रो वधं आयुधमशनिरूपं शिशीते तीक्ष्णीकरोति। यातुमद्भ्यो राक्षसेभ्यो नूनं क्षिप्रमशनिं सृजत् विसृजतु हननार्थम्॥

इति पंचमस्य सप्तमेऽष्टमो वर्गः॥

(P. 159.) २१. यातूनां हिंसकानां रक्षसां अयमिंद्रः पराशरः पराशातयिता हिंसिताभवत्। कीदृशानां हविर्मथीनां हवींषि मथ्नतां अभिमुखं आ विवासतां आगच्छताम्। अपि चायं शक्र इंद्रः वनं वृक्षजातं परशुर्यथा छिंदन् कुठार इव पात्रेव मृन्मयानि पात्राणि भिंदन् मुद्गर इव च सतः प्राप्तनामैतत् यदाह यास्कः तिरः सत इति प्राप्तस्यंति प्राप्तान्रक्षसो राक्षसान् भिंदन् हिंसन् अभ्येति अभिगच्छति। इदु पूरणौ॥

२२. उलूकयातुं उलूकैः परिकरभूतैः सह यातयति हिनस्तीति याति गच्छतीति

